यमकृन्नियमेन तपआदिकर्ता शनैः शनैः कामादिदोषनिवृत्त्या क्षेमाय पापनाशाय आत्मतत्त्वसाक्षात्काराय च कल्पते समर्थो भवति॥१२॥तपसेति द्वयम् ॥ तपसा कृच्छ्रादिना ब्रह्मचर्येण स्त्र्यादित्यागेन शमेन मनसो नियमेन दमेन बाह्येन्द्रियाणां निग्रहेण त्यागेन अन्नादिदानेन सत्येन यथार्थभाषणेन शौचेन स्नानादिना यमेन अहिंसादिसंकल्पेन नियमेन जपार्चनादिना च धर्मज्ञाः ज्ञातधर्मरहस्याः शास्त्रगुर्वादिश्रद्धानिष्ठाः धीराः सर्वतो विरक्ताः लब्धज्ञानाश्च सन्तो देहवाग्बुद्धिजं महदप्यघं पापं क्षिपन्ति नाशयन्ति । यथा अनलोऽग्निर्वेणूनां गुल्मं नाशयति दहतीत्यर्थः ॥ १३ ॥ १४ ॥ केचिदिति ॥ केचिद्वासुदेवपरायणाः केवलया तपआदिकमनपेक्षमाणया भक्त्या कात्स्न्र्येन समूलम-विद्यासहितमघं पापं धुन्वन्ति विनाशयन्ति । केचिदित्यनेनैवंभूता भक्तिप्रधाना विरला इति सूचयति । यथा भास्करो नीहारं नाशयति तथेत्यर्थः ॥ १५ ॥ नेति ॥ हे राजन् तत्पूरुषाः श्रीकृष्णभक्ताः तेषां निषेवा निरन्तरं सङ्गतिः तया कृष्णेऽर्पिताः तत्तद्विषयेभ्यः परावर्त्य तद्भजनोन्मुखीकृताः प्राणा इन्द्रियाणि येन सः पापकर्माणं मां शिक्षार्थं नरके पातयतु न वा स एव मे गतिरित्यात्मसमर्पणेन नरकप्रतीकारमप्यकुर्वन् शुद्धभक्तिमान् इत्यर्थः । पूर्वमघवान् महापातक्यपि यथा पूयेत शुद्ध्येत् तथा तप-

तपसा ब्रह्मचर्येण शमेन च दमेन च ॥ त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ १३ ॥ देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः ॥
क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः॥१४॥केचित्केवलया भक्त्या वासुदेवपरायणाः॥ अघं धुन्वन्ति कात्स्न्र्येन नीहारमिव भास्करः॥१५॥
न तथा ह्यघवान्राजन्पूयेत तपआदिभिः ॥ यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥१६॥ सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ॥ सु-
शीलाः साधवो यत्र नारायणपरायणाः॥१७॥प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ॥ न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः ॥१८॥
सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ॥ न ते यमं पाशभृतश्च तद्भटान्स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ १९ ॥

आदिभिर्न पूयेत ॥१६॥ सध्रीचीन इति ॥ हि निश्चितम् । लोके क्षेमः दुःखनिवर्त्तकः अकुतोभयः नास्ति कुतोऽपि विघ्नादेर्भयं यस्मिन् तथाविधः अयं शास्त्रप्रसिद्धः पन्थाः भक्तिमार्गः एव सध्रीचीनः समीचीनः । यत्र भक्तिमार्गे सुशीलाः साधवो नारायणपरायणाः जनाः साधका भवन्ति । सुशीलाः साधव इति अत्र ज्ञानमार्ग इव असहायतानि-मित्तं भयं न नापि कर्ममार्गवन्मत्सरतादिहेतुकं भयमिति भावः ॥ १७ ॥ अन्वयव्यतिरेकाभ्यां भगवद्भक्तिरेव पापप्रशमनीत्याह—प्रायश्चित्तानीति ॥ हे राजेन्द्र चीर्णान्यनु-ष्ठितानि बहून्यपि सर्वप्रकाराणि कर्ममयानि प्रायश्चित्तानि नारायणपराङ्मुखमेकमपि जनं न निष्पुनन्ति निश्शेषेण न पुनन्ति । यथा बहवोऽपि आपगा नद्यः एकमपि सुराकुम्भं न निष्पुनन्ति तथेति । भक्तिस्त्वन्यनिरपेक्षा पापशोधिकेति भावः । सुरेति महतामप्यशोधकत्वे दृष्टान्तः ॥ १८ ॥ नात्र भक्तेर्बाहुल्यमप्यपेक्षितमित्याह—सकृ-दिति ॥ तस्य कृष्णस्य गुणेषु रागि अनुरक्तं मनो यैः प्राणिभिरिह संसारे कृष्णपदारविन्दयोः सकृदपि निवेशितं ते हि यस्मात् चीर्णनिष्कृताः कृष्णे मनोनिवेशमात्रेण कृतप्रा-

यश्चित्ता भवन्ति अतः ते यमं पाशभृतस्तद्भटांश्च स्वप्नेऽपि न पश्यन्ति । कदाचिद्भक्तस्य दैवात् पापानां पुनःपुन्येऽप्युत्थानदंष्ट्रोरगदंशानामिव तेषामकिञ्चित्करत्वान्न भक्तिः कुञ्जरशौचाक्षेपयोग्या इति । "अपि चेत्सुदुराचारः" इत्यादिगीतोक्तेः ॥ १९ ॥ अत्रेति ॥ अत्र भक्तेः समूलपापनाशकत्वे पुरातनमिमं वक्ष्यमाणमितिहासं च पुराविद उदाहरन्ति दृष्टान्तेन वर्णयन्ति यत्र विष्णुयमयोर्दूतानां संवादोऽभूत् । तं मे मत्तस्त्वं निबोध जानीहि ॥ २० ॥ कान्यकुब्जे इति ॥ कान्यकुब्जे पुरे नाम्ना अजामिलो नाम दासीपतिः नष्टः सदाचारः सन्ध्यावन्दनादिर्यस्य दास्याः संसर्गेण दूषितः कश्चिद्द्विजः आसीत् ॥ २१ ॥ बन्दीति ॥ बन्दी शृङ्खलितजनना तया तद्ग्रहणेन अक्षैर्द्यूतैः कैतवैः वञ्चनादिभिः चौर्यैः परस्वापहारैश्च गर्हितां निन्दितां वृत्तिं जीविकामास्थितः अत एव अशुचिः सन् कुटुम्बं बिभ्रत् पुष्णन् देहिनः प्राणिनः यातयामास पीडयामास ॥ २२ ॥ एवमिति ॥ हे राजन् एवं दुराचारेण निवसतो वर्तमानस्य तस्याः दास्याः सुतान् लालयानस्य । मुग्धत्वात् आर्पः । प्रमत्तस्य अष्टाशीत्या सङ्ख्यया उपलक्षिताः समाः संवत्सराः एता-

अत्र चोदाहरन्तीममितिहासं पुरातनम् ॥ दूतानां विष्णुयमयोः संवादस्तं निबोध मे ॥ २० ॥ कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः ॥ नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥ बन्द्यक्षकैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थितः ॥ बिभ्रत्कुटुम्बमशुचिर्यातयामास देहिनः ॥ २२ ॥ एवं निवसतस्तस्य लालयानस्य तत्सुतान् ॥ कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषः समाः ॥ २३ ॥ तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ॥ बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥ स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ॥ निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ २५ ॥ भुञ्जानः प्रपिबन्खादन्बालकस्नेहयन्त्रितः ॥ भोजयन्पाययन्मूढो न वेदागतमन्तकम् ॥ २६ ॥ स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते ॥ मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥

वद्वर्षप्रमाणः आयुषः संबन्धी महान् कालोऽत्यगात् ॥ २३ ॥ तस्येति ॥ तस्य प्रवयसो वृद्धस्यापि दश पुत्रा जाताः । तेषां मध्ये तु योऽवमः कनिष्ठः अत एव बालो नाम्ना नारायणः स मातापित्रोर्भृशमत्यन्तं दयितः प्रियश्चासीत् ॥ २४ ॥ स इति ॥ कलभाषिणि मधुरवादिनि अर्भके बाले बद्धं हृदयं येन स जरठः वृद्धः स अजामिलः तस्य लीलां बालचेष्टां निरीक्षमाणो भृशं मुमुदे ॥ २५ ॥ भुञ्जान इति ॥ मूढः स भुञ्जानः प्रपिबन् खादन् चर्वन् यतो बालके स्नेहेन यन्त्रितः निबद्धहृदयः अतः स्वयं भोजनादि कुर्वंस्तमपि भोजनादि कारयन्नागतमन्तकं मृत्युं न वेद एतच्च तदुपलालनादिषु श्रीनारायणनामोच्चारणमाहात्म्येन तद्भक्तिरेवाभूदिति सिद्धान्तोपयोगित्वेनापि द्रष्टव्यम् ॥ २६ ॥ स इति ॥ एवं वर्तमानः अज्ञः बालकस्नेहेन यन्त्रितः वशीकृतः सः मृत्युकाले उपस्थिते प्राप्ते सति बाले नारायणाह्वये तनये मतिं चकार तस्य स्मरणं चकार ॥ २७ ॥

स इति युग्मम् ॥ पाशहस्तान् भृशदारुणान् वक्राणि तुण्डानि मुखानि येषां तान् ऊर्ध्वानि रोमाणि येषां तान् आगतान् त्रीन् पुरुषान् दृष्ट्वा व्याकुलेन्द्रियः विह्वलचित्तः सन् दूरे क्रीडनकेषु आसक्तं नारायणाह्वयं पुत्रं प्लावितेन प्लुतत्वं नीतेन उच्चैः स्वरेण हे नारायण इति सम्बोधनेन आजुहाव । अत्र कायिकवाचिकमानसभेदेन पापानां त्रित्वात्त्रयो याम्या भगवन्नाम्नश्चतुरक्षरत्वाच्चत्वारः पार्षदा आगताः ॥ २८ ॥ २९ ॥ निशम्येति ॥ हे महाराज तदा तस्य म्रियमाणस्य ब्रुवतः पुत्रस्नेहान्नारायणेति तमाकारयतः सतस्तद्भर्तुः स्वस्वामिनः सदृशं नाम निशम्य श्रुत्वा तस्य तद्धरिकीर्तनं मत्वा सहसा झटित्येव भगवत्पार्षदा आपतन् आययुः ॥ ३० ॥ विकर्षत इति ॥ अन्तर्हृदयाद्दासीपतिमजामिलं विकर्षतः निःसारयतो यमस्य प्रेष्यान् दूतान् मा एनं विकर्षथ यदि जीवितुमिच्छथेति वदन्तो विष्णुदूता ओजसा बलात्कारेण वारयामासुः ॥ ३१ ॥ ऊचुरिति ॥ तदा ते वैवस्वतस्य यमस्य पुरःसराः भृत्या एवं प्रतिषेधिताः सन्तो धर्मराजस्य धर्माधर्मनिर्णेतुर्यमराजस्य शासनमाज्ञां । तृन्नन्तयोगे द्वितीया । प्रति-

**स पाशहस्तांस्त्रीन्दृष्ट्वा पुरुषान्भृशदारुणान् ॥ वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ २८ ॥ दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ॥**
**प्लावितेन स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥ निशम्य म्रियमाणस्य ब्रुवतो हरिकीर्तनम् ॥ भर्तुर्नाम महाराज पार्षदाः सहसाऽपतन् ॥३०॥**
**विकर्षतोऽन्तर्हृदयाद्दासीपतिमजामिलम् ॥ यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥ ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरःसराः ॥ के यूयं**
**प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥ कस्य वा कुत आयाताः कस्मादस्य निषेधथ ॥ किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥३३॥**
**सर्वे पद्मपलाशाक्षा पीतकौशेयवाससः ॥ किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥ सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ॥ धनु-**
**र्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ ३५ ॥ दिशो वितिमिरालोकाः कुर्वन्तः स्वेन रोचिषा ॥ किमर्थं धर्मराजस्य किङ्करान्नो निषेधथ ॥ ३६ ॥**
**श्रीशुक उवाच ॥ इत्युक्ते यमदूतैस्तैर्वासुदेवोक्तकारिणः ॥ तान्प्रत्यूचुः प्रहस्येदं मेघनिर्हादया गिरा ॥ ३७ ॥**

षेद्धारो यूयं क इति तान् भगवत्पार्षदान् प्रत्यूचुः पप्रच्छुरित्यर्थः ॥ ३२ ॥ कस्येति ॥ कस्य भृत्याः कुतो वा देशादागताः कस्माद्धेतोरस्य नयनं निषेधथ यूयं किं देवा उपदेवाः यक्षगन्धर्वादयो वा किंवा सिद्धेषु सत्तमाः श्रेष्ठाः केचित् ॥ ३३ ॥ सर्व इति त्रयम् ॥ तत्र सर्व इत्यादि सार्धं स्पष्टम् । निषङ्ग इषुधिः धनुरादिभिः श्रीः शोभा येषां ते स्वेन रोचिषा प्रकाशेन विगतं तिमिरं विगतः आलोकः अन्यप्रकाशश्च यासु तथाभूता दिशः कुर्वन्तः सर्वे यूयं के तथा धर्माणां पालस्य यमस्य किङ्करान्नोऽस्मान् अस्य नयनं किमर्थं निषेधथ भवतां नोचितमिदमिति॥३४॥३५॥३६॥इतीति ॥ इत्येवमुक्तप्रकारेण यमदूतैरुक्ताः पृष्टास्ते वासुदेवोक्तकारिणो भगवदाज्ञानुसारिणस्तत्पार्षदाः अहो एतेऽस्मद्धिया स्वस्य धर्मराजकिंकरतां वदन्ति वस्तुतश्चोरा एवेत्याशयेन प्रहस्य मेघनिर्हादया मेघगर्जितवद्गम्भीरया गिरा इदं वक्ष्यमाणं तान् यमदूतान् प्रत्यूचुः ॥ ३७ ॥

यूयमिति ॥ यदि यूयं धर्मराजस्य निर्देशकारिणस्तर्हि यद्धर्मस्य तत्त्वं स्वरूपं यच्च धर्मस्य लक्षणं प्रमाणं तन्नोऽस्मान्प्रति ब्रूत ॥ ३८ ॥ कथमिति ॥ युष्माभिः कथंस्वित् केन प्रकारेण दण्डो ध्रियते अस्य दण्डस्य ईप्सितं योग्यं स्थानं विषयः कारणं वा किमस्ति । नृणां मध्ये कारिणः कर्मिणः । आवश्यके णिनिः । सर्वे एव किं दण्ड्या भवन्ति आहोस्वित्कतिचिदेव ॥ ३९ ॥ वेदेति ॥ वेदेन प्रणिहितः कर्तव्यत्वेनाभिप्रेतो यः स धर्मः इति धर्मस्य स्वरूपं प्रमाणं चोक्तम् । दण्डकथनायापृष्टस्याप्यधर्मस्य लक्षणमाहुः । अधर्म इति । तद्विपर्ययः वेदेन निषिद्धत्वेनाभिप्रेतो यः सः अधर्मः वेदस्य प्रामाण्ये हेतुमाहुः । वेद इति । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः"। इत्यादिश्रुतेः । वेदश्च साक्षात्स्वयम्भूः भगवतो विश्वासमात्रेण स्वयमनायासेन भवतीति साक्षान्नारायण एवेति शुश्रुम ॥ ४० ॥ कोऽसौ नारायण इति चेत्तत्राहुः—येनेति ॥ येन स्वधाम्नि स्वस्वरूपे अमी दृश्यमाना रजआदिगुणकार्यभूता भावाः प्राणिनः गुणनामादिभिर्यथायथं यथायोग्यं वर्णाश्रमाद्यधिकारिविभागपूर्वकं विभाव्यन्ते विरच्यन्ते स नारायणः तत्र

विष्णुदूता ऊचुः ॥ यूयं वै धर्मराजस्य यदि निर्देशकारिणः ॥ ब्रूत धर्मस्य नस्तत्त्वं यच्च धर्मस्य लक्षणम् ॥ ३८ ॥ कथं स्विद् ध्रियते दण्डः किं वाऽस्य स्थानमीप्सितम् ॥ दण्ड्याः किंकारिणः सर्वे आहोस्वित्कतिचिन्नृणाम् ॥ ३९ ॥ यमदूता ऊचुः ॥ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥ ४० ॥ येन स्वधाम्न्यमी भावा रजःसत्त्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥ सूर्योऽग्निः खं मरुद्गावः सोमः संध्याहनी दिशः ॥ कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिणः ॥ ४२ ॥ एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते ॥ सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥ संभवन्ति हि भद्राणि विपरीतानि चानघाः ॥ कारिणां गुणसङ्गोऽस्ति देहवान्न ह्यकर्मकृत् ॥ ४४ ॥

गुणाः शान्तत्वघोरत्वमूढत्वादयः नामानि ब्राह्मणक्षत्रियवैश्यादीनि क्रिया अध्ययनाध्यापनयज्ञानुष्ठानाद्याः रूपाणि द्विहस्तद्विपाच्चतुष्पादादीनि ॥ ४१ ॥ सूर्य इति ॥ अह्र्याद्यभिमानिनो देवा बाह्याः स्वप्रकाशाः मरुत्पवनः गावः वाचः तदधिष्ठात्री सरस्वती । पाठान्तरे । देवः अन्तर्यामी सोमः चन्द्रः अहनी अहश्च रात्रिश्च कम् उदकं कुः पृथ्वी धर्मः धर्माभिमानी देवः इत्येते दैह्यस्य जीवस्य धर्माधर्मसाक्षिणः निर्विकारित्वेन द्रष्टृत्वे सति यथावद्वक्तार इत्यर्थः ॥ ४२ ॥ दण्डस्य कारणमाहुः—एतैरिति॥ एतैः सूर्यादिसाक्षिभिर्विज्ञातः अधर्मो दण्डस्य स्थानं युज्यते कारणं सम्पद्यते । दण्ड्याः किङ्कारिणः सर्वे इत्याक्षेपस्योत्तरमाहुः । सर्व इति । सर्वस्यैकदा पापासंभवादेकदा दण्डानर्हत्वेऽपि क्रमेण पापसंभवात्सर्वे पापकारिणः क्रमेण दण्डमर्हन्ति ॥ ४३ ॥ सर्वेषां दण्ड्यत्वे हेतुः—संभवन्तीति ॥ हे अनघाः कारिणां भद्राणि पुण्यानि विपरीतानि पापानि च संभवन्ति । कुतः हि यस्मात् तेषां गुणसंयोगोऽस्ति सत्त्वादिगुणसंबन्धोऽस्ति अत एव कश्चिदपि देहवान् क्षणमपि अकर्मकृत् कायिकवाचनिकमानसिकव्यापारनिर्मुक्तो न तिष्ठति तथा च तत्तद्गुणोद्रेकानुसारेण सदा धर्माधर्मोत्प-

त्तिर्भवत्येव ॥ ४४ ॥ कथंस्वित् ध्रियते दण्ड इत्यस्योत्तरमाहुः—येनेति ॥ येन यावान् यत्प्रमाणकः यथा येन प्रकारेण धर्मोऽधर्मो वा समीहितः कृतः स एव नान्यस्तावत्प्रमाणकः तथा तत्तदवान्तरभेदभिन्नेन प्रकारेण तावत्प्रमाणकं तत्फलं सुखदुःखादिकममुत्र स्वर्गनरकादौ भुङ्क्ते । अत्र धर्मो वेति दृष्टान्तार्थः धर्मानुसारेण सुखमिव अधर्मानुसारेण दुःखमिति ॥ ४५ ॥ सूर्यादिवदर्थापत्तिरपि धर्माधर्मज्ञापिकेति सूचयन्तः सत्त्वादिगुणसङ्गः स्फुटमुपलभ्यतामित्याशयेनाहुः—यथेति ॥ हे देवप्रवराः यथेह जन्मनि भूतेषु प्राणिषु त्रैविध्यं शान्तघोरमूढत्वेन सुखित्वदुःखित्वतदुभयमिश्रितत्वेन वा धार्मिकत्वादिना वोपलभ्यते तेन च तदन्यथानुपपत्त्या तत्कारणं जन्मान्तरीयपुण्यपापादि कल्प्यते तथात्र गुणवैचित्र्येण धर्माधर्मादिषु प्रवृत्तिदर्शनात्तेनान्यत्र जन्मान्तरेऽपि सुखदुःखादिकमनुमीयते ॥ ४६ ॥ वर्त्तमानजन्मनैव पूर्वापरजन्मधर्माधर्मज्ञानं भवतीति सदृष्टान्तमाहुः—वर्त्तमान इति ॥ यथा वर्त्तमानो वसन्तादिकालः स्वगुणैः पुष्पफलादिभिरन्ययोर्भूतभाविनोर्वसन्तयोर्गुणानां पुष्पफलादीनामभिज्ञापकोऽनुमापकः एवमेतज्जन्माप्यन्ययोर्भूतभाविजन्मनोर्धर्माधर्मौ निदर्शयतीति तथा ॥ ४७ ॥ यमस्तु सर्वेषां धर्माधर्मादि स्वयमेव जानाति अतस्तदाज्ञयास्माकमागमनं योग्यमेवेत्याशयेनाहुः—मनसेति ॥ भगवान् सर्वज्ञः

**येन यावान्यथा धर्मोऽधर्मो वेह समीहितः ॥ स एव तत्फलं भुङ्क्ते तथा तावदमुत्र वै ॥ ४५ ॥ यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषु**
**गुणवैचित्र्यात्तथाऽन्यत्रानुमीयते ॥ ४६ ॥ वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ॥ एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ॥ ४७ ॥**
**मनसैव पुरे देवः पूर्वरूपं विपश्यति ॥ अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥ यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि ॥ न वेद**
**पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥ पञ्चभिः कुरुते स्वार्थान्पञ्च वेदाथ पञ्चभिः ॥ एकस्तु षोडशेन त्रीन्स्वयं सप्तदशोऽश्नुते ॥ ५० ॥**

अजश्च देवः ईश्वरः यमो वा पुरे प्राण्यन्तर्हृदये संयमन्यां वा स्थितो मनसैव तेषां पूर्वरूपं देवमनुष्यादिधर्माधर्मादियुक्तं पश्यति जानाति अनु अनन्तरमप्ययमीदृग्धर्माधर्मादिमानीदृग्रूपो भविष्यति अपूर्वं भाविरूपं च मनसैव मीमांसते विचारयति ॥ ४८ ॥ जीवस्त्वल्पज्ञो वर्त्तमानमात्रं पश्यतीत्याहुः—यथेति ॥ नष्टा जन्मपरम्परा स्मृतिर्यस्य स तमसा युक्तो व्याप्तः अज्ञः पश्वादिर्व्यक्तं वर्त्तमानमेव देहमुपास्तेऽहंममेतिभावेन यथेष्टाहारादिना सेवते पूर्वमपरं भूतं भाविनं च न वेद तथा मनुष्यादिरपीति शेषेणान्वयः । यद्वा । यथा तमसा निद्रया युक्तो जनः स्वप्नेऽपि व्यक्तमेव देहाद्युपास्ते न तु जाग्रद्देहादिपूर्वस्वप्नादिगतं वा तद्वत् नष्टा जन्मनां स्मृतिर्यस्य सः अज्ञः अविद्योपाधिर्जीवः व्यक्तं प्राचीनकर्मणाभिव्यक्तं वर्तमानमेव देहाद्युपास्ते अहमिति मन्यते पूर्वमपरं वा न वेद ॥ ४९ ॥ एवम्भूतस्य संसारं प्रपञ्चयति—पञ्चभिरिति ॥ षोडशेन मनसा सह सप्तदशः एकस्तु एक एव जीवः पञ्चभिर्वागादिभिः कर्मेन्द्रियैः स्वार्थान् स्वाभिलषितान्वचनशिल्पगतिविसर्गानन्दाख्यान् कुरुते । अथ तथा पञ्चभिः श्रोत्रादिभिर्ज्ञानेन्द्रियैः पञ्च शब्दस्पर्शरूपरसगन्धान् वेद जानाति । एवं स्वयमेक एव त्रीन् ज्ञानकर्मेन्द्रियमनोविषयानश्नुते भुङ्क्ते ॥ ५० ॥

तदिति ॥ तदेतत् महत् दुर्निवारं शक्तित्रयं सत्त्वादिगुणत्रयकार्यं षोडशकलं दशेन्द्रियाणि एकं मनः पञ्चतन्मात्राणि चेत्येवं षोडश कलाः अंशा यस्मिंस्तत् लिङ्गं सूक्ष्मशरीरं धर्माधर्मानुष्ठानद्वारा पुंसि जीवे अन्वनु भूयो भूयः सत्वोद्रेके हर्षः रजउद्रेके शोकः तमउद्रेके भयमित्येवं हर्षादिप्रदां संसृतिं देवमनुष्यादियोनिं धत्तं विधत्ते ॥ ५१ ॥ देहीति ॥ अज्ञः न जितः पञ्च ज्ञानेन्द्रियाणि एकं मनश्च एवं षड्वर्गो येन स देही नेच्छन् कर्मानुष्ठानेच्छारहितोऽप्यनेन सङ्गेन बलात्कर्माणि कार्यते अत एव तेन कारितेन कर्मणात्मानमाच्छाद्य प्रतिरुद्धय मुह्यति । यथा कोशकारः कीटविशेषः स्वमुखविनिःसृतैः तन्तुभिः कोशं निर्माय स्थापित स्वनिर्गमाय स्थलमपि सावशेषयति तदा तस्मिन् कोशे संनिरुद्धय मुह्यति म्रियते च तथा जीवोऽपि कर्मभ्यो निर्गमोपायं न जानाति तत्फलं च भुङ्क्ते ॥ ५२ ॥ न हीति ॥ हि यस्मात् कश्चिदपि प्राणी क्षणमपि जातु कदाचित् अपि अकर्मकृत् कायिकवाचनिकमानसान्यतमव्यापाररहितो न तिष्ठति । अतो हि निश्चितमेतत् स्वाभाविकैः स्वतःसिद्धैः पूर्वकर्मसंस्काररागद्वे-षादिरूपेण परिणतैः गुणैः सत्वादिभिरेवायमवशोऽपि बलात्कर्म कार्यते ॥ ५३ ॥ लब्ध्वेति ॥ अव्यक्तमदृष्टं पुण्यपापात्मकं निमित्तं लब्ध्वा उत एव कश्चित् यथायोनि

तदेतत्षोडशकलं लिङ्गं शक्तित्रयं महत् ॥ धत्तेऽनु संसृतिं पुंसो हर्षशोकभयार्तिदाम् ॥ ५१ ॥ देह्यज्ञोऽजितषड्वर्गो नेच्छन्कर्माणि कार्यते ॥ कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ५२ ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥ कार्यते ह्यवशः कर्म गुणैः स्वाभाविकै-र्बलात् ॥ ५३ ॥ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ॥ यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ५४ ॥ एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः ॥ आसीत्स एव न चिरादीशसङ्गाद्विलीयते ॥ ५५ ॥ अयं हि श्रुतसंपन्नः शीलवृत्तगुणालयः ॥ धृतव्रतो मृदुर्दान्तः सत्यवान्मन्त्रवि-च्छुचिः ॥ ५६ ॥ गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहंकृतः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥ ५७ ॥

मातृसदृशं क्वचित् यथाबीजं पितृसदृशं क्वचिदुभयसदृशं च स्त्रीरूपं पुरुषरूपं वा तत्रापि व्यक्ताव्यक्तं स्थूलं सूक्ष्मं वा बलीयसा प्रबलेन स्वभावेन सत्वादिगुणकार्येण शान्तत्वघोरत्वादिना विशिष्टं शरीरं भवति ॥ ५४ ॥ एष इति ॥ पुरुषस्य जीवस्य प्रकृतिसङ्गेन मायया स्वरूपावरणेन एष विपर्ययः देहेन्द्रियाद्यात्माध्यासेन स्वानन्दाद्य-भिभवपूर्वकदुःखित्वादिलक्षण आसीत् । स ईशसङ्गात् भगवद्भजनात् भगवद्भक्तादिसङ्गात् वा भगवत्कृपया मायानिवृत्त्या नचिरात् शीघ्रमेव विलीयते नान्यथा ॥ ५५ ॥ अयमिति ॥ अयमजामिलः पूर्वं श्रुतसम्पन्नः अधीतवेदः शीलं शुद्धभावः वृत्तं सदाचारः गुणाः क्षमादयः तेषाम् आलयः धृतव्रतः कृतजपपूजादिनियमः मृदुः कोमलचित्तः दान्तः जितेन्द्रियः सत्यवाक् मन्त्रवित् शुचिः शुद्धदेहश्चासीत् ॥ ५६ ॥ गुर्वीति ॥ तथा गुर्वादीनां शुश्रूषुः सेवकः अग्निसेवा होमः अतिथिसेवा भोजनादि सम्माननं गुरूणां वृद्धानां च सेवा तदाज्ञानुसारित्वं परिचर्यादिकं च निरहङ्कृतः एवं सर्वसाधनपरत्वेऽपि तत्राहं करोमीत्यहङ्काररहितः सर्वभूतसुहृत् कृपयैव सर्वप्राणिहित-

कारी साधुः परलोकसाधनतत्परः मितवागल्पभाषी वृथालापरहितः अनसूयकः परेषु दोषारोपोऽसूया तद्रहितः आसीत् ॥ ५७ ॥ एकदेति ॥ एकदासौ द्विजः पितृसन्देशकृत् तदाज्ञाकारी तदाज्ञया फलाद्यानयनार्थं वनं यातः ततो वनात्फलान्यादाय गृहीत्वा आवृत्तः परावृत्तः ॥ ५८ ॥ ददर्शेति युग्मम् ॥ स च मार्गे मैरेयं मधु पैष्टीं सुरां पीत्वा तन्मदेनाघूर्णिते भ्रान्ते नेत्रे यस्याः तया अत एव मत्तया यथावदनुसन्धानरहितया अत एव विशेषेण श्लथन्ती नीवी यस्यास्तया भुजिष्यया साधारणभोगस्त्रिया दास्या सह क्रीडन्तं व्यपेतं स्वाचाराद् भ्रष्टं निरपत्रपं निर्लज्जम् अस्या अन्तिके समीपेऽनया सहानुगायन्तं हसन्तं च कंचित्कामिनं शूद्रं ददर्श ॥ ५९ ॥ ६० ॥ दृष्ट्वेति ॥ कामलिप्तेन कामोद्दीपकागरुचन्दनादिना लिप्तेन शूद्रस्य बाहुना परिरम्भितामाश्लिष्टां तां दृष्ट्वा सहसैव प्रारब्धवशादयं विमोहितः सन् हृच्छयस्य कामस्य वशं जगाम ॥ ६१ ॥ स्तम्भयन्निति ॥ यावत्सत्त्वं यावद्धैर्यं यथाश्रुतं यावच्छास्त्रज्ञानं तावत्तद्बलेनात्मानं मनः आत्मना स्वबुद्ध्या स्तम्भयन्नपि मदनेन कामेन वेपितं कम्पितं मनः समाधातुं न शशाक न

एकदाऽसौ वनं यातः पितृसंदेशकृद्द्विजः ॥ आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८॥ ददर्श कामिनं कंचिच्छूद्रं सह भुजिष्यया ॥
पीत्वा च मधु मैरेयं मदाघूर्णितनेत्रया ॥५९॥ मत्तया विश्लथन्नीव्या व्यपेतं निरपत्रपम् ॥ क्रीडन्तमनुगायन्तं हसन्तमनयाऽन्तिके ॥६०॥ दृष्ट्वा
तां कामलिप्तेन बाहुना परिरम्भिताम् ॥ जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥ स्तम्भयन्नात्मनात्मानं यावत्सत्त्वं यथाश्रुतम् ॥ न
शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥ तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः ॥ तामेव मनसा ध्यायन्स्वधर्माद्विरराम ह ॥ ६३ ॥
तामेव तोषयामास पित्र्येणार्थेन यावता ॥ ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥ विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम् ॥
विससर्जाचिरात्पापः स्वैरिण्याऽपाङ्गविद्धधीः॥६५॥यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम्॥ बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम्॥६६॥

शक्तोऽभूत् ॥ ६२ ॥ तदिति ॥ तत्तस्यादर्शनमेव निमित्तं यस्य तस्य स्मरव्याजस्य वस्तुतस्तु प्रारब्धरूपस्य ग्रहस्य तेन ग्रस्तोऽत एव विचेतनः कर्तव्याकर्तव्यानुसन्धानशून्यः केवलं तां स्त्रियमेव मनसा ध्यायन् स्वधर्माद्विरराम । तया रममाणः स्वधर्माद् भ्रष्टो बभूव । एतेन बुद्धिपूर्वकबहुपापाभ्यासाद्रक्षानर्होऽपि नामाभासमात्रेणापि निष्पापो वैकुण्ठं जगामेति धर्मज्ञानभक्तीनामुत्तरोत्तरं प्राबल्यं दर्शितम् ॥ ६३ ॥ तदिति ॥ यावता समग्रेण पित्र्येण पित्रार्जितेनार्थेन तामेव दासीं तोषयामास । यथा ग्राम्यैर्मनोरमैः कामैर्विषयैः सा प्रसीदेत । तदर्थः । तथा अचेष्टतेति शेषः॥६४॥विप्रामिति ॥ स्वैरिण्या इति भिन्नं पदम् । स्वैरिण्या तया अपाङ्गैर्विद्धा धीर्यस्य सः पापः अप्रौढां नवयौवनां महति कुले लम्भितां तस्याः पित्रा विचार्यैव दत्ताम् इत्यर्थः । विप्रां स्वभार्याम् अचिरात् दासीसंबन्धसमकाल एव विससर्ज त्यक्तवान् ॥ ६५ ॥ यत इति ॥ मन्दधीः अयं यतस्ततः न्यायतः प्रतिग्रहादेः अन्यायतः चौर्यादिनापि धनमानिन्ये तेनास्याः कुटुम्बिन्याः कुटुम्बं बभार पुपोष ॥ ६६ ॥

यदिति ॥ यद् यस्मादसौ शास्त्रमुल्लङ्घ्य स्वैरचारी निरङ्कुशत्वेन वर्त्तमानः अत एव आर्यैः वृद्धैर्गर्हितः अघायुः अघं पापं तदर्थमेवायुर्जीवनं यस्य सः अत एव मलात् रागादिदोषादशुचिश्च सन् चिरं कालमवर्त्तत । यद्वा । मलमेव तदीयोच्छिष्टादिकमत्तीति मलात् ॥ ६७ ॥ तत इति ॥ ततस्तस्मात् कृतकिल्बिषं न कृतो निर्वेशः प्रायश्चित्तं येन तमेनं दण्डपाणेर्यमस्य सकाशं समीपं नेष्यामः । यत्र दण्डेन शुद्ध्यति शुद्धो भवति इत्यर्थः । तेनास्यैव हितार्थं नयनमतो वारणं न युक्तम् ॥ ६८ ॥ इति श्रीकृष्णमेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य प्रथमे निरमादिमाम् ॥ १ ॥ द्वितीयेऽजामिलो विष्णोर्नाममाहात्म्यतः शुचिः ॥ तस्य लोकं गतस्तत्र श्लोका नन्दप्रगोर्भयः ॥ अनुष्टुभस्तु भूवांणी उवाचेति चतुर्थ्यम् ॥ २ ॥ एवमिति ॥ हे राजन् नये प्रायश्चित्तादिनिर्णये कोविदाः पण्डिताः ते भगवद्दूताः एवं यमदूतानामभिभाषितमुपधार्य तात्पर्यपूर्वकं श्रुत्वा अथानन्तरमेव तान्प्रत्युत्तरमाहुः ॥ १ ॥ अहो धर्मराजस्य धर्मराजतैव विपरीता जातेत्याहुः । अहो इति । अहो महाकष्टं प्राप्तं कुतः यतो धर्मदृशां धर्माधर्मविवेकिनामपि

यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यार्यगर्हितः ॥ अवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥ तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् ॥ नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यति ॥ ६८ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे अजामिलोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ एवं ते भगवद्दूता यमदूताभिभाषितम् ॥ उपधार्याऽथ तान्राजन्प्रत्याहुर्नयकोविदाः ॥ १ ॥ विष्णुदूता ऊचुः ॥ ॥ अहो कष्टं धर्मदृशामधर्मः स्पृशते सभाम् ॥ यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥ प्रजानां पितरो ये च शास्तारः साधवः समाः ॥ यदि स्यात्तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥ यद्यदाचरति श्रेयानितरस्तत्तदीहते ॥ स यत् प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ ४ ॥ यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ॥ स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥

सभामधर्मः स्पृशते । तत्रार्थः । यत्र सभायां यैर्धर्मद्रष्टृभिरेव यमादिभिरपापेषु अत एवादण्ड्येषु दण्डानर्हेषु वृथा दण्डो ध्रियते ॥ २ ॥ प्रजानामिति ॥ ये च प्रजानां पितरः पितृवद्वात्सल्येन पालकाः शास्तारः गुरुवत्सन्मार्गशिक्षकाः साधवो हिताचरणेनेष्टसाधकाः समाः सर्वत्र स्वसुखदुःखसाम्यदर्शिनः एवं शास्त्रतो लोके प्रसिद्धाः यमादयस्तेषु यदि वैषम्यं पूर्वोक्तवैपरीत्यं प्रजापीडकत्वं धर्मशिक्षौदासीन्यमहितकारित्वं परदुःखानभिज्ञत्वं च स्यात्तदा प्रजाः कं शरणमाश्रयं यान्ति प्राप्नुयुः ॥ ३ ॥ यदिति ॥ श्रेयान् धर्मज्ञतया श्रेष्ठत्वेनाभिमतः यद्यदाचरति इतरः अज्ञोऽपि तदाचारं दृष्ट्वा तत्तदेवेह ते करोति स श्रेष्ठो यत् शास्त्रं प्रमाणं कुरुते अन्योऽपि लोकः प्राणी तत् शास्त्रमनुवर्त्तते अनुसरति प्रमाणीकरोति ॥ ४ ॥ विश्वासघातित्वमपीत्याहुः—यस्येति ॥ यस्य श्रेष्ठत्वेनाभिमतस्याङ्के उत्सङ्गे शिर आधाय लोकः प्राणी निर्वृतः निश्चिन्तः स्वपिति स धर्मपालनं करोतु अधर्मं वा करोतु तत् स्वयं न वेद । यथा पशुः स्वस्वामिनि कृतविश्वासः स्वपिति स पालनं करिष्यति हननं वा तन्न जानाति तथेत्यर्थः ॥ ५ ॥

स इति ॥ सः प्रमाणभूतः अत एव भूतानां विश्रम्भणीयः विश्वसनीयः सघृणः परक्लेशदर्शने द्रवीभूतचित्तश्चेत् तदा कृतमैत्रं कृतविश्वासं विश्वासेन नितरामर्पित आत्मा येन तम् अचेतनमज्ञं कथं द्रोग्धुमर्हति अतो यमः सदयश्चेत्पीडयितुं नार्हति ॥ ६ ॥ नन्वकृतप्रायश्चित्तस्यास्य शोधनार्थमेव दण्डो दीयते न तत्र निर्घृणतेति चेत् तत्राहुः—अयं हीति ॥ अयं ह्यजामिलः न केवलमेतज्जन्मपापानाम् अपि तु जन्मकोटीनां यान्यंहांसि पापानि तेषामपि कृतो निर्वेशः प्रायश्चित्तं येन तादृशोऽस्ति । यत् यस्मात् विवशोऽप्ययं स्वस्त्ययनं मोक्षस्यापि साधनं नतु प्रायश्चित्तमात्रं हरेर्नाम व्याजहार उच्चारितवान् ॥७॥ एतेनेति ॥ यदासौ पूर्वं भोजनादिकाले हे नारायण आय आगच्छेति अस्पष्टभाषया-पि चतुरक्षरं नाम जगाद उच्चारितवान् । आयेत्याङ्पूर्वादय गतावित्यस्माल्लोट् तङभाव आर्षः । तदैवैतेन पुत्रोपचरितनाम्नैवास्याघोनोऽघवतः । मम्प्रमारणमार्षम् । अनेकजन्म-सञ्चितस्याघस्य निष्कृतं प्रायश्चित्तं कृतं स्यात् । यद्वा । यत् आ इति च्छेदः । आ ईषदाभासमात्रं चतुरक्षरं यन्नाम जगाद एतेनैव केवलेन अघनिष्कृतं कृतं स्यादिति । ननु "यस्य स्मृत्या च नामोक्त्या तपोदानक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥" इत्याद्युक्तेः कर्मसाद्गुण्याय हरेर्नामेति युक्तं स्वातन्त्र्येणाघनिवर्तकं

स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम् ॥ विश्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥ अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ॥ यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥ एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ॥ यदा नारायणायेति जगाद चतुरक्षरम् ॥ ८॥ स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः ॥ स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥ ९ ॥ सर्वेषामप्यघवतामिदमेव सुनि-ष्कृतम् ॥ नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥

तु तत्कथमिति चेत् खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्यादित्यादिवत्संयोगपृथक्त्वन्यायेन प्रायश्चित्तार्थत्वमपि युक्तम् । एकस्योभयत्र विनियोगः संयोगपृथक्त्वं तेन स्वातन्त्र्येण कर्माङ्गत्वेन च हरिनाममाहात्म्यं पापं नाशयतीति । "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥" इत्यादिभिः पुराणे तावत्सहस्रशो नाम्नः स्वातन्त्र्यमवगम्यते न चैतेऽर्थवादा इति शङ्कनीयं विधिशेषत्वाभावात् । न च विध्यश्रवणादन्यशेषता कल्पनीया यदाग्नेयोऽष्टाकपालो भवतीत्यादिवत् स्वतन्त्रप्राप्तार्थत्वेन[1] विधिकल्पनोपपत्तेः । मन्त्रेषु च "मर्त्या अमर्त्यस्य ते भूरिनाम मनाम हे विप्रासो जातवेदसः आस्य जानन्तो नाम चिद्विवक्त" इत्यादिषु नामस्तपोदाना-दिसर्वधर्माधिक्यमवगम्यते । उपपादितं च मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यम् । देवताधिकरणे तस्माच्छ्रीनारायणनामाभासमात्रेणैव सर्वाघनिष्कृतं कृतं स्यात् ॥ ८ ॥ स्तेन इति युग्मम् ॥ यः स्तेनः ब्राह्मणस्वर्णहर्ता इत्यादिकः ये च अपरे पातकिनः तेषां सर्वेषामपि अघवताम् इदं विष्णोर्नामव्याहरणं नामोच्चारणमेव सुनिष्कृतं श्रेष्ठं प्रायश्चित्तम् । यतो नामव्याहरणात् तद्विषया सेव्यतया भगवद्विषया पुरुषस्य मतिर्भवति । यद्वा । तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति

[1] रागादिभिरप्राप्तार्थत्वेन ।

भगवतो मतिर्भवति ॥ ९ ॥ १० ॥ नेति ॥ यथा उदाहृतैः मनोनिवेशराहित्येनाप्युच्चारितमात्रैः हरेर्नामपदैः नमामीत्यादिक्रियानिरपेक्षैरेव अघवान् पापी विशुद्ध्यति तथा ब्रह्मवादिभिर्मन्वादिभिरुदितैर्विहितैर्व्रतादिभिर्निष्कृतैः प्रायश्चित्तैर्न विशुद्ध्यति । यतः तन्नामपदोच्चारणम् उत्तमश्लोकस्य महायशस्विनो भगवतो ये गुणा ऐश्वर्या-दयस्तेषामुपलम्भकं प्रकाशकं भवति न त्वन्यव्रतवत्पापनिवृत्तिमात्रोपक्षीणम् ॥ ११ ॥ नैकान्तिकमिति ॥ तत्प्रायश्चित्तानन्तरं नैकान्तिकमत्यन्तशोधकं न भवति कुतः हि यस्मात्तस्मिन्निष्कृते प्रायश्चित्ते कृतेऽपि पुनः असत्पथे पापमार्गे मनो धावति अत्यन्तशुद्धौ तन्न स्यादिति भावः । चेत् यद्येवं तत्तदा कर्मणां पापानां निर्हारमात्यन्तिकं नाशमिच्छतां हरेर्गुणानुवाद एव खलु निश्चयेन प्रायश्चित्तं यतोऽसौ सत्वभावनः पापमूलाविद्यानाशकत्वादत्यन्तान्तःकरणशोधकः ॥ १२ ॥ अथेति ॥ यत् यस्मादसौ म्रियमाणो भगवन्नाम समग्रहीत् संपूर्णमुच्चारितवान् नामैकदेशेनाप्यलमिति भावः । म्रियमाण इत्यनेन पुनः पापान्तरासम्भव उक्तो न तु तत्काल[illegible] विवक्षितं मरणकाले कृच्छ्रादिविधिवन्नामोच्चारणविधेरप्यसम्भवात् । न च विधिं विना काकतालीयनामोच्चारणं पापापहमिति प्रमाणमस्ति । अथ तस्मात् कृतम[illegible]नां निष्कृतं प्राय-

**न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुध्यत्यघवान् व्रतादिभिः ॥ यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥ नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ॥ यत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥ १२ ॥ अथैनं मापनयत कृताशेषाघनिष्कृतम् ॥ यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥ सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ॥ वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥ पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ॥ हरिरित्यवशेनाह पुमान् नार्हति यातनाम् ॥ १५ ॥**

श्चित्तं येन तमेनमपमार्गेण मा नयत ॥ १३ ॥ ननु नायं भगवन्नामाग्रहीत् किंतु पुत्रनामवातः कथं तेन पापनिवृत्तिरित्याशङ्क्याहुः—साङ्केत्यमिति ॥ साङ्केत्यं पुत्रादौ सङ्केतः । स्वार्थे ष्यञ् । सर्वत्र तृतीयार्थे प्रथमा । सङ्केतादिभिरपीत्यर्थः । पारिहास्यं प्रीतिगर्भमेव न तु निन्दागर्भम् । भो विख्यातकीर्ते कृष्ण दृष्टा तव मर्यादा गसोत्सव इति परि-हासेन कृतं स्तोभं गीतालापपूरणार्थं कृतं हेलनं योऽह्यनेककोटिब्रह्माण्डानि धत्ते तेन कृष्णेन गोवर्द्धनोद्धारे कः श्रमः कृतः स्यात् मम भाग्यमेवेदृग्धरिणा किं कर्त्तव्यमिति मर्यादागर्भेण हेलया कृतं नतु निन्दागर्भितं तथा सति "निन्दां भगवतः शृण्वन्" इत्याद्युक्तनिन्दाश्रवणादिदोषप्रसङ्गात् । यद्वा । हेलया गिरिरुद्धृत इतिवत् प्रयत्नराहित्येन अबुद्धिपूर्वकं यदृच्छया कृतमिति वैकुण्ठस्य भगवतो नाम्नां ग्रहणमुच्चारणमशेषाणि वासनापर्यन्तानि समूलानि अघानि पापानि हरतीति तथा विदुः शास्त्ररहस्यज्ञा जानन्ति ॥ १४ ॥ साङ्केत्यादिभ्योऽन्यत्र वैवश्येऽपि पापनाशमाह—पतित इति ॥ पतितः प्रासादादिभ्यः स्खलितो मार्गे भग्नो भग्नगात्रः संदष्टः सर्पादिभिः तप्तो ज्वरादिना आहतो दण्डादिना अत एवावशेन वेदनादिवशेनापि यः पुमान् हरिरित्याह स यातनां नार्हति पुमानित्यनेन नात्र वर्णाश्रमादिनियमः किंतु प्राणिमात्रमधिकारीति सूचितम् ॥ १५ ॥

१ मरणकाले नामोच्चारः कार्य इति विधिकल्पनं न विवक्षितमित्यर्थः ।

नन्वु महतः पापस्य महदेव प्रायश्चित्तं युक्तं न त्वल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत् तत्राहुः—गुरूणामिति ॥ गुरूणां पापानि गुरूणि प्रायश्चित्तानि लघूनां च पापानां लघूनि प्रायश्चितानि महर्षिभिः ज्ञात्वा विचार्योक्तानि अतस्तत्र तथैव व्यवस्था । हरिनाम्नस्तु नेयं व्यवस्था। "विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैः।" इत्युक्तेः ॥ १६ ॥ किञ्च—तैरिति ॥ अतस्तैस्तपोदानजपादिभिः प्रायश्चित्तैस्तान्येवाघानि पूयन्ते नश्यन्ति । पूङ् विनाशे । अधर्मजम् अधर्मानुष्ठानाज्जातं तद्धृदयं तेषाम् अघानां हृदयं सूक्ष्मरूपं संस्काराख्यं तु न नश्यति। ईशाङ्घ्रिसेवया श्रवणादिभगवद्भक्त्या तु तदपि नश्यति । अयं भावः । महान्त्यपि पापानि सकृदुच्चारितेनैव नाम्ना दीपेन गाढध्वान्तानीव निवर्त्तन्ते तदावृत्त्या तु पापान्तरस्यानुत्पत्तिः दीपधारण इव तमोन्तरस्य ततश्च वासनाक्षयाद्धृदयशुद्धिः पापक्षयश्च भवति एतदर्थमेव तत्र तत्रावृत्तिविधानम् । " स्मरतां तमहर्निशम् " इत्यादौ अत्रापि " गुणानुवादः खलु सत्वभावनः " इत्यादि । अतोऽजामिलस्य हरिनाम्नैव सर्वपापक्षयः । वासनाक्षयस्तु महापुरुषदर्शनादिभिरिति ॥ १७ ॥ अज्ञा-

गुरूणां च लघूनां च गुरूणि च लघूनि च ॥ प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥ १६ ॥ तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः ॥ नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥ अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ॥ संकीर्तितमघं पुंसो दहेदेधो यथाऽनलः ॥ १८ ॥ यथागदं वीर्यतममुपयुक्तं यदृच्छया ॥ अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोप्युदाहृतः ॥ १९ ॥ श्रीशुक उवाच ॥ त एवं सुविनिर्णीय धर्मं भागवतं नृप ॥ तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २० ॥ इति प्रत्युदिता याम्या दूता यात्वा यमान्तिकम् ॥ यमराज्ञे यथासर्वमाचचक्षुररिंदम ॥ २१ ॥

नादिति ॥ सर्वपापप्रायश्चित्तमिदमिति ज्ञानादथवा अज्ञानादपि यदुत्तमश्लोकस्य भगवतो विष्णोर्नाम संकीर्त्तितं तत्पुंसः कीर्त्तयतः प्राणिनोऽघं पापं दहेदेवेति । यथा बालेनाज्ञानादपि काष्ठराशौ प्रक्षिप्तोऽग्निस्तं दहेदेवेति ॥ १८ ॥ नन्विदं पर्षदनुपदिष्टं श्रद्धाहीनं चेति कथं प्रायश्चित्तं स्यात्तत्राहुः—यथेति ॥ यथा वीर्यतमं वीर्यवत्तमम् । अर्शआद्यजन्तात्तमप् । अगदमौषधं यदृच्छयाऽकस्मादेव तत्प्रभावज्ञानाभावाच्छ्रद्धाहीनेनाप्युपयुक्तं भक्षितं सत्तस्याजानतोऽप्यात्मगुणमारोग्यं बलपुष्ट्यादिकं च कुर्यादेव तथा नामात्मको मन्त्रोऽप्युदाहृतः उच्चारितः आत्मगुणं पापनिवृत्तिं कुर्यादेव नहि वस्तुशक्तिः श्रद्धामपेक्षते न च नाममाहात्म्यवादाः अर्थवादत्वान्न स्वार्थे प्रमाणानीति वाच्यम् । " अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः । स पापिष्ठो मनुष्याणां नरके पतति स्फुटम् ॥ " इत्यादिभिरर्थवादत्वकल्पने दोषात् ॥१९॥ ते इति ॥ हे नृपते भगवत्पार्षदाः भागवतं धर्मं सुष्ठु युक्तिपूर्वकं निर्णीय बलात्कारेण तं विप्रं याम्यपाशान्निर्मुच्य मृत्योर्देहवियोगलक्षणादप्यमूमुचन् मोचयामासुः॥ २० ॥ इतीति ॥ हे अरिन्दम प्रत्युदिता निराकृता यमसंबन्धिनो दूता यमस्यान्तिकं समीपं यात्वा गत्वा तस्मै यमराजाय तत्सर्वमाचचक्षुः कथयामासुः । तङभाव आर्षः । यमराज्ञे यथा सर्वमिति पाठे टजभाव आर्षः ।

यथा यथावत् ॥ २१ ॥ द्विज इति ॥ द्विजोऽजामिलो यमपाशाद्विनिर्मुक्तोऽत एव गतभीर्निर्भयोऽत एव प्रकृतिं स्वस्थचित्ततां गतः तेषां विष्णुदूतानां दर्शनेन उत्सवो यस्य सः तान्विष्णोः किंकरान् शिरसा ववन्दे ॥ २२ ॥ तं विवक्षुमिति ॥ हे अनघ महापुरुषस्य भगवतः किङ्कराः तदानीं तस्यायुःशेषतया भगवत्पदनयनस्यायुक्तत्वात्तं विवक्षुं किंचिद्वक्तुमिच्छन्तमभिप्रेत्य ज्ञात्वा तस्य पश्यत एव सतस्तत्रैव ते सहसा अकस्मादेवान्तर्दधिरे न च शिष्टायुषस्तस्य मध्य एव कथं यमदूता ग्रहणे प्रवृत्ता इति शङ्कनीयम् पापिनामकालेऽपि मरणसम्भावनया भ्रान्त्या तत्र प्रवृत्तिः स एव समयो मरणकालत्वेनोपचरितः वस्तुतः पापक्षयादायुर्भङ्गाभाव इति ॥ २३ ॥ अजामिल इति युग्मम् ॥ अजामिलोऽपि यमकृष्णयोर्दूतानां संवादे कृष्णदूतेभ्यो भागवतं शुद्धं धर्मं तथा यमदूतेभ्यस्त्रैविद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयमविद्वत्कर्तृकं संसारफलकं धर्मं प्रायश्चित्ताद्यात्मकं चाकर्ण्य श्रुत्वा अथ हरेर्माहात्म्यश्रवणाद्धेतोः आशु भगवति भक्तिमानासीत् आत्मनः अशुभं स्मरतस्तस्य महाननुताप आसीत् ॥ २४ ॥ २५ ॥ अहो इति ॥ येन

द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः ॥ ववन्दे शिरसा विष्णोः किंकरान् दर्शनोत्सवः ॥ २२ ॥ तं विवक्षुमभिप्रेत्य महापुरुषकिंकराः ॥ सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ॥ २३ ॥ अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः ॥ धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥ २४ ॥ भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ॥ अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २५ ॥ अहो मे परमं कष्टमभूदविजितात्मनः ॥ येन विप्लावितं ब्रह्म वृषल्यां जायतात्मना ॥ २६ ॥ धिङ् मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ॥ हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ २७ ॥ वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ ॥ अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥ २८ ॥ सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ॥ धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥ २९ ॥ किमिदं स्वप्न आहोस्वित् साक्षाद्दृष्टमिहाद्भुतम् ॥ क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥ ३० ॥

मया वृषल्यां शूद्रयां जायता पुत्ररूपेण जायमानेन । आर्षः शता । आत्मना स्वेन ब्रह्म विप्लावितं ब्राह्मणत्वं नाशितं तस्य अविजितात्मनः अवशीकृतचित्तस्य मे मम परमं कष्टमभूत् महती हानिर्जाता ॥ २६ ॥ धिगिति ॥ अतः सद्भिर्विगर्हितं दुष्कृतं पापकर्त्तारं कुलस्य कज्जलं कलङ्कभूतं मां धिक्। योऽहं सतीं बालां हित्वा असतीं सुरापामगां गतवानस्मि ॥ २७ ॥ वृद्धाविति ॥ अहो अकृतज्ञेन पालनाद्युपकारं विस्मृतवता मया अधुना तत्क्षणमेव दासीसंबन्धसमय एव वृद्धौ तत्राप्यनाथौ रक्षकहीनौ नास्ति अन्यो बन्धुः पुत्रादिर्ययोस्तौ अत एव तपस्विनौ सन्तप्तौ मातापितरौ नीचवत् शूद्रान्त्यजादिवत् त्यक्तौ अनादृतौ ॥ २८ ॥ सोऽहमिति ॥ स पापिष्ठोऽहं भृशदारुणे नरके व्यक्तं स्फुटं पतिष्यामि । यत्र नरके धर्मघ्नाः कामिनः यमयातनाः विन्दन्ति ॥ २९ ॥ किमिति ॥ इदमद्भुतमाश्चर्यं मया किं स्वप्ने दृष्टमाहोस्वित् अथवा इह जाग्रदवस्थायां

साक्षात्प्रत्यक्षमेव दृष्टं ये पाशपाणयो विकृतवेषाः मां व्यकर्षन् तेऽद्य क्व याताः ॥ ३० ॥ अथेति ॥ ये च पाशैर्बध्वा भुवोऽधो नरकं प्रति नीयमानं मां व्यमोचयन् चारु दर्शनं येषां ते चत्वारः सिद्धा अथ अपि क्व गताः ॥ ३१ ॥ अथेति ॥ यद्यप्यहमस्मिन् जन्मनि दुर्भगः पापीयान् अथापि मे जन्मान्तरीयेण मङ्गलेन कल्याणकर्मणा भवितव्यम् । येन मङ्गलेन हेतुना विबुधोत्तमानां दर्शने जाते सति मे आत्मा मनः प्रसीदति । यद्वा । विबुधोत्तमानां दर्शने विषये केनापि मङ्गलेन पुण्येन भवितव्यम् इति योजना । कार्यद्वारा कारणमनुमेयं तद्विना भक्तिबीजवपनासंभवात् अत एव स्वपुत्रस्य नारायण इति नाम चकार ॥ ३२ ॥ अन्यथेति ॥ अन्यथा पूर्वपुण्यं विना म्रियमाणस्येह विवशावस्थायाम् अशुचेः वृषलीपतेः मम जिह्वा वैकुण्ठस्य भगवतो नामग्रहणं वक्तुं कर्तुं नार्हति । यद्वा । गृह्यते वशीक्रियते भगवाननेन इति ग्रहणमिति पृथक्पदं नामविशेषणम् ॥ ३३ ॥ क्वेति ॥ कितवः वञ्चकः पापः पापीयान् ब्रह्मघ्नः विप्रत्वनाशकः निरपत्रपः निर्लज्जः अहं क्व नारायणेत्येतन्मङ्गलकरं भगवन्नाम क्व ॥ ३४ ॥

अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन् नीयमानं बद्ध्वा पाशैरधो भुवः ॥ ३१ ॥ अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ॥
भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ ३२ ॥ अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ॥ वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३३ ॥
क्व चाऽहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ॥ क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥ ३४ ॥ सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ॥
यथा न भूय आत्मानमन्धे तमसि मज्जये ॥ ३५ ॥ विमुच्य तमिमं बन्धमविद्याकामकर्मजम् ॥ सर्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान्
॥ ३६ ॥ मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया ॥ विक्रीडितो ययैवाहं क्रीडामृग इवाधमः ॥ ३७ ॥ ममाऽहमिति देहादौ हित्वा मिथ्याऽर्थधीर्मतिम् ॥ धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥ ३८ ॥

सोऽहमिति ॥ सोऽहं यताः वशीकृताः चित्तेन्द्रियानिला येन तथाभूतः सन् भूयः अन्धे तमसि महामोहव्याप्ते संसार आत्मानं यथा न मज्जये तथा यतिष्यामि । तङभाव आर्षः ॥ ३५ ॥ विमुच्येति युग्मम् ॥ अविद्यादेहादावात्मबुद्धिः ततः कामः विषयभोगाभिलाषः ततः कर्म लौकिकालौकिकव्यापारः ततो जातो यो गृहपुत्रकलत्राद्यात्मको विविधो बन्धस्तमिमं विमुच्य त्यक्त्वा शान्तः विषयभोगाभिलाषादिशून्यः सर्वभूतेषु सुहृत्सुखादिसमदर्शी तेषु करुणो दयावान् मैत्रः हितकारी आत्मवान् समाहितचित्तः सन् योषिन्मय्या आत्मनो हरेर्मायया मोहिन्या शक्त्या ग्रस्तमात्मानं मोचये क्रीडामृगो वानर इवाधमोऽज्ञोऽहं यया स्त्रियैव विक्रीडितः ॥ ३६ ॥ ३७ ॥ ममेति ॥ पूर्वं मिथ्याभ्रान्तिरूपैव धनपुत्रादिष्वर्थधीः परमार्थबुद्धिर्यस्य सोऽहं देहादौ ममाहमिति मतिं हित्वा त्यक्त्वा । यद्वा । देहादौ मिथ्याभूता अमी अर्था इति धीर्यस्य तथा भूतः सन् ममाहमिति मतिं हित्वा तस्य भगवतो नामकीर्त्तनादिभिः शुद्धं मनस्तस्मिन्भगवति धास्ये धारयिष्यामि ॥ ३८ ॥

इतीति ॥ इत्येवं साधुषु भगवत्पार्षदेषु यः क्षणमात्रसङ्गस्तेन जातसुनिर्वेद उत्पन्नवैराग्योऽत एव मुक्तं सर्वमनुबन्धनं पुत्रादिस्नेहो येन सः गङ्गाद्वारं हरिद्वारमुपेयाय जगाम ॥ ३९ ॥ स इति ॥ तस्मिन् देवसदने आसीनः योगमास्थितः प्रत्याहृतो विषयेभ्य इन्द्रियग्रामो येन सः अजामिलः आत्मनि भगवति मनः युयोज युयुजे ॥ ४० ॥ तत इति ॥ ततश्च भगवतः करपादमुखोदरादितत्तदवयवान् ध्यायन् गुणेभ्यः देहेन्द्रियादिभ्य आत्मानं मनो वियुज्य विशोध्य आत्मसमाधिना चित्तैकाग्र्येण ब्रह्मणि व्यापकेऽनुभवात्मनि ज्ञानस्वरूपे सच्चिदानन्दात्मके भगवद्धाम्नि भगवत्स्वरूपे युयुजे ॥ ४१ ॥ यर्हीति ॥ यर्हि यदा तस्मिन् भगवद्धाम्नि उपरता निश्चला धीर्यस्य स तथा स्थितः तस्मिन्नेव काले पुरः स्वपुरतः प्रागुपलब्धान् दृष्टानेव पुरुषानद्राक्षीत् उपलभ्य च स द्विजः उत्थाय तान् शिरसा ववन्दे ॥ ४२ ॥ हित्वेति ॥ तेषां दर्शनादनु अनन्तरं सद्य एव हरिद्वारसंज्ञके तीर्थे गङ्गायां स्वकलेवरं हित्वा भगवत्पार्श्ववर्त्तिनां पार्षदानां शुद्धसत्त्वात्मकं चतुर्भुजादिविशिष्टं भगवत्सेवोपयोगि स्वरूपं जगृहे ॥ ४३ ॥ साकमिति ॥

इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ॥ गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥ ३९ ॥ श्रीशुक उवाच ॥ स तस्मिन् देवसदन आसीनो योगमाश्रितः ॥ प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४० ॥ ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ॥ युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४१ ॥ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग् ववन्दे शिरसा द्विजः ॥ ४२ ॥ हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु ॥ सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४३ ॥ साकं विहायसा विप्रो महापुरुषकिंकरैः ॥ हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४४ ॥ एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मणा ॥ निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ॥ ४५ ॥ नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ॥ न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ ४६ ॥

ततः स विप्रो महापुरुषकिङ्करैर्भगवत्पार्षदैः साकं हैमं सौवर्णं विमानमारुह्य यत्र श्रियः पतिर्भगवान् विष्णुर्विराजते तत्र विहायसा आकाशमार्गेण ययौ ॥ ४४ ॥ एवमिति ॥ सः अजामिलः एवं वर्णितप्रकारेण विप्लावितास्त्यक्ताः सर्वे धर्मा येन सः हतं व्रतं स्वदारनियमादिर्यस्य सः गर्ह्येण निन्दितकर्मणा चौर्यादिना पतितो ब्राह्मण्याद् भ्रष्टः सर्वत्र हेतुः दास्याः पतिरिति अत एव यमदूतैर्निरये निपात्यमानोऽपि भगवन्नाम गृह्णन् सद्यस्तत्क्षणमेव यमपाशाद्विमुक्तः ॥ ४५ ॥ नेति ॥ अतः कारणात् तीर्थानि पादे यस्य तस्य हरेरनुकीर्त्तनात् नामसंकीर्त्तनादेः सकाशात् परं श्रेष्ठं मुमुक्षतां कर्मनिबन्धकृन्तनं पापमूलोच्छेदकं नास्ति । यत् यस्मात् भगवन्नामसंकीर्त्तनादितः पुनर्मनः कर्मसु दुष्टाचारेषु प्रायेण न सज्जते ततो नामसंकीर्त्तनादेरन्यथा प्रायश्चितान्तरैस्तु मनः पुनः रजस्तमोभ्यां कलिलं मलिनं भवत्येव दुराचारप्रवृत्तिदर्शनादिति भावः ॥ ४६ ॥

य इति ॥ एवं वर्णितमघापहं परमं गुह्यं शास्त्ररहस्यम् इतिहासं श्रद्धया विश्वासेन भक्त्या च युक्तो यो मर्त्यः शृणुयात् यश्चानुकीर्तयेत् स यद्यप्यमङ्गलः पापीयांस्तथापि नरकं नैव याति । यमकिङ्करैश्चेक्षितो न भवति किंतु विष्णुलोके महीयते विराजते ॥ ४७ ॥ ४८ ॥ म्रियमाण इति ॥ यदि म्रियमाणो विवशावस्थायां श्रद्धाभक्तिरहितोऽजामिलोऽतिपातक्यपि पुत्रोपचारितमपि हरेर्नाम गृणन् भगवद्धामागात्तदा सावधानतायां श्रद्धाभक्तियुक्तो निरपराधी साक्षात्तन्नाम गृणंस्तद्धाम यातीति किं पुनर्वक्तव्यम् ॥ ४९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य द्वितीये निरमादिमाम् ॥ २ ॥ तृतीये बोधिता विष्णोरुत्कर्षं सर्वतोऽधिकम् ॥ स्वदूता धर्मराजेन तत्र श्लोकाः शरांघ्रयः ॥ उवाचपञ्चैकं षट्युक्चत्वारिंशदनुष्टुभः ॥ ३ ॥ निशम्येति ॥ एवं हता आज्ञा यस्य सः अयं सर्वोऽपि जनो यस्य वशे तिष्ठति स देवो धर्मराजः स्वभटैरुपवर्णितं वृत्तं निशम्य मुरारेर्नैदेशिकैः किङ्करैर्विहतान् तान् स्वभटान् प्रति किमाह स्म ॥ १ ॥ यमस्येति ॥ हे ऋषे यमस्य देवस्य दण्डभङ्गः आज्ञापरिवर्त्तनं

**य एवं परमं गुह्यमितिहासमघापहम् ॥ शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्याऽनुकीर्तयेत् ॥४७॥ न वै स नरकं याति नेक्षितो यमकिंकरैः ॥ यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥४८॥ म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ॥ अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥ ४९ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धेऽजामिलोपाख्याने भगवन्नाममाहात्म्यवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ राजोवाच ॥ निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तान्प्रति धर्मराजः ॥ एवं हताज्ञो विहतान्मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥ यमस्य देवस्य न दण्डभङ्गः कुतश्चनर्षे श्रुतपूर्व आसीत् ॥ एतन्मुने वृश्चति लोकसंशयं न हि त्वदन्य इति मे विनिश्चितम् ॥ २ ॥ श्रीशुक उवाच ॥ भगवत्पुरुषै राजन्याम्याः प्रतिहतोद्यमाः ॥ पतिं विज्ञापयामासुर्यमं संयमनीपतिम् ॥ ३ ॥ यमदूता ऊचुः ॥ कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो ॥ त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥ यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः ॥ कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव वा ॥ ५ ॥**

कुतश्चन कस्मादपि सकाशात् श्रुतपूर्वो नासीत् अतः सर्वस्यापि लोकस्य संशयोऽस्ति । हे मुने एतत् एतं सामान्ये क्लैब्यम् । लोकसंशयं त्वत्तोऽन्यः हि यस्मान्न वृश्चति न च्छिनत्ति अल्पज्ञत्वाच्छेत्तुं न शक्नोतीति तु मे निश्चितम् अतो भवानेव ब्रवीतु ॥ २ ॥ भगवदिति ॥ हे राजन् भगवत्पुरुषैः प्रतिहत उद्यमो येषां ते याम्याः यमदूताः स्वपतिं संयमिनीपतिं यमं विज्ञापयामासुः ॥ ३ ॥ कतीति ॥ हे प्रभो त्रैविध्यं त्रिविधं । स्वार्थे ष्यञ् । सत्त्वादिगुणत्रयहेतुकं पुण्यपापमिश्रात्मकं । यद्वा । त्रैविध्यं यथा स्यात्तथा कर्म कुर्वतो जीवलोकस्य शास्तारः शिक्षकाः कर्मफलस्याभिव्यक्तिहेतवो दातार इह त्रिलोक्यां कति सन्तीत्याक्षेपोक्तिः ॥ ४ ॥ यदीति ॥ यदि लोके शास्तारो दण्डधारिणो बहवः स्युस्तर्हि मृत्युः पापफलं नरकात्मकं दुःखम् अमृतं पुण्यफलं स्वर्गात्मकं सुखमेव वा कस्य स्यातां न कस्यापीत्यर्थः । कस्य वा न स्यातां सर्वस्यापि

स्यातामित्यर्थः । अयं भावः । यदि बहवः शास्तारः स्युः तर्हि शास्तॄणां विप्रतिपत्तौ सुखदुःखे कस्यापि न स्यातां परस्परविरोधेनोभयोरपि प्रतिबन्धात् । ऐकमत्ये तु एकः सुखं कर्तुमिच्छति दुःखं चान्यस्तयोश्चान्योन्यकार्यानुमोदनेन सर्वेषामपि सुखदुःखे स्याताम् ॥ ५ ॥ ननु बहूनां कर्मिणां व्यवस्थयैव शास्तृबहुत्वमतो न दोषस्तत्राहुः—किन्त्विति ॥ बहूनां कर्मिणां व्यवस्थया शास्तृबहुत्वे यत् शास्तृत्वं तत् स्यात् घटेत तत्तु यथा मण्डलवर्तिनामेकदेशवृत्तित्वात् उपचारमात्रं स्यात् निरङ्कुशत्वाभावात् चक्रवर्तिवन्मुख्यं शास्तृत्वं न स्यात्तथा च मुख्यः शास्तान्य एव कल्प्यः स्यादिति भावः ॥ ६ ॥ अत इति ॥ यस्मादेवं शास्तृबहुत्वं मुख्यतया न घटतेऽतोऽस्मज्ज्ञाने तु सेश्वराणां देवैः सहितानां सर्वभूतानां त्वमेक एवाधीश्वरः स्वामी शास्ता शिक्षकः नृणामधिकारिणां शुभाशुभविवेचकः पुण्यपापनिर्णयकृद्दण्डधरः पापिनां पुण्यवतां सुखदश्चेति ज्ञेयम् ॥ ७ ॥ तस्येति ॥ तस्यैवं प्रभावस्य ते तव विहितो निरूपितो विहतः इति पाठे तु खण्डितो दण्डो लोकेऽधुना न प्रवर्तते यतः चतुर्भिरद्भुतरूपैः सिद्धैः ते तवाज्ञा विप्रलम्भिता वञ्चिता उल्लङ्घितेत्यर्थः ॥ ८ ॥ नीयमानमिति ॥ तवादेशादाज्ञातोऽस्माभिर्यातनागृहान् प्रति नीयमानं पातकिनमजामिलं प्रसह्य

**किंतु शास्तृबहुत्वे स्याद्बहूनामिह कर्मिणाम्॥ शास्तृत्वमुपचारो हि यथा मण्डलवर्तिनाम् ॥६॥ अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः॥ शास्ता दण्डधरो नृणां शुभाशुभविवेचनः॥७॥तस्य ते विहितो दण्डो न लोके वर्ततेऽधुना॥चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता ॥८॥ नीयमानं तवादेशादस्माभिर्यातनागृहान्॥व्यमोचयन्पातकिनं छित्त्वा पाशान्प्रसह्य ते ॥९॥ तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम् ॥ नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥१०॥ श्रीशुक उवाच ॥ इति देवः स आपृष्टः प्रजासंयमनो यमः॥प्रीतः स्वदूतान्प्रत्याह स्मरन्पादाम्बुजं हरेः ॥११॥ यम उवाच ॥ परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम्॥ यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः ॥ १२ ॥**

बलात्कारेण पाशान् छित्त्वा ते सिद्धपुरुषा व्यमोचयन् ॥ ९ ॥ तानिति ॥ नारायणेत्यभिहिते सति मा भैः भयं मा कुर्विति वदन्तः शीघ्रमाययुरागताः मा भैरिति “ बहुलं छन्दसि ” इति अपृक्तहल ईडभावः । तान् ते त्वत्तो वेदितुमिच्छामो यदि नोऽस्माकं क्षमं हितं मन्यसे तर्हि वद अन्यथा अज्ञानतस्तदवज्ञानेन तवाप्यनर्थः स्यात् ॥ १० ॥ इतीति ॥ इत्येवं स आपृष्टः प्रजानां संयमनः यमो देवो नारायणनामश्रवणेन प्रीतः हरेः पादाम्बुजं स्मरन् स्वदूतान् प्रत्याह स्म ॥ ११ ॥ पर इति ॥ यूयं यं परं जानीथ तस्मात् मत् मत्तः इत्युपलक्षणं मदुपलक्षितेभ्य इन्द्रवरुणादिसर्वलोकपालेभ्योऽन्यः पर उत्कृष्टश्च जगतो जङ्गमस्य तस्थुषः स्थावरस्य चाधीश्वरोऽस्ति । अहं तु जङ्गमानामेव तत्रापि नृणामेव तत्रापि पापिनामेव तत्किङ्करः सन्नीश्वरः स तु सर्वेश्वरः यस्य त्वंशेभ्यो विष्णुब्रह्मरुद्रेभ्योऽस्य विश्वस्य यथाक्रमं स्थितिः पालनं जन्मोत्पत्तिः नाशः प्रलयश्च भवति । यत्र यस्मिन् ऊर्ध्वतिर्यक्तन्तुषु पटवद्विश्वमोतं प्रोतं च नसि नासिकायामोतः प्रोतरज्जुनिबद्धः बलीवर्दस्तद्वत् लोको यस्य वशेऽस्ति ॥ १२ ॥

य इति ॥ यो निजायां स्वस्मात्प्रादुर्भूतायां तन्तीस्थानापन्नायां वेदलक्षणायां वाचि ब्रह्मादिनामभिः खण्डरज्जुस्थानीयैर्जनान् ब्राह्मणादीन् बध्नाति तत्तदधिकारप्राप्तकर्मसु प्रयोजयति । यथा तन्त्यां दीर्घरज्ज्वां दामभिः रज्जुखण्डैर्निबद्धा गाः बलीवर्दान् बध्नाति तथेत्यर्थः । त इमे जनाः नामकर्मभिः निबन्धैर्बद्धा अत एव चकिता भीताः सन्तो यस्मै बलिं वहन्ति स्वस्वकर्मभिर्यमाराधयन्ति सः सर्वेश्वरः ॥ १३ ॥ अहमिति युग्मम् ॥ अहं यमः प्रचेताः वरुणः ईशो महादेवः विश्वसृजो मरीच्यादयः अमराणामीशा बृहस्पत्यादयः अन्ये च ये मनुष्यादिषु महान्तः स्पष्टाः शेषाः न स्पृष्टं रजस्तमश्च यैस्ते तत्र हेतुः सत्त्वं प्रधानं येषां ते एवंभूता अपि स्पृष्टमायाः मायया मोहिताः एते यस्ये-हितमभिप्रेतं चेष्टितं वा न विदुः ततस्तेभ्योऽन्ये न विदुरिति किं पुनः वक्तव्यम् ॥ १४ ॥ १५ ॥ यमिति ॥ आत्मनां स्थावरजङ्गमशरीराणां जीवानामन्तर्हृदि सन्तं विद्यमानमप्यात्मानं सर्वव्यापकं ततस्तेभ्य इन्द्रियादिभ्यः परं यं गोभिर्ज्ञानेन्द्रियैर्मनसा सङ्कल्पात्मकेन हृदा चित्तेन असुभिः प्राणैः प्राणप्रधानैः कर्मेन्द्रियैर्गिरा शब्दात्मकेन

**यो नामभिर्वाचि जनान्निजायां बध्नाति तन्त्यामिव दामभिर्गाः ॥ यस्मै बलिं त इमे नामकर्मनिबन्धबद्धाश्चकिता वहन्ति ॥ १३ ॥ अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ॥ आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ॥ यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥ यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते ॥ आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥ तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ॥ प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ १७ ॥ भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि ॥ रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥१८॥ धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ॥ न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥ १९ ॥**

शास्त्रेण च असुभृतो जीवा न विचक्षते न पश्यन्ति न जानन्ति न प्राप्नुवन्ति च । यथा आकृतयो रूपाणि कर्तृभूतानि ततः परम् आकृतीनां प्रकाशकं चक्षुः कर्मभूतं यथा न पश्यन्ति तथेत्यर्थः । न हि प्रयाता प्रयाणस्य विषय इति भावः । एवंभूतः सर्वेश्वरो मदन्योऽस्ति ॥ १६ ॥ ननु भवत्वन्य ईश्वरः परं तु अजामिलस्य रक्षितारः के इत्यत आह—तस्येति ॥ आत्मतन्त्रस्य अधीशितुः परस्य मायाधिपतेः महात्मनः तस्य हरेः तस्यैव रूपं चतुर्भुजादिविशिष्टं गुणाः प्रभावादयः स्वभावो भक्तवात्सल्यादिर्येषां ते मनोहरा दूताश्च इह प्रायेण चरन्ति ॥ १७ ॥ भूतानीति ॥ सुरैरपि पूजितानि दुर्दर्शानि द्रष्टुमप्यशक्यानि लिङ्गानि मूर्तयो येषां तानि यतो महाद्भुतानि अलौकिकरूपाणि विष्णोर्भूतानि भृत्यास्तद्भक्तिमतो भगवद्भक्तान् मर्त्यान् परेभ्यः कालकर्मादिभ्यो मत्तश्च सर्वतः सर्वत्र सर्वदैव रक्षन्ति ॥ १८ ॥ ननु ते कथमधर्मपक्षपातं कृतवन्तस्तत्राह—

धर्ममिति ॥ साक्षाद्भगवत्प्रणीतं धर्मं तु सत्त्वप्रधाना ऋषयोऽपि न विदुः नापि देवाः न च सिद्धमुख्याः विदुः तदा रजःप्रधानाः असुराः मनुष्याः विद्याधरचारणादयः कुतो विदुः ॥ १९ ॥ ननु केऽपि न जानन्ति चेत्तस्य सत्त्वे किं मानमित्याशङ्क्याह–स्वयंभूरिति युग्मम् ॥ हे भटाः स्वयंभूर्ब्रह्मा शम्भुः शिवः कुमारः सनत्कुमारः मनुः स्वायम्भुवः वैयासकिः शुकः शेषाः स्पष्टाः । वयमिति अहमिति वक्तव्ये आत्मानमेव बहु मन्यमानो बहुत्वेन निर्दिष्टवान् । एते द्वादश वयं भागवतं भगवता प्रोक्तं गुह्यं धर्मं विजानीमः गुह्यत्वादेव स्वस्वस्मृतिशास्त्रेषु न स्फुटं प्रोक्तवन्तः । यं धर्मं ज्ञात्वैव पुरुषोऽमृतं मोक्षरूपं भगवन्तमश्नुते प्राप्नोति ॥ २० ॥ २१ ॥ एतावानिति ॥ अस्मिन् लोके पुंसां परः सर्वोत्कृष्टो धर्मः एतावानेव वेदरहस्यज्ञैः स्मृतः यस्तस्य भगवतो नामग्रहणादिभिः साधनभक्तिभिः भगवति परमपुरुषार्थरूपे प्रेमलक्षणो भक्तियोगः सः ॥ २२ ॥ नामेति ॥ हे पुत्रकाः हरेर्नामोच्चारणमाहात्म्यं पश्यत येन पुत्रोपचारितनामोच्चारणमात्रेणैव महापातकित्वेनाभिमतोऽजामिलोऽपि मृत्युपाशादमुच्यत ॥ ॥ २३ ॥ ननु नामाभासेन कथं सर्वपापक्षयः भक्त्यादेरपि विधानात् अत आह–एतावतेति ॥ भगवतो गुणनाम्नां भक्तवत्सलादीनां कर्मनाम्नां कंसारिरित्यादीनाम् उपलक्ष-

स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः ॥ प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः ॥ गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥ एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ॥ भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ ॥ २२ ॥ नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ॥ अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥२३॥ एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ॥ विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥ प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ॥ त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

णतया जन्मनाम्नां वासुदेवइत्यादीनामपि । यद्वा । गुणाः कर्माणि नामानि चेति द्वन्द्वः तेषां सम्यक्कीर्त्तनमिति यत् एतावता पुंसामघनिर्हरणाय पापक्षयमात्राय अलं पर्याप्तम् । यद्वा । अलं वारणार्थे उपयोगो नास्तीत्यर्थः । नामादीनामेकतरस्यापि असम्यक्कीर्त्तनादपि पापहरणस्य सिद्धेरिति यद्यस्मान्नारायणेति पुत्रं न तु नारायणं विक्रुश्य न तु श्रद्धादिपूर्वकं सम्यक्कीर्त्तयित्वा अघवानपि नतु विशुद्धः म्रियमाणः मरणदुःखेन विवशोऽपि न तु स्वस्थचित्तः अजामिलोऽपि महापापोऽपि न तु क्षुद्रपापः मुक्तिमियाय प्राप नतु पापनिर्हरणमात्रं भक्तिश्रद्धादिविधयस्तु वासनाक्षयार्थाः ॥ २४ ॥ ननु व्यर्थं तर्हि द्वादशाब्दादिस्मरणमिति तत्राह–प्रायेणेति ॥ अयं महाजनो धर्मशास्त्रप्रणेता तदिदं भागवतं धर्मं प्रायेण न वेद । अयं भावः । यथा मृतसंजीवनौषधिमजानन्तो वैद्या रोगनिर्हरणाय त्रिकटुकनिम्बादीनि स्मरन्ति तथा पूर्वोक्तस्वयंभूशम्भुप्रमुखद्वादशव्यतिरेकेणायं महाजनोऽतिगुह्यमिदमज्ञात्वा द्वादशाब्दादिकं स्मरतीति किंच मायया देव्या अलं विमोहितमतिरयं जनो मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैर्मनोह-

रायां त्रय्यां जडीकृता अभिनिविष्टा मतिर्यस्य अतो वैतानिके महत्येव कर्मणि श्रद्धया युज्यमानो नाल्पे प्रवर्तते दृश्यते हि प्राकृतस्य लोकस्य महति मन्त्रादौ श्रद्धाल्पे चाश्रद्धा तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम् । यद्वा । स्वाधीनः सिंहोऽस्त्येतावता श्वसृगालादिनिवारणाय तं यथा न प्रयुञ्जते तथातितुच्छत्वात्पापस्य न तन्निरसनाय परममङ्गलं हरेर्नाम स्मरन्ति । यद्वा । नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसङ्गादित्येषा दिक् ग्रन्थविस्तरभयात्तु नातिप्रपञ्च्यते ॥ २५ ॥ एवमिति ॥ सुधियो जनाः एवं पूर्वोक्तं विमृश्य विचार्य सर्वात्मना एकाग्रेण मनसाऽनन्तेऽनन्तगुणे भगवति भावयोगं परमप्रेमोपायं नामसंकीर्त्तनादिकं विदधते । ये एवंभूतास्ते मे मम दण्डं नार्हन्ति तेषां भगवन्निष्ठानां पापप्रवृत्त्यसंभवात् । अथ कदाचित् यद्यमीषां प्रमादतः पातकं स्यात्तदा तदपि उरुगायस्य बहुधा वर्णितमाहात्म्यस्य भगवतो वादः नामकीर्तनमेव हन्ति नाशयति ॥ २६ ॥ ते इति ॥ ये साधवः समदृशः भगवन्तं प्रपन्नाः शरणं गताः ते देवैः सिद्धैश्च परिगीताः स्तुताः पवित्राः गाथाः कथा येषां ते तथाभूताः सन्ति अतः हरेर्गदयाभिगुप्तान् सर्वतो रक्षितान्

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ॥ ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥ ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ॥ तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे ॥ २७ ॥ तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम् ॥ निष्किञ्चनैः परमहंसकुलै रसज्ञैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥ २८ ॥ जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् ॥ कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥ तत्क्षम्यतां स भगवान्पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ॥ स्वानामहो न विदुषां रचिताञ्जलीनां क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥ ३० ॥ तस्मात्संकीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ॥ महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतिम् ॥ ३१ ॥

तान् नोपसीदत तत्समीपमपि न गच्छत यतः एषां दण्डे वयं ब्रह्मादयः ईश्वराभिमानिनो न प्रभवाम तथास्मन्नियन्ता वयः कालश्च न प्रभवति ॥ २७ ॥ तानिति ॥ निष्किञ्चनैः परमहंसकुलैः रसज्ञैः जुष्टात् मुकुन्दस्य पादारविन्दयोर्यो मकरन्दरूपो रसस्तस्मात् विमुखान् अतः निरयस्य वर्त्मनि मार्गभूते गृहे अजस्रं निबद्धतृष्णान् तान् असतः दुष्टान् दण्डार्थमानयध्वम् ॥ २८ ॥ जिह्वेति ॥ यत् येषां जिह्वा एकदापि भगवद्गुणनामधेयं न वक्ति येषां चेतश्चैकदापि तस्य चरणारविन्दं न स्मरति येषां शिर एकदापि कृष्णाय नो नमति एवं न कृतं विष्णुसंबन्धि कृत्यं कर्त्तव्यं भजनं यैस्तानसतोऽसाधून् दण्डार्थमानयध्वम् ॥ २९ ॥ तदिति ॥ स्वपुरुषैः स्वदासैः नः अस्माभिर्यदसदन्याय्यं कृतं तत् स्वानां स्वकीयानाम् । अहो न विदुषां इति पाठे माहात्म्यमविदुषामित्यर्थः । रचिताञ्जलीनामस्माकमपराधं स भगवान् पुरुषः पुराणो नारायणः स्वयमेव क्षम्यतां सहतां । आर्षः प्रयोगः । यतः गरीयसि अतिशयेन गुरुतमे तस्मिन् क्षान्तिरेव युक्ता अतः भूम्ने परममहते पुरुषाय नमः ॥ ३० ॥ तस्मादिति ॥ यस्माद्यमेनाप्येवमुक्तं तस्मात्

हे कौरव्य विष्णोर्नामसंकीर्त्तनं महतामप्यंहसां पापानामैकान्तिकनिष्कृतिं समूलानां प्रायश्चित्तं जगतां प्राणिनां मङ्गलं पुरुषार्थचतुष्टयप्रापकं च विद्धि ॥ ३१ ॥ शृण्वतामिति ॥ उद्दामानि पापनाशनादौ विशृङ्खलानि हरेर्वीर्याणि मुहुः शृण्वतां गृणतां नृणां सुजातयानायासेनैव निश्चिन्तयोत्पन्नया भक्त्या आत्मान्तःकरणं यथा निर्वासनं शुध्येत्तथा व्रतादिभिः प्रायश्चित्तान्तरैर्न शुध्येत् किंतु सवासनमेव शिष्यते ॥ ३२ ॥ कृष्णेति ॥ कृष्णाङ्घ्रिपद्मयोर्मधु लेढि आस्वादयतीति तथा भगवत्सेवासुखाभिज्ञः वृजिनावहेषु नरकादिदुःखप्रदेषु तुच्छतया विसृष्टास्त्यक्ता ये मायागुणा विषयास्तेषु पुनर्न रमते अन्यः सेवासुखानभिज्ञस्तु कामाभिभूतः सन्नात्मनो रजः पापं प्रमार्ष्टुमपि कर्मैव प्रायश्चित्तरूपमीहेत करोति। यतोऽनन्तरं पुनरपि रजः स्यात्पापकर्मणि प्रवर्त्तत एव सत्वशुद्धेरभावात् ॥ ३३ ॥ इत्थमिति ॥ हे राजन् स्वभर्त्रा यमेन गदितं भगवन्माहित्वम् इत्थम् ईदृक्प्रभावं संस्मृत्य ततःप्रभृति विस्मितधियः सन्तः ते यमकिंकराः अच्युताश्रयजनं प्रति अस्मानेवैष हन्यादिति शङ्कमानाः नैव गच्छन्तीति शेषः । किंतु तं द्रष्टुमपि

शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः ॥ यथा सुजातया भक्त्या शुध्येन्नात्मा व्रतादिभिः ॥ ३२ ॥ कृष्णाङ्घ्रिपद्ममधुलिड्न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु ॥ अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३३ ॥ इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिंकरास्ते ॥ नैवाच्युताश्रयजनं प्रतिशङ्कमाना द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ॥ ३४ ॥ इतिहासमिमं गुह्यं भगवान्कुम्भसंभवः ॥ कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥ इति श्रीभा० षष्ठस्कन्धे अजामिलोपाख्यानसमाप्तिवर्णनपूर्वकं यमेन स्वभटान्प्रति भगवद्भक्तिनाममाहात्म्यवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥ राजोवाच ॥ देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ॥ सामासिकस्त्वया प्रोक्तो यस्तु स्वायंभुवेऽन्तरे ॥ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा ॥ १ ॥ अनुसर्गं यथा शक्त्या ससर्ज भगवान्परः ॥२॥

बिभ्यति स्म । यद्वा । नैव विस्मितधियो जाताः किन्तु सत्यामिति मेनिरे ततोऽच्युताश्रयजनं प्रति शङ्कमानाः तं द्रष्टुमपि बिभ्यति स्म । ते चाच्युतेति पाठे ते विस्मिता जातास्ते च बिभ्यति स्मेत्यन्वयद्वयम् ॥ ३४ ॥ इतिहासमिति ॥ मलये पर्वते हरिमर्चयन् आसीनो भगवान् कुम्भसंभवोऽगस्त्यः इममितिहासं मह्यं कथयामास ॥ ३५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य तृतीये निरमादिमाम् ॥ ३ ॥ चतुर्थे विश्वरूपस्य जन्म वक्तुं प्रचेतसाम् ॥ सूनोर्दक्षस्य वंशोऽत्र श्लोकाः सार्द्धाश्चतुःशराः[५४] ॥ सार्द्धा [५४॥] नवेषवोऽनुष्टुभ्मानं चोवाचसप्तकम् ॥ ४ ॥ देवेति सार्द्धम् ॥ हे भगवन् स्वायंभुवे मन्वन्तरे सामासिकः संक्षिप्तो देवादीनां सर्गो यस्त्वया प्रोक्तः तस्यैव व्यासं विस्तारं ते त्वत्तो ज्ञातुमिच्छामि ॥ १ ॥ अनुसर्गमिति ॥ तथा " यः ससर्ज प्रजा इष्टाः स दक्षो ब्रह्मचोदितः । " इत्युक्तेर्दक्षस्यानुसर्गमनुप्रवृत्तं सर्गं भगवान् परः परमेश्वरो ब्रह्मा वा यथा येन प्रकारेण यया शक्त्या ससर्ज तां शक्तिं तत्प्रकारं च ज्ञातुमिच्छामि ॥ २ ॥

इतीति ॥ हे मुनिसत्तमाः इत्येवं राजर्षेः परीक्षितः संप्रश्नमाकर्ण्य महायोगी बादरायणिः श्रीशुकः प्रतिनन्द्य संश्लाघ्य जगाद उत्तरं दत्तवान् ॥ ३ ॥ दक्षादिरूपेण ससर्जेति वक्तुं रुद्रापराधाच्छागमुखस्य दक्षस्यावमानदुःखेन देहं त्यक्तवतः पुनर्जन्मप्रकारमाह—यदेति ॥ यदा प्राचीनबर्हिषो दश पुत्राः प्रचेतसोन्तःसमुद्रात् समुद्रमध्यादुन्मग्ना निर्गतास्तदा गां पृथ्वीं द्रुमैर्वृतामाच्छादितां ददृशुरित्यन्वयः । नारदोपदेशेन प्राचीनबर्हिषि विरज्य वनं गते सत्यराजकेन कृष्याद्यभावादेर्द्रुमबाहुल्यं ज्ञेयम् ॥ ४ ॥ द्रुमेभ्य इति ॥ तपसा निरन्नत्वनिमित्तेन सन्तापेन दीपितो मन्युर्येषां ते प्रचेतसो द्रुमेभ्यः क्रुद्ध्यमानाः । शानजार्षः । तद्दिधक्षया तेषां द्रुमाणां दग्धुमिच्छया मुखतो वायुमग्निं च ससृजुः ॥ ५ ॥ ताभ्यामिति ॥ हे कुरूद्वह तदा ताभ्यां वाय्वग्निभ्यां दह्यमानांस्तान्वृक्षानुपलभ्य दृष्ट्वा तेषां महान् राजा सोमस्तेषां प्रचेतसां मन्युं प्रशमयन्निवोवाच । इवशब्दोऽवधारणे। स्वकिरणैर्वृक्षपोषकत्वात्सोमस्यैव मुख्यराजत्वं चतुर्थस्कन्धे ब्रह्मणा कृतं प्रचेतसां सान्त्वनं वाराहकल्पीयं सोमेन कृतं तु पाद्मकल्पीयं इति न विरोधः

सूत उवाच ॥ इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ॥ प्रतिनन्द्यमहायोगी जगाद मुनिसत्तमः ॥ ३ ॥ श्रीशुक उवाच ॥ यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ॥ अन्तः समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥ द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ॥ मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥ ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ॥ राजोवाच महान्सोमो मन्युं प्रशमयन्निव ॥ ६ ॥ मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ॥ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥ अहो प्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधींश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥ अन्नं चराणामचरा ह्यपदः पादचारिणाम् ॥ अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥ यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ॥ प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ ॥ १० ॥

॥ ६ ॥ मा इति ॥ हे महाभागाः दीनेभ्यो द्रुमेभ्यो द्रोग्धुं मार्हथ योग्या न भवथ यतः यूयं प्रजानां शेषे षष्ठी । विवर्द्धयिषवः वृद्धिं कर्त्तुमिच्छवोऽत एव तासां यूयं पतयः पालकाः स्मृताः ॥ ७ ॥ प्रजापतीनां तद्भक्ष्यभोज्यदाहोऽनुचित इत्याह—अहो इति ॥ प्रजापतीनां पतिः भगवान् अव्ययः विभुः हरिः वनस्पत्यादीन् ससर्ज । ये पुष्पं विनैव फलन्ति ते वनस्पतयः पिप्पलादयः उपलक्षणमेतत्सर्ववृक्षाणाम् । फलपाकान्ता ओषधयो यवादयः । उर्जं पित्रन्नम् । इषं देवान्नम् । यद्वा । ऊर्जं वृक्षनिष्पन्नं फलादि इषमोषधिनिष्पन्नं व्रीह्यादि ॥ ८ ॥ अन्नमिति ॥ चराणां पक्षाभ्यां चरतां भ्रमरादिपक्षिणामचराः पुष्पफलाद्या अन्नं भक्ष्यम् । पादचारिणां गोमहिषादीनामपदः घासाद्याः अन्नम् । हस्तयुक्तानां व्याघ्रादीनामहस्ताः मृगादयः अन्नम् । द्विपदां मनुष्याणां चतुष्पदो गवादयः चकाराद्व्रीह्यादयः अन्नम् । अत्र चतुष्पदामन्नसाधनत्वादन्नत्वमन्येषां तु साक्षादिति विवेकः ॥ ९ ॥ यूयं चेति ॥ हे अनघाः हि यस्मात् पित्रा प्राचीनबर्हिषा देवदेवेन भगवता च प्रजासर्गाय यूयमन्वादिष्टा आज्ञप्ता अतः प्रजोपजी-

व्यान् वृक्षान् कथं निर्दग्धुमर्हथ ॥ १० ॥ आतिष्ठतेति ॥ अतः वः पित्रादिभिर्जुष्टं सेवितं सतां सुशीलानां कृपालूनां मार्गं जीवसंरक्षणलक्षणमातिष्ठत कुरुत दीपितं कोपं यच्छत उपसंहरत ॥ ११ ॥ तोकानामिति ॥ यथा तोकानां बालानां पितरौ मातापितरौ बन्धुः शरणं यथा च दृशो नेत्रस्य पक्ष्म बन्धुः रक्षकः यथा च स्त्रियाः पतिर्बन्धुः पोषको रक्षकश्च यथा च भिक्षूणां गृही गृहस्थो बन्धुः अन्नवस्त्रादिप्रदानेन निर्वाहकः । यथा चाज्ञानां बुधो ज्ञानी सुहृत् ज्ञानोपदेशेन संसारभयनिवर्त्तकः तथा प्रजानां पतिः राजा बन्धुः सर्वापद्भ्यो रक्षकः जीविकाप्रदश्च । अतः प्रजोपकारिणां वृक्षाणां विनाशोऽनुचितः ॥ १२ ॥ ईश्वराधिष्ठानत्वाच्च न द्रोहो युक्त इत्याह–अन्तरिति ॥ सर्वभूतानां देहेष्वन्तर्मध्ये तेषामात्मा अन्तर्यामीश्वरः हरिरास्ते अतः सर्वं स्थावरजङ्गमात्मकं विश्वं तस्य धिष्ण्यमितीक्षध्वम् । एवमीक्षणेन वो युष्मभिरसौ हरिस्तोषितो भविष्यति च । तस्मिंस्तुष्टे किं दुर्लभमिति भावः ॥ १३ ॥ य इति ॥ यः प्राणी आकाशादिव देहे समुत्पतितमाकस्मिकमित्यर्थः । यद्वा । देहे यो हृदयाकाशस्तस्मात्समुत्पतितं समुद्भू-

आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ॥ पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥११॥ तोकानां पितरौ बन्धुर्दृशः पक्ष्म स्त्रियाः पतिः॥ पतिः प्रजानां भिक्षूणां गृह्यऽज्ञानां बुधः सुहृत् ॥ १२ ॥ अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः ॥ सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥ यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते ॥ १४ ॥ अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः ॥ वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥ इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ॥ सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥ १६ ॥ तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल ॥ यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥

तम् उल्बणं मन्युमात्मनः जिज्ञासया विचारेण यच्छेत् उपशमयेत्सगुणान् संसारदुःखहेतुभूतानतिवर्त्तते अतीतो भवति ॥ १४ ॥ अलमिति ॥ दीनैर्दग्धैर्द्रुमैरलं तेषां दाहे उपयोगो नास्तीत्यर्थः । खिलानामवशिष्टानां वृक्षाणां वो युष्माकं च शिवं कल्याणमस्तु वार्क्षी वृक्षैः पालितत्वात्तदीया एषा मारिषानाम्नी वरा वरणीया कन्या पत्नीत्वे पत्न्यर्थं प्रतिगृह्यताम् ॥ १५ ॥ इतीति ॥ हे नृप इत्येवमामन्त्र्य सान्त्वयित्वा वरः श्रेष्ठः आरोहो नितम्बप्रदेशो यस्यास्तामप्सरसीमप्सरसः प्रम्लोचायाः सुतां कन्यां तेभ्यो दत्त्वा राजा सोमो ययौ । ते च सर्वे दश तामेकां धर्मेण भगवद्वचनप्रमाणेनोपयेमिरे विवाहितवन्तः ॥ १६ ॥ तेभ्य इति ॥ तेभ्यः प्रचेतोभ्यः तस्यां मारिषायां प्राचेतसस्तत्पुत्रः किल प्रसिद्धो दक्षः समभवज्जातः यस्येत्यादि स्पष्टम् । दक्षस्य स्वायंभुवे मन्वन्तरे जन्म यस्य प्रजाविसर्गेणेति प्रजाविसर्गस्तु चाक्षुष मन्वन्तर एव " चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते । यः ससर्ज प्रजा इष्टाः स दक्षो ब्रह्मचोदितः ॥ " इति चतुर्थोक्तेस्तस्मान्मन्वन्तरपञ्चकमस्य तप एव पौर्वकालिकैश्वर्यप्राप्त्यर्थमवगम्यते ॥ १७ ॥

यथेति ॥ यथा दुहितृवत्सलः एतेन तस्य कन्यावंश एवेत्युक्तम् । दक्षः रेतसा मनसा च भूतानि ससर्ज तन्मम मत्तः अवहितः सावधानः सन् शृणु ॥ १८ ॥ मनसेति ॥ प्रजापतिर्दक्षः नभः आकाशः स्थलं च पृथ्वी जलं च ओकांसि येषां तान् देवादीनिमाः प्रजाः मनसैवासृजत् ॥ १९ ॥ तमिति ॥ स प्रजापतिस्तं प्रजानां सर्गम् अबृंहितमसंवृद्धमालोक्य विन्ध्यस्य पादान् प्रान्तपर्वतान् उपव्रज्य दुष्करं तपः अकरोत् ॥ २० ॥ तत्रेति ॥ तत्राघमर्षणं नाम पापहरं परं श्रेष्ठं तीर्थमस्ति । तत्र अनुसवनं त्रिकालमुपस्पृश्य आचमनस्नानादि कृत्वा तपसा हरिमतोषयत् ॥ २१ ॥ अस्तौषीदिति ॥ हंसानां परमहंसानां गुह्यं रहस्यं तेन हंसगुह्येन तन्नाम्ना स्तोत्रेण अधोक्षजं भगवन्तमस्तौषीत् । इडभाव आर्षः । यतः स्तोत्रात् कस्य दक्षस्य हरिरतुष्यत् तत्तुभ्यमभिधास्यामि कथयिष्यामि ॥ २२ ॥ नम इति ॥ पराय अवितथा यथार्थानुभूतिश्चिच्छक्तिर्यस्य तस्मै भ्रान्तिरहिताय गुणत्रयाभासो जीवः निमित्तं माया च तयोः बन्धवे नियन्त्रे प्रवर्तकाय च गुणेषु रूपरसादिविषयेषु तत्त्वं परमार्थ

**यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ॥ रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः ॥ देवासुरमनुष्यादीन्नभःस्थलजलौकसः ॥ १९ ॥ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ॥ विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः ॥२०॥ तत्राघमर्षणं नाम तीर्थं पापहरं परम् ॥ उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥ अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम् ॥ तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥ २२ ॥ प्रजापतिरुवाच ॥ नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे ॥ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयंभुवे ॥ २३॥ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन्संवसतः पुरेऽस्मिन् ॥ गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि॥ २४ ॥ देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ॥ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥२५॥**

इति बुद्धिर्येषां तैर्न दृष्टं धाम स्वरूपं यस्य तस्मै निवृत्तं मानं प्रमाणं प्रत्यक्षादि यस्मात् स्वयंभुवे स्वप्रकाशाय नमः दधे नमस्करोमि । निवृत्तमानावधय इति पाठे तु निवृत्तो मानावधिः परिमाणेयत्ता यस्मात्तस्मै नमोऽस्त्विति ॥ २३ ॥ नेति ॥ अस्मिन् पुरे शरीरे संवसतोऽपि अव्यक्तदृष्टेः प्रपञ्चद्रष्टुः दृश्यत्वाभावतः यस्य सख्युरीश्वरस्य सख्यं बहिरन्तःकरणप्रवर्तकत्वादिकं सखा पुरुषो जीवोऽस्मिन् पुरे सह वसन्नपि नावैति न जानाति यथा गुणो रूपादिर्विषयः गुणिनो विषयिण इन्द्रियादेः सख्यं प्रकाशकत्वं यथा न वेत्ति तद्वत् इति तस्मै महेशाय नमस्करोमि । दृष्टिरिति प्रथमान्तपाठे व्यक्ते प्रपञ्च एव दृष्टिः परमार्थबुद्धिर्यस्य सः पुरुषः ॥ २४ ॥ देह इति ॥ देहः असवः प्राणाः अक्षा इन्द्रियाणि मनवःअन्तःकरणानि भूतानि पृथिव्यादीनि मात्रास्तन्मात्राणि शब्दादयश्च आत्मानं स्वस्वरूपमन्यं देवतावर्गं ततोऽपि परं यत् जीवस्वरूपं च न विदुर्न जानन्ति जडत्वात् । पुमान् जीवस्तु सर्वं पूर्वोक्तं गुणान् देहादिकारणीभूतान् सत्त्वादीन् च वेद जानाति चेतनत्वात् । एवं तज्ज्ञोऽपि यं सर्वज्ञं न वेद तमनन्तमहमीडे स्तौमि ॥२५॥

यदेति ॥ यदा समाधिसमये दृष्टं दर्शनं प्रमाणविकल्पविपर्ययलक्षणं त्रिविधं ज्ञानं स्मृतिश्च स्मरणं तयोः संप्रमोषात् नाशादित्यर्थः । नामरूपे रूप्येते येन तन्नामरूपरूपं तस्य मनसः उपरामो भवति तदा यः केवलया स्वसंस्थया सच्चिदानन्दरूपया प्रतीयते तस्मै हंसाय शुद्धाय परमविवेकिने शुचि शुद्धं मनः सद्म प्रतीतिस्थानं यस्य तस्मै नमः । एके तु ननु तज्ज्ञोऽपि न वेदेति यदुक्तं तत्र तदेव वेद्यं वस्तु द्विविधं सुज्ञेयं दुर्ज्ञेयं च तत्र सुज्ञेयं निर्विशेषस्वरूपमाह । यदेति । तथा तत्स्वरूपस्य सुज्ञेयत्वमुक्तं ब्रह्मणा "तथापि भूमन्महिमा गुणस्य ते" इत्यादि इत्याहुः ॥ २६ ॥ मनीषिण इति ॥ मनोनियमने समर्था मनीषिणो विवेकिनः त्रिवृद्भिः त्रिगुणात्मिकाभिः नवभिः प्रकृतिमहदहङ्कारमनःपञ्चतन्मात्ररूपाभिः चकारात्पञ्चमहाभूतदशेन्द्रियरूपाभिश्च स्वशक्तिभिर्गूढमप्रकाशमानं मनीषया श्रवणादिविशुद्धया बुद्ध्यान्तर्हृदि संनिवेशितं निश्चलीकृतं यं निष्कर्षन्ति अहंकारास्पदादात्मनोऽन्यं परमात्मानं विविच्य ध्यायन्ति स निर्वाणसुखानुभूतिर्मम प्रसीदतामित्युत्तरेणान्वयः । यथा दारुणि स्थितं पाञ्चदश्यं पञ्चदशसामिधेनीमन्त्रैः प्रकाश्यमलौकिकं वह्निं निष्कर्षन्ति तथा प्रकृत्यादिसंघातेभ्यो भक्ता भगवन्तं निष्कर्षन्ति । केचित्तु व्याचक्षते दुर्विज्ञेयं सविशेषं स्वरूपमाह । मनीषिणः श्रवणादिद्वारा

**यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसंप्रमोषात् ॥ य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥ मनीषिणोऽन्तर्हृदि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ॥ वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कर्षन्ति गूढम् ॥ २७ ॥ स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥ यद्यन्निरुक्तं वचसा निरूपितं धियाक्षभिर्वा मनसा वोत यस्य ॥ मा भूत्स्वरूपं गुणरूपबृंहितं स वै गुणापायविसर्गलक्षणः ॥ २९ ॥**

अन्तर्हृदि सन्निवेशितं नवभिर्विमलोत्कर्षिण्यादिभिः तिसृभिर्ह्लादिनीसन्धिनीसंविद्वृत्तिभिश्चेति स्वशक्तिभिश्चिच्छक्तिभिः सहितं पुनर्मनीषया प्रेमभक्त्युत्थया निष्कर्षन्ति अन्तर्हृदयान्निष्कृष्य च क्षुरादिभिरिन्द्रियैः सौन्दर्यादिमाधुर्यमास्वादयन्ति । अस्य सविशेषस्वरूपस्याप्राकृतानन्तगुणस्य दुर्विज्ञेयत्वमुक्तं ब्रह्मस्तुतौ । "गुणात्मनस्तेऽपि गुणान्विमातुम्" इत्यादि ॥ २७ ॥ स वा इति ॥ अशेषा विशेषा यस्यास्तस्या मायायाः कार्यकारणात्मकप्रपञ्चरूपायाः प्रकृतेर्नेति नेति निषेधे विवेकेन त्यागे सति निर्वाण इति सुखम् आनन्दरूपानुभूतिर्यस्य सः सर्वाणि नामानि यस्य स सर्वनामा विश्वानि सर्वाणि रूपाणि यस्य स विश्वरूपश्च अनिरुक्ता निर्वचनानर्हा आत्मनि शक्तिर्यस्य सः मम प्रसीदतां तङार्षः ॥२८॥ यद्यदिति ॥ यद् यत् वचसा निरुक्तमभिहितं धिया निरूपितं व्यवसितमक्षभिर्वा इन्द्रियैरपि निरूपितं गृहीतम् । "छन्दस्यपि दृश्यते" इत्यक्ष्णोऽनङ् । उतापि मनसा वापि निरूपितं संकल्पितं तत्तत् यस्य सच्चिदानन्दात्मकस्य भगवत उपास्यं मोक्षप्रदं स्वरूपं मा भूत् न भवति । हि यस्मात्तत्सर्वं गुणरूपं सत्त्वादिगुणकार्यमेवेत्यर्थः । गुणबृंहितं हि तदिति पाठे गुणैर्वर्धितमित्यर्थः । गुणरूपबृंहितमिति पाठे गुणै रूपैश्च बृंहितं स वै स परमेश्वरस्तु गुणकार्यस्य विश्वस्यापायविसर्गाभ्यां प्रलयोत्पत्तिभ्यां तत्का-

रणतया लक्ष्यतेऽनुमीयते इति तथा सोऽस्ति चेतनाधिष्ठानं विना तयोरसंभवात् । यद्वा । यस्य स्वरूपं मा भून्न भवति तस्मै नम इति तृतीयेनान्वयः ॥ २९ ॥ यस्मिन्निति ॥ इदं विश्वं यस्मिन्नधिकरणे यतोऽपादानात् येन च करणेन यस्य संबन्धि यस्मै संप्रदानाय यदीप्सिततमं कर्म यः स्वतन्त्रः कर्त्ता यथा येन प्रकारेण कुरुते येन प्रयोजककर्त्रा कार्यते च तत्परेषामवरेषां हेतूनां परमकारणं यतः सर्वेभ्यः प्राक् प्रसिद्धं तद्धेतुः तेषां कारणम् अनन्यत् विजातीयभेदशून्यम् एकं सजातीयादिभेदशून्यं तत् ब्रह्मैव एवं चात्र सप्तभिर्यच्छब्दैः सप्त विभक्त्यर्थाः दर्शिताः । यथेति च क्रियाकारकसंबन्धप्रकारवाचिनामव्ययानामर्था दर्शिताः । कुरुते कार्यते चेति स्वार्थपरार्थक्रियान्वयश्च सर्वेषां दर्शितः । चशब्देन भावकर्मादिविहितप्रत्ययार्थाः संगृहीताः ॥ ३० ॥ नन्वेवंभूते विश्वस्य हेतौ ब्रह्मणि मीमांसकतार्किकादयो विवदन्ते तत्राह—यदिति ॥ यस्य मायाविद्याद्याः शक्तयो वदतां वादिनां क्वचिद्विवादस्य क्वचित्संवादस्य च भुवः कारणानि भवन्ति एषां पण्डितंमन्यानां मुहुर्निरन्तरमात्मनः मनसो मोहं च कुर्वन्ति तस्मै अनन्तगुणाय भूम्ने व्यापिने नमः ॥ ३१ ॥ एवं विवादादिकं प्रदर्श्य तदुदाहरणं दर्शयन् धर्मिणि विवादाभावमाह—अस्तीति ॥ योग उपासनाशास्त्रं तत्र हि विराड्रूपेणोपासनायां पातालपादादि-

**यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च ॥ परावरेषां परमं प्राक्प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥ यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति ॥ कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥ अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ अवेक्षितं किंचन योगसाङ्ख्ययोः समं परं ह्यनुकूलं बृहत्तत् ॥ ३२ ॥ योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः ॥ नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥ ३३ ॥**

कमस्तीत्युपास्यत्वेन विधीयते । साङ्ख्यं हि ज्ञानशास्त्रं तत्र हि अपाणिपादमित्यादिना तस्य नामरूपादिकं नास्तीति निषिद्ध्यते इति अस्तीति नास्तीति च भिन्नौ भावाभावात्मकतया विरुद्धौ धर्मौ प्रतिपाद्यतया ययोस्तयोः वस्तुनि परमात्मनि निष्ठा ययोस्तयोः एकस्थयोः एकस्मिन्नेव तिष्ठतोः ब्रह्मैव प्रतिपादयतोः तयोर्योगसाङ्ख्यशास्त्रयोः यत्किंचन समनुगतम् अनुकूलं विवादापनोदसाधकं वस्तु अवेक्षितं प्रतीतं तद्बृहद्ब्रह्मैव तस्मै नम इत्यनुषङ्गः । अयं भावः । यद्यपि योगसाङ्ख्यप्रोक्तौ भगवति पादादिसद्भावासद्भावौ एकत्रैव विरुद्धत्वात् विरुद्धौ प्रतीयेते तथापि अनुकूलमधिष्ठानं विना पादादिकल्पनायोगात् अवधिं विना तन्निषेधायोगाच्च तयोरुपपादकं ब्रह्म सिद्धमेव अतो वस्तुतो योगसाङ्ख्यप्रोक्तपादादितदभावयोरपि न विरोधः । उपासनायां कल्पनामात्रत्वात् । भक्तास्तु योगशास्त्रं भक्तियोगशास्त्रं तत्र गुणरूपनामादिकं भगवत्यस्तीत्युक्तम् । साङ्ख्यशास्त्रे च गुणरूपादि नास्तीत्युक्तं तत्र हेयानां प्राकृतानां च गुणादीनां निषेध इति वस्तुतो न विरोध इत्याहुः ॥ ३२ ॥ य इति ॥ यो भगवानचिन्त्यैश्वर्यादिमाननन्तः देशकालवस्तुपरिच्छेदशून्यः अनामरूपः प्राकृतनामरूपरहितोऽपि स्वपादमूलं भजतामनुग्रहार्थं जन्मभिरवतारैर्विशुद्धसत्वानि रूपाणि कर्मभिर्नामानि च भेजे तत्तत्समये प्रकटितवान् स परमः

परमेश्वरो मह्यं प्रसीदतु ॥ ३३ ॥ य इति ॥ योऽन्तर्यामी जनानां सर्वदेहगतोऽपि प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैर्यथाशयं तत्तद्वासनानुसारेण तत्तद्देवतारूपेण विभिन्नतया भाति तत्तद्देवतारूपेण ईश्वरस्यैव फलदातृत्वात् । यथा पार्थिवं गुणं धूसरत्वादिकमाश्रित्यानिलो विविधनामरूपवान् विभाति तथेत्यर्थः । स ईश्वर एव मे मम मनोरथं सत्यं कुरुतात् किं देवतान्तरैः परापेक्षैः ॥ ३४ ॥ इतीति ॥ हे कुरुश्रेष्ठ इत्येवं तस्मिन्नघमर्षणसंज्ञके तीर्थे संस्तुवतो दक्षस्य स्तुतो भक्तवत्सलः स भगवानाविरासीत् ॥ ३५ ॥ तं वर्णयति—कृतपाद इति ॥ सुपर्णस्यांसे स्कन्धे कृतौ पादौ येन प्रलम्बा अष्टौ महान्तो भुजा यस्य सः चक्राद्यष्टायुधधरः ॥ ३६ ॥ पीतेति ॥ पीते वाससी यस्य सः घन इव श्यामः प्रसन्ने वदनमीक्षणे च यस्य सः वनमालया निवीतं कण्ठादिपादान्तं व्याप्तमङ्गं यस्य सः लसन्तौ श्रीवत्सकौस्तुभौ यस्य सः श्रीवत्सो रोमावर्तविशेषः कौस्तुभो मणिः

**यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ॥ यथानिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥३४॥ श्रीशुक उवाच ॥ इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे ॥ आविरासीत्कुरुश्रेष्ठ भगवान्भक्तवत्सलः ॥ ३५ ॥ कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ॥ चक्रशङ्खासिचर्मेषुधनुःपाशगदाधरः ॥ ३६ ॥ पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ॥ वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७॥ महाकिरीटकटकः स्फुरन्मकरकुण्डलः ॥ काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥३८॥ त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः ॥ वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥ ३९ ॥ स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ॥ रूपं तन्महदाश्चर्यं विचक्ष्याऽऽगतसाध्वसः ॥ ननाम दण्डवद्भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥ न किंचनोच्चारयितुमशकत्तीव्रया मुदा ॥ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः ॥ ४१ ॥ तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ॥ चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥**

॥ ३७ ॥ महाकिरीटेति ॥ महान्ति किरीटकटकानि यस्य सः स्फुरन्ती मकराकारे कुण्डले यस्य सः काञ्च्यादिभिर्विभूषितः कटकौ पादयोः वलयौ करयोः ॥ ३८ ॥ त्रैलोक्येति ॥ त्रैलोक्यमोहनं श्रीपुरुषोत्तमाख्यं सुरयूथपैरिन्द्रादिभिर्लोकपालैः स्पष्टं शेषम् ॥३९ ॥ स्तूयमान इति ॥ एवंभूत आविरासीत् इत्येकक्रियान्वयः । स्पष्टं शेषम् । रूपमिति ॥तस्य भगवतो महदाश्चर्यमत्यलौकिकं मनोहरं रूपं विचक्ष्य दृष्ट्वा प्रहृष्ट आत्मा यस्य सः अत एवागतसाध्वसः जातसम्भ्रमः प्रजापतिर्दक्षो दण्डवत् भूमौ ननाम॥४०॥ नेति ॥ यथा निर्झरैर्ह्रदिन्यो नद्यः पूर्यन्ते तथा मुदा आनन्देनापूरितैर्मनोद्वारैरिन्द्रियैर्हेतुभूतैः प्रजापतिः किंचिदप्युदीरयितुं वक्तुम् उपलक्षणतया द्रष्टुं श्रोतुं च नाशकत् महानन्दपूर्णतया योगादीनां वृत्तिनिरोधात् ॥४१ ॥ तमिति ॥ यद्यप्यसौ नावोचत् तथापि सर्वभूतानां चित्तज्ञः जनार्दनः तथावनतं भक्तं प्रजाकामं तं प्रजापतिमिदमाह स्म ॥४२॥

प्राचेतसेति ॥ हे प्राचेतस हे महाभाग यत् यतः मत्परया मदेकविषयया श्रद्धया माय पर भाव भाक्त गताऽस अतः भवान् तपसा सासद्धः ॥४३॥ प्रात इात ॥ ह प्रजानाथ यत् यस्मात्ते तपः अस्य विश्वस्य उद्बृंहणं वृद्धिकरमस्ति अतोऽहं ते प्रीतः भूतानां विभूतयः समृद्ध्यादयो भूयासुरिति यत् एष एव मम कामः अतो मत्कामपूरणादहं प्रीतोऽस्मीति । यद्वा । अस्य विश्वस्य उद्बृंहणं यत्ते तपोऽभूत् एष ममैव कामः ममेच्छयैव तव तपःसिद्धिरित्यर्थः । कामस्वरूपमाह । भूतानां विभूतयो भूयासुरिति ॥ ४४ ॥ ब्रह्मेति ॥ ब्रह्मा भवः भवन्तः प्रजापतयः इत्याद्या भूतानां प्राणिनां भूतेरुद्भवस्य हेतवः हि यस्मात् एता ब्रह्माद्या मम विभूतयोऽवतारविशेषा एव ॥ ४५ ॥ तप इति ॥ हे ब्रह्मन् तपो यमनियमादिसहितं ध्यानं मे हृदयं विद्यासाङ्गमन्त्रजपो मे तनुः क्रिया नित्यनैमित्तिकपरिचर्याद्याः आकृतिः आकारः क्रिया ध्यानादिविषयः पुंव्यापारः भावनाशब्दवाच्यः । तेन हि ध्यानादिकमाक्रियत इत्याकृतिरिति स्वामिपादाः । जाताः सुनिष्पन्नाः क्रतवो मेऽङ्गानि शिरो वा एतद्यज्ञस्य " यत्प्रवर्ग्यः ग्रीवा उपसदः चक्षुषी

श्रीभगवानुवाच ॥ प्राचेतस महाभाग संसिद्धस्तपसा भवान् ॥ यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥ ४३ ॥ प्रीतोऽहं ते प्रजानाथ यत्तेऽस्योद्बृंहणं तपः ॥ ममैष कामो भूतानां यद्भूयासुर्विभूतयः ॥ ४४॥ ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ॥ विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥ ४५ ॥ तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रियाऽऽकृतिः ॥ अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥ ४६ ॥ अहमेवासमेवाग्रे नान्यत्किंचान्तरं बहिः ॥ संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७ ॥ मय्यनन्तगुणेऽनन्ते गुणतो गुणविग्रहः ॥ यदासीत्तत एवाद्यः स्वयम्भूः समभूदजः ॥ ४८ ॥ स वै यदा महादेवो मम वीर्योपबृंहितः ॥ मेनेऽखिलमिवात्मानमुद्यतः सर्गकर्मणि ॥ ४९ ॥ अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ॥ नव विश्वसृजो युष्मान्येनादावसृजद्विभुः ॥ ५० ॥

आज्यभागौ " इत्यादिश्रुतेः । धर्मः क्रत्वाद्यपूर्वमात्मा मनः सुरा यज्ञभागभुजो मे असवः प्राणाः सन्तर्पणीयत्वात् ॥ ४६ ॥ अहमिति ॥ अग्रे सृष्टेः पूर्वम् अहमेवासमेव आन्तरं ग्राहकमन्तःकरणं बहिःकरणं वा बहिः ग्राह्यं वस्तु चान्यत् किंचिदपि नासीत् आसमेवेत्येवकारेण क्रियान्तरं व्यावर्त्तयति संज्ञानमात्रं चैतन्यमात्रमव्यक्तं यदिदानीमपीन्द्रियवृत्तिभिरनभिव्यक्तं विश्वतः सर्वतः प्रसुप्तमिव इवशब्दः प्रकाश्याभावमात्रेण प्रकाशकत्वाभावोपचारसूचनाय ॥ ४७ ॥ मयीति ॥ अनन्तगुणेऽनन्ते व्यापके मयि यदा गुणतः सत्वादितः गुणमयो गुणकार्यभूतो गुणविग्रहो ब्रह्माण्डात्मक आसीत्तदा ततस्तस्मिन्नेव आद्यः युष्माकं प्रजापतीनां कारणभूत उद्यमं विनैव जातत्वात्स्वायंभूः अदृष्टपितृकत्वादज इति व्यवह्रियमाणो ब्रह्मा समभूत् ॥ ४८ ॥ स इति ॥ स महादेवो देवेभ्यो महानपि मम वीर्येणोपबृंहितः समर्थीकृतोऽपि सर्गकर्मणि उद्यतो यदा वै आत्मानं खिलं तत्रासमर्थमिव मेने ॥ ४९ ॥ अथेति ॥ अथ तदा स देवः मे मया अभिहितः तपतपेति उपदिष्टः सन् दारुणं तपोऽतप्यत । येन तपसा स विभुः

समर्थः सन्नादौ युष्मान्विश्वसृजोऽसृजत् । नव विश्वसृज इति पाठांतरम् ॥५०॥ एषेति ॥ अङ्ग हे प्रजेश पञ्चजनसंज्ञकस्य प्रजापतेरसिक्री नामैषा दुहिता पत्नीत्वे पत्न्यर्थं प्रतिगृह्यताम् ॥ ५१ ॥ मिथुनेति ॥ मिथुनस्य यो व्यवायः रतिः स एव धर्मो यस्य स तथाभूतस्त्वं तथाभूतायां तस्यां पत्न्यामिमं प्रजासर्गं पुनर्भूरिशो भावयिष्यसि उत्पादयिष्यसि । हंसगुह्यस्तोता तत्त्वज्ञोऽपि दक्षो यत्सृष्टिमार्ग एव भगवता निक्षिप्तस्तत् श्रीशिवापराधस्य शेषत्वादेवेति ॥ ५२ ॥ त्वत्त इति ॥ त्वत्तोऽधस्तादग्रे सर्वाः प्रजा मदीयया मायया स्त्रीरूपया सह मिथुनीभूय भविष्यन्ति पुत्रादिरूपेण जनिष्यन्ते मे बलिं च हरिष्यन्ति मम पूजनं च करिष्यन्ति ॥ ५३ ॥ इतीति ॥ इत्येवमुक्त्वा विश्वस्य भावनः उपबृंहकः भगवान् हरिः तस्य प्रजापतेर्मिषतः सतः स्वप्न उपलब्धो दृष्टोऽर्थ इव तत्रैवान्तर्दधे ॥ ५४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य चतुर्थे निरमादिमाम् ॥ ४ ॥ पञ्चमे स्वसुतान् दक्षो गतान्नारदवाक्यतः ॥ श्रुत्वा शशाप तं तत्र श्लोका दृष्टाः कृतार्थ्यैः ॥ तावंत्योऽनुष्टुभोऽप्यत्रोवाचवाचां चतुष्टयम् ॥ ५ ॥

एषा पञ्चजनस्याऽङ्ग दुहिता वै प्रजापतेः ॥ असिक्री नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥ मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ॥ मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥ त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूय मायया ॥ मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा मिषतस्तस्य भगवान्विश्वभावनः ॥ स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥ इति श्रीभा० षष्ठ० प्रचेतसां दक्षोत्पत्तिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः ॥ १ ॥ अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ॥ पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥ तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः ॥ सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥ ३ ॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥ तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः ॥ प्रजाविवृद्धये यत्तान्देवर्षिस्तान्ददर्श ह ॥ ५ ॥

तस्यामिति ॥ विष्णुमायया उपबृंहितः लब्धसामर्थ्यः विभुः स दक्षः तस्यां पाञ्चजन्यां हर्यश्वसंज्ञानयुतं पुत्रानजनयत् ॥ १ ॥ अपृथगिति ॥ हे नृप अपृथग्धर्मशीला एकाचारस्वभावास्ते सर्वे दाक्षायणा दक्षपुत्राः प्रजासर्गे पित्रा प्रोक्ताः प्रेरिताः तपोर्थं प्रतीचीं दिशं प्रययुः ॥ २ ॥ तत्रेति ॥ तत्र प्रतीच्यां दिशि यत्र सिन्धुसंज्ञाया नद्याः समुद्रस्य च सङ्गमोऽस्ति तत्रस्थं मुनिभिः सिद्धैश्च नितरां सेवितं सुमहत् अतिविस्तीर्णं नारायणसरो नाम तीर्थमस्ति तद्ययुरित्यनुषङ्गः ॥ ३ ॥ तदिति युग्मम् ॥ तस्य तीर्थस्य स्पर्शनादेव तत्र स्नानाचमनादिमात्रेणैव विशेषेण निर्धूतो मलो रागलोभादिर्यस्मात् स आशयोऽन्तःकरणं येषां ते तथा अत एव परमहंसानां विवेकिनां धर्मे आत्मज्ञाने प्रकर्षेणोत्पन्ना मतिर्येषां ते तथाभूता शुद्धसत्त्वा अपि प्रजाविवृद्धये पित्रादेशेन यन्त्रिताः सन्तः उग्रं तप एव तेपिरे तान् प्रजाविवृद्धये यत्तान् उद्युक्तान् देवर्षिर्नारदो ददर्श॥४॥५॥

अहो निवृत्तिमार्गाधिकारिणः प्रवृत्तिमार्गे क्लिश्येरन्निति कृपया उपदिशति स्मेत्याह—उवाचेति ॥ हे हर्यश्वाः प्रजापालकाः अपि यूयं बालिशाः अज्ञा एव अतः भुवः अन्तमदृष्ट्वा प्रजाः कथं स्रक्ष्यथ। बालका इति पाठे बालिशत्वे हेतुः ॥ ६ ॥ तथेति युग्मम् ॥ तथा भुवोन्तवत् एक एव पुरुषो यस्मिंस्तद्राष्ट्रमदृष्ट्वा तथा अदृष्टो निर्गमो यस्मात्तद्बिलमदृष्ट्वा बहुरूपं स्त्रियं चादृष्ट्वा पुंश्चल्याः पतिं पुमांसमदृष्ट्वा उभयतोवाहां विरुद्धोभयदिक्प्रवाहवतीं नदीमदृष्ट्वा पञ्चपञ्चानां पञ्चविंशतिवस्तूनामद्भुतं गृहमदृष्ट्वा चित्राः कथा यस्य तं हंसं क्वचिददृष्ट्वा क्षौरपव्यं क्षुरैः पविभिर्वज्रैश्च विनिर्मितमिवातितीक्ष्णं दृढं च स्वयं स्वतन्त्रं भ्रमिं भ्रमणस्वभावं किमपि वस्तु अदृष्ट्वा प्रजाः कथं स्रक्ष्यथ ॥ ७ ॥ ८ ॥ कथमिति ॥ अहो विपश्चितः सर्वज्ञस्य स्वपितुः स्वानुरूपमादेशमनुशासनमविद्वांसो जानन्तः कथं सर्गं करिष्यथ ॥ ९ ॥ तदिति ॥ तद्देवर्षेर्वाचः कूटं परोक्षवादेनार्थान्तरमिव प्रतीयमानं वचनसमूहं निशम्याथानन्तरमौत्पत्तिकी सहजा मनीषा विचारशक्तिर्यस्यास्तया धिया हर्यश्वाः स्वयमेव विमम्रृशुः विचारितवन्तः ॥ १० ॥ तत्रादृष्ट्वान्तमित्यस्यार्थ-

उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ॥ अदृष्ट्वान्तं भुवो यूयं बालिशा बत पालकाः ॥ ६ ॥ तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमम् ॥ बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥ नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् ॥ क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयंभ्रमि ॥ ८ ॥ कथं स्वपितुरादेशमविद्वांसो विपश्चितः ॥ अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥ श्रीशुक उवाच ॥ तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ॥ वाचः कूटं तु देवर्षेः स्वयं विमम्रृशुर्धिया ॥ १० ॥ भूः क्षेत्रं जीवसंज्ञं यदनादि निजबन्धनम् ॥ अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत्॥११॥एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः ॥ तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥पुमान्नैवेति यद्गत्वा बिलसर्गं गतो यथा ॥ प्रत्यग्धामाऽविद इह किमसत्कर्मभिर्भवेत्॥१३॥नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ॥ तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥१४॥

माहुः—भूरिति ॥ भूः भूशब्दोक्तं क्षेत्रं क्षेत्रवत् पुण्यपापसुखदुःखाद्युद्भवस्थानत्वाज्जीवोपाधिभूतं लिङ्गशरीरं यदनादि चिरन्तनं निजस्य जीवस्य बन्धनं तस्य निर्वाणमन्तशब्दोक्तं नाशोपायमदृष्ट्वाऽसद्भिर्मोक्षानुपयोगिभिर्बन्धहेतुभिः कर्मभिः किं फलं भवेन्न किमपीत्यर्थः ॥ ११ ॥ तथैकपुरुषमित्यस्यार्थमाहुः—एक इति ॥ राष्ट्रशब्देन जगत् विवक्षितं तत्र ईश्वरः कर्त्तुमन्यथा कर्त्तुं समर्थः तुर्यः विश्वतैजसप्राज्ञेभ्योऽन्यश्च चतुर्थः सर्वसाक्षी स्वाश्रयं स्वाधारः परः सर्वकारणं भगवानेक एव तमभवं भवरहितं नित्यमुक्तमदृष्ट्वा असद्भिस्तदसमर्पितैर्लौकिकालौकिकैः कर्मभिः पुंसः किं फलं भवेन्न किमपीत्यर्थः॥१२॥बिलं चादृष्टनिर्गममित्यस्यार्थमाहुः—पुमानिति ॥ यद्गत्वा प्राप्य बिलस्वर्गं पातालं गत इव पुमान् नैवैति पुनः संसारे नावर्त्तते तत्प्रत्यग्धाम ज्योतीरूपं ब्रह्म अविदोऽविदुषः तदहमिति ज्ञापकात्कृद्योगेऽपि कर्मणि द्वितीया ।इह जगति असद्भिर्नश्वरस्वर्गादिसाधनैः कर्मभिः किं भवेत् ॥ १३ ॥ बहुरूपां स्त्रियमित्यस्यार्थमाहुः—नानारूपेति ॥ स्वैरिणीव नानारूपा कुत्सितविषयोन्मुखतया रूपरसादिनानाकारा आत्मनो जीवस्य बुद्धिः तथात्वे

हेतुः रजआदिगुणान्विता स्वैरिण्यपि वस्त्राभरणादिभिर्नानाकारा भवति तन्निष्ठां तस्या अवसानं विवेकमगतस्याप्राप्तस्येहासद्भिः कुत्सितभोगद्वारा नरकहेतुभिः कर्मभिः किं भवेत् ॥ १४ ॥ पुमांसं पुंश्चलीपतिमित्यस्यार्थमाहुः—तत्सङ्गेति ॥ तस्या बुद्धेः सङ्गेनाभ्यासेन भ्रंशितमैश्वर्यमसङ्गत्वस्वातन्त्र्यादि यस्य तम् अत एव कुभार्यपुरुषवत् तस्या बुद्धेर्गतीः सुखदुःखहर्षविषादादिलक्षणाः संसरन्तं गच्छन्तमात्मानमबुधस्य पुरुषस्येहासद्भिस्तदध्यासनिवर्त्तकैः कर्मभिः किं भवेत् ॥ १५ ॥ नदीमुभयतोवाहामि-त्यस्यार्थमाहुः—सृष्ट्यप्ययकरीमिति ॥ सृष्टिरुत्पत्तिः अप्ययः प्रलयः तौ करोतीति तथा तां भगवतो मायां शक्त्यात्मिकां प्रकृतिं सृष्टिकाले हि तत आरभ्य पूर्वपूर्वतस्तत्त्वानि निःसरन्ति प्रलयकाले चोत्तरोत्तरतः पूर्वं पूर्वं प्रविशन्तीत्युभयतः प्रवाहो दर्शितः । वेलाकूलं नदीप्रवाहे पतितानां ततो निर्गमस्थानं तीरं "वेला स्यात्तीरनीरयोः" इत्यभि-धानात् । तद्वत्संसारप्रवाहपतितानां ततो निर्गमस्थानं तपोविद्यादि तस्यान्ते समीपे वेगितां निर्गमप्रतिबन्धाय तपोविद्यावत्सु दृष्टैः क्रोधाहङ्कारादिभिः कृतवेगां वेगिनीमित्यपि पाठः । तामविज्ञस्य एवं मायामोहेन कामक्रोधादिभिरहं संसारप्रवाहे पतितोऽस्मीति विचारशून्यस्यात एव मत्तस्य तत उद्धारहेतुं भगवद्भजनं विहाय तत्कारणविषयभो-

तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ॥ तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥१५॥ सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् ॥ मत्तस्य तामविज्ञाय किमसत्कर्मभिर्भवेत् ॥ १६ ॥ पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥ ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥२०॥

गप्रसक्तस्यासद्भिः संसारपातहेतुभिः कर्मभिः किं भवेत् ॥१६॥ "पञ्चपञ्चाद्भुतं गृहम्" इत्यस्यार्थमाहुः—पञ्चेति ॥ पञ्चविंशतितत्त्वानां पुरुषोऽन्तर्यामी अद्भुतदर्पणमाश्चर्यरूपः आश्रयः प्रकाशश्च तमध्यात्मं कार्यकारणसंघाताधिष्ठातारमबुधस्याजानतः तदर्हमितिवत् द्वितीया । इहासद्भिः स्वातन्त्र्याभिमानेन कृतैः स्वरूपावरकैः कर्मभिः किं भवेत् ॥ १७ ॥ "क्वचिद्धंसं चित्रकथम्" इत्यस्यार्थमाहुः—ऐश्वरमिति ॥ ऐश्वरमीश्वरप्रतिपादकं विविक्तं पदं चिज्जडरूपं वस्तु येनेति हंसपदार्थः बन्धमोक्षावनुदर्शयतीति तथा अनेन चित्राः कथाः यस्येति व्याख्यातमेवंभूतं शास्त्रमुत्सृज्यानभ्यस्यात एवाज्ञाय तदर्थमविदुषो षष्ठ्यर्थे चतुर्थी । असद्भिर्बहिर्मुखैः कर्मभिः किं भवेत् ॥१८॥ "क्षौरपव्यं स्वयं भ्रमि" इत्यस्यार्थमाहुः—कालचक्रमिति ॥ भ्रमि भ्रमणात्मकमित्यनुवादः तीक्ष्णमिति सर्वं जगन्निष्कर्षयत् जन्ममरणादिनेतस्ततः स्वर्गनरकादौ प्रक्षिपदिति द्वयं क्षौरपव्यपदव्याख्यानं स्वतन्त्रमिति स्वयमित्यस्य व्याख्यानम् । एवंभूतं कालचक्रमबुधस्य द्वितीया प्राग्वत् तत्तत्फलानां नित्यत्वबुद्ध्या कर्माणि कुर्वतस्तैरसद्भिः कालग्रस्त-फलकैः कर्मभिः किं भवेत् ॥ १९ ॥ "कथं स्वपितुरादेशम्" इत्यादेरर्थमाहुः—शास्त्रस्य पितुरिति ॥ उपनयनादिसंस्कारद्वारा द्वितीयजन्महेतुत्वाद्धितोपदेष्टृत्वाच्च शास्त्रं

पिता तस्य निवर्तकं निवृत्त्युपदेशकमादेशमुपदेशं यो न वेद असौ गुणविश्रम्भी गुणप्रयुक्तप्रवृत्तिमार्गे विश्वासवान् तदनुरूपाय निवृत्तिरूपाय कथम् उपक्रमेत् । तङ्भाव दीर्घाभावश्चार्षः । "मोक्षेश ब्रह्मबुद्धीनां जीवमायान्तरात्मनाम् । शास्त्रकालोपदेशानामज्ञाने किमु कर्मभिः॥" इति । वाचः कूटसंग्रहश्लोकः ॥२०॥ इतीति ॥ हे राजन् इत्येवं व्यवसिता नारदवाक्यार्थे कृतनिश्चया एकचेतसः ऐकमत्यप्रयुक्ताः हर्यश्वास्तं नारदं परिक्रम्य प्रणम्य च अनिवर्तकं पुनः संसाराप्रापकं पन्थानं भगवन्मार्गं ययुः ॥ २१ ॥ स्वरेति ॥ स्वराः षड्जादय एव ब्रह्म तत्र निर्भात आविर्भूतो यो हृषीकेशो भगवान् तस्य पदाम्बुजेऽखण्डमेकाग्रं चित्तमावेश्य मुनिर्लोकाननुचरत् अन्वचरदित्यर्थः । अडभाव आर्षः ॥ २२ ॥ नाशमिति ॥ शीलेन सुस्वभावेन शालन्ते शोभन्त इति तथा तेषां पुत्राणां नारदात् नाशम् अदर्शनं गार्हस्थ्यधर्मभ्रंशं वा निशम्य श्रुत्वा कः दक्षः अहो ममाज्ञानुसारिणः सुशीलाः पुत्राः स्वधर्माद् भ्रष्टा इति शोचन्नन्वतप्यत । यतः सुप्रजस्त्वं सत्पुत्रवत्त्वमेव तद्वियोगे शुचां शोकानां पदं स्थानं कारणमित्यर्थः ॥ २३ ॥

इति व्यवसिता राजन्हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पन्थानमनिवर्तनम् ॥ २१ ॥ स्वरब्रह्मणि निर्भातहृषीकेशपदाम्बुजे ॥ अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः ॥ २२ ॥ नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन् सुप्रजस्त्वं शुचां पदम् ॥ २३ ॥ स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः ॥ पुत्रानजनयद् दक्षः शबलाश्वान् सहस्रशः ॥ २४ ॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः॥नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः॥२५॥तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपन्तो ब्रह्म परमं तेपुस्तत्र महत्तपः॥ २६ ॥ अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः॥आराधयन्मन्त्रमिममभ्यस्यन्त इडस्पतिम् ॥२७॥ ॐ नमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥ इति तानपि राजेन्द्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥ २९ ॥

स इति ॥ ततश्च ब्रह्मणा परिसान्त्वितः स दक्षः पाञ्चजन्यायां स्वभार्यायां भूयः सहस्रशः सहस्रसङ्ख्यान् शबलाश्वसंज्ञान् पुत्रानजनयत् ॥ २४ ॥ तेऽपीति ॥ तेऽपि शबलाश्वाः पित्रा दक्षेण प्रजासर्गे समादिष्टा नियुक्ताः धृतव्रताः सन्तस्तपः कर्तुं यत्र स्वपूर्वजा भ्रातरो नारदोपदेशेन सिद्धाः भक्तिं प्राप्य कृतार्थाः जातास्तन्नारायणसरो नाम तीर्थं जग्मुः ॥ २५ ॥ तदिति ॥ तस्य तीर्थस्योपस्पर्शनादेव विशेषेण निर्धूतो निरस्तो मलो यस्य स आशयोऽन्तःकरणं येषां ते परमं ब्रह्म प्रणवं वक्ष्यमाणं मन्त्रं वा जपन्तोऽत्र स्थाने महत्तपस्तेपुः ॥२६॥ अब्भक्षा इति ॥ पूर्वार्द्धं स्पष्टम्। इमं वक्ष्यमाणं मन्त्रमभ्यसन्तः इडस्पतिं वाचां मन्त्राणां च पतिं भगवन्तमाराधयामासुः ॥२७॥ ओमिति ॥ विशुद्धं सत्वं चित्तमेव धिष्ण्यं प्रतीतिस्थानं यस्य तस्मै महाहंसाय ईश्वराय नमः धीमहि करवाम । शेषं स्पष्टम् ॥ २८ ॥ इतीति ॥ हे राजन् इत्येवं प्रतिसर्गेऽर्वाचीनसर्गोत्पादने धीर्येषां तान्मुनिर्नारद उपेत्य आगत्य पूर्ववत् अदृष्टान्तं भुव इत्यादीनि वाचः कूटानि परोक्षार्थवचनानि प्राह स्म ॥ २९ ॥

अन्यदप्याह–दाक्षायणा इति ॥ हे दाक्षायणाः हे भ्रातृवत्सलाः गदतो मम निगममुपदेशं सम्यक् सावधानतया शृणुत भ्रातृणां पदवीमेवान्विच्छत अवलोकयत ॥ ३० ॥ भ्रातॄणामिति ॥ यो भ्राता धर्मवित् भ्रात्रनुगमनं धर्म इति ज्ञानवान् भ्रातृणां प्रायणं श्रेष्ठमार्गमनुतिष्ठति स पुरुषः पुण्यमेव बन्धुर्यस्य पुण्यवान् मरुद्भिर्भ्रातृवत्सलैर्देवैः सह स्वर्गे मोदते ॥ ३१ ॥ एतावदिति ॥ हे मारिष श्रेष्ठ अमोघं सफलं दर्शनं यस्य स नारद एतावदुक्त्वा प्रययौ । ते शबलाश्वाश्चापि भ्रातृणामेव मार्गमन्वगमन् सर्गोद्योगं त्यक्त्वाऽऽत्मचिन्तनं कृतवन्तः ॥ ३२ ॥ सध्रीचीनमिति ॥ सध्रीचीनं समीचीनं प्रतीचीनं प्रत्यग्वृत्तिलभ्यं परस्य पुरुषोत्तमस्य संबन्धिनमनुपथमनुकूलं मार्गं गतास्ते अद्यापि संसारं प्रति न निवर्तन्ते । तत्र दृष्टान्तः । पश्चिमा यामिनीः यामिन्य इव । पूर्वसवर्णदीर्घ आर्षः । अतीता रात्रयो यथा न पुनरायान्ति तथेत्यर्थः ॥ ३३ ॥ एतस्मिन्निति ॥ स्पष्टम् ॥ ३४ ॥ चुक्रोधेति ॥ तच्छ्रुत्वा पुत्रशोकेन मूर्च्छितः असौ दक्षः नारदाय चुक्रोध । स्वायंभुवमनोर्वंश्याः प्रियव्रतोत्तानपादध्रुव-

दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन् मार्गं भ्रातॄणामेव मारिष ॥३२॥ सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ॥ नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥ एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥ चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः ॥ देवर्षिमुपलभ्याऽऽह रोषाद् विस्फुरिताधरः ॥ ३५ ॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥

प्राचीनबर्हिःप्रचेतोहर्यश्वाद्याः भगवत्कृपया मोक्षमार्गे मया प्रवर्तिताः । कथमेको दक्षोऽन्धकूपे पतन्नोद्ध्रियते अधुना च पुत्राणां पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि विरक्तः सुखेनोद्धार्यः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वं गतः तदा च देवर्षिमुपलभ्यागतं दृष्ट्वा रोषात् स्फुरितोऽधरो यस्य स आह स्म ॥ ३५ ॥ अहो इति ॥ अहो हे असाधो साधुवल्लिङ्गं चिह्नं जटायज्ञोपवीतादि यस्य तेन महादाम्भिकेन त्वया नोऽस्माकं साधूनां सन्मार्गस्थानाम् असाधु अभद्रमेव अकारि कृतं यतोऽर्भकाणां बालानां भिक्षोर्मार्गो निवृत्तिमार्गः प्रदर्शितः । यद्वा । नोऽस्माकमर्भकाणामसाधु अकारि यतः साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्मार्गः प्रदर्शित इत्यन्वयः । वास्तवोऽर्थस्तु नास्ति साधुर्यतः साधूनि लिङ्गान्यपि यस्य साधुभिर्लिङ्ग्यते ज्ञायते नास्ति साधु यतस्तथाकारि ॥ ३६ ॥ ननु संन्यासिनो मार्गः साधुरेव तत्राह–ऋणैरिति ॥ हे पाप " जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी " इति श्रुतेः । सर्वे त्रैवर्णिका ऋणत्रयवन्त एव जायन्ते

एतेऽपि त्रिभिर्ऋणैरमुक्ता यतो न मीमांसितानि न परिचारितानि कर्माणि यैस्ते तथा अतस्तेषां विषयभोगत्यागादेतल्लोकविघातः मोक्षानधिकारित्वाच्च परलोकश्रेयसोऽपि विघातः कृतः । तथा चाह मनुः । " ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ " इति ॥ ३७ ॥ एवमिति ॥ एवं प्राणिद्रोहेण स्वस्वामिनो हरेरपि यशोहा यशोनाशकोऽसि यतो बालानामज्ञानां मतिं सृष्ट्यादिसत्कर्मविषयां भिनत्तीति तथा अत एव परमपुरुषार्थनाशकत्वान्निरनुक्रोशो निर्दयः अत एव निरपत्रपः निर्लज्जस्त्वं हरेः पार्षदमध्ये कथं चरसि ॥ ३८ ॥ निर्लज्जत्वमाह—नन्विति ॥ ननु सौहृदघ्नम् अवैरिणामपि वैरंकरं त्वामृते विना भागवता नित्यं भूतानामनुग्रहे कातराः भवन्ति । त्वं तु भूतानामहितं कुर्वन् कथं न लज्जसे इति भावः ॥ ३९ ॥ ननु विरक्तानामृणापाकरणं नावश्यकं " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इति श्रुतेः । अतः ऋणैरित्याद्ययुक्तमित्याशङ्क्याह—नेति ॥ यद्यपि वैराग्यादुपशमः तस्मात्स्नेहपाशच्छेद इति रीत्या उपशमं स्नेहपाशनिकृन्तनं त्वं मन्यसे तथापि मृषा केवलिना ज्ञानं विनावधूतवेषेण त्वया इत्थं मतिचालने कृतेऽपि पुंसां विरागो नैव स्यात् ॥ ४० ॥ तत्र हेतुः— नेति ॥ नानुभूय विषयभोगं विना पुमान् विषयाणां तीक्ष्णतां

**एवं त्वं निरनुक्रोशो बालानां मतिभिद् हरेः ॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः॥ ३८॥ ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणाम्॥३९॥नेत्थं पुंसां विरागः स्यात् त्वया केवलिना मृषा॥मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम्॥ ४०॥ नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ॥ निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥ यन्नस्त्वं कर्मसंधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम्॥४२॥तन्तुकृन्तन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न भवेद् भ्रमतः पदम् ॥ ४३ ॥ श्रीशुक उवाच॥ प्रतिजग्राह तद्बाढं नारदः साधुसंमतः॥एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम्॥४४॥इतिश्रीभा० म० षष्ठ०दक्षनारदशापो नाम पञ्चमोऽध्यायः ॥५ ॥**

दुःखहेतुत्वं न जानाति अतो यथा स्वयं परप्रेरणमन्तरेणैव तस्माद्विषयानुभवेन तत्तीक्ष्णत्वज्ञानान्निर्विद्येत तथा परैर्भिन्ना प्रेरणया चालिता धीर्यस्य स न निर्विद्यते ॥ ४१ ॥ यदिति ॥ नोऽस्माकं कर्मसन्धानां वैदिककर्मानुष्ठानसंकल्पवतां । कर्तुमन्धानामिति पाठे विप्रियं कर्तुमजानतामित्यर्थः । साधूनां स्वर्गादिसाधनपराणां गृहमेधिनां गृहस्थानां पुत्रनाशनेन दुर्मर्षं दुःसहं विप्रियं यत्त्वं कृतवानसि तत्तव मर्षितमेकदा तु सोढमित्यर्थः ॥ ४२ ॥ तन्विति ॥ हे तन्तुकृन्तन अस्मत्सन्तानोच्छेदक यत्तु पुनस्त्वं नोऽस्माकमभद्रं शबलाश्वनाशनेन विप्रियमचरः कृतवान् तस्मात् हे मूढ लोकेषु भ्रमतः पर्यटतस्ते कुत्रापि पदं स्थानं न भवेत् ॥ ४३ ॥ प्रतीति ॥ साधुषु संमतः नारदः तत् तं दक्षशापं बाढं तथास्त्विति प्रतिजग्राह स्वीकृतवान् । स्वयमीश्वरः प्रतिकर्तुं समर्थोऽपि परोपद्रवं तितिक्षेत सहेतैव न शापादिनाऽपकारं कुर्यादित्येतावानेव हि यस्मात्साधुवादः साधुशब्दनिरुक्तिः ॥ ४४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य पञ्चमे निरमादिमाम् ॥ ५ ॥

षष्ठे दक्षस्य कन्यानां षष्टेर्वंशाः प्रकीर्त्तिताः ॥ विश्वरूपजनिश्चात्र श्लोकाः सार्द्धाः शराब्धयः ॥ तावंत्योऽनुष्टुभश्चैकोवाचवागपि दृश्यते ॥ ६ ॥ तत इति ॥ ततः पुत्रशोकेन निर्विण्णः पुनः पूर्वोक्तरीत्या स्वयंभुवा ब्रह्मणा अनुनीतः सान्त्वयित्वा सृष्टौ प्रवर्तितः प्राचेतसो दक्षः पुनर्नारदात् पुत्राणां नाशमाशङ्कमानोऽसिक्न्यां स्वभार्यायां षष्टिं पितृवत्सलाः पितृस्नेहवतीः दुहितॄः जनयामास ॥ १ ॥ दशेति ॥ दश धर्माय दत्तवान् । द्विषट् द्विगुणिताः षट् द्वादश या सुताः त्रयोदश काय कश्यपाय दत्तवान् । त्रिनव त्रिगुणिता नव सप्तविंशतिमिन्दोः इन्दवे सोमाय दत्तवान् । द्वे अङ्गिरसे द्वे कृशाश्वाय अपराः अवशिष्टाश्चतस्रश्च पुनस्तार्क्ष्याय तार्क्ष्यनामान्तरभाजाय कश्यपायैव दत्तवान्॥२॥ नामेति ॥ सापत्यानाम् अपत्यसहितानाममूषां दक्षकन्यानां नामधेयानि मे मत्तः शृणु यासां प्रसूतिप्रसवैः पुत्रपौत्रादिभिस्त्रयो लोका आपूरिताः ॥ ३ ॥ भानुरिति ॥ भान्वाद्या धर्मपत्न्यस्तासां सुतान् शृणु स्पष्टम् ॥ ४ ॥ भानोरिति ॥ हे नृप भानोर्देवऋषभ आसीत् तत इन्द्रसेन आसीत् । लम्बाया विद्योत आसीत् । ततो विद्योतात् स्तनयित्नव

श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥ दश धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान् ॥ भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः ॥ २ ॥ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥ ३ ॥ भानुर्लम्बा ककुब् जामिर्विश्वा साध्या मरुत्वती ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुताञ्छृणु ॥ ४ ॥ भानोस्तु देवऋषभ इन्द्रसेनस्ततो नृप ॥ विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥ ककुभः संकटस्तस्य कीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तु विश्वाया अप्रजांस्तान् प्रचक्षते ॥ साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥ मरुत्वांश्च जयन्तश्च मरुत्वत्या बभूवतुः ॥ जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥८॥ मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ॥ ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥९॥ संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः ॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥ १० ॥

आसन् ॥ ५ ॥ ककुभ इति ॥ ककुभः संकटः पुत्रः तस्य संकटस्य कीकटस्तनयोऽभवदित्यन्वयः । यतः कीकटाद्भुवो दुर्गाभिमानिनो देवा जाताः । जामेयः जाम्याः पुत्रः स्वर्गः ततः स्वर्गान्नन्दिरभवत् ॥ ६ ॥ विश्वेदेवा इति ॥ प्रचक्षते वृद्धाः कथयन्ति । तत्सुतः तेषां साध्यानां सुतः स्पष्टमन्यत् ॥ ७ ॥ मरुत्वानिति ॥ पूर्वार्द्धं स्पष्टम् । तत्र उपेन्द्रो वासुदेवांशः यं वोपेन्द्र इति विदुः अदितेः पुत्र उपेन्द्र इव जयन्तोऽप्युपेन्द्रसंज्ञः । केचित्तु पूर्वकल्पवृत्तकथनात्तत्र जयन्त उपेन्द्रः । अस्मिन् कल्पे तु वामनस्योपेन्द्रत्वस्य वक्ष्यमाणत्वात् । अयं धर्मवंशः पाद्मे कल्पे वाराहकल्पे तद्वंशस्य चतुर्थे निरूपितत्वात् तत्रत्यस्य श्रीनारायणस्य विद्यमानत्वाच्चेत्याहुः ॥ ८ ॥ मौहूर्तिकास्तत्तन्मुहूर्ताभिमानिनः स्पष्टमन्यत् ॥ ९ ॥ संकल्पाया इति ॥ स्पष्टम् । कामः पूर्वं ब्रह्मपुत्रत्वेनोक्तः । अत्र तु संकल्पपुत्र इत्यपि कल्पभेदज्ञापकम् ॥ १० ॥

वसुनामान्याह—द्रोण इत्यादि ॥ द्रोणस्याभिमतिर्नाम पत्नी तस्या हर्षादयः हर्षाद्यन्तःकरणवृत्त्यभिमानिनो देवाः पुत्राः। इदमपि कल्पान्तरवृत्तं दशमे। द्रोणभार्याया धरेति नाम्नो वक्ष्यमाणत्वात् हर्षादीनां चतुर्थस्कन्धे धर्माधर्मयोर्वंशे निरूपितत्वाच्च ॥११॥ प्राणस्येति॥ प्राणस्य ऊर्जस्वती भार्या तस्याः सहः आयुः पुरोजवः इति त्रयः पुत्राः। ऊर्जस्वती भार्येति सप्तम्यर्थे प्रथमेत्येके। पुरः तत्पुराभिमानिनीर्देवताः शेषम् उत्तरार्द्धं स्पष्टम्॥१२॥अर्कस्येति॥ स्पष्टम्॥१३॥स्कन्द इति॥स्कन्दश्चाग्निपुत्रः धात्रीत्वेन कृत्तिकापुत्रः कृत्तिका चाग्नेर्भार्या। वस्तुतः स्कन्दः शिवपुत्रः ये विशाखादयस्ते ततः स्कन्दाज्जाताः।दोषस्य भार्या शर्वरी तत्पुत्रः शिशुमारः स च हरेः कला॥१४॥ वसोरिति॥ वसोर्भार्या आङ्गिरसी तत्पुत्रो विश्वकर्मा आकृत्याः पतिः शिल्पाचार्यः ततो विश्वकर्मणश्चाक्षुषो मनुरभूत्। ध्रुववंशजोऽप्यसौ दक्षादिवदत्रापि जातः। केचित्तु एतदपि कल्पान्तरत्वज्ञापकं चतुर्थे। "स चक्षुःसूतमाकूत्यां पत्न्यां मनुमवाप ह।" इति सर्वतेजसः पुत्रत्वोक्तेः। विश्वे साध्याश्च मनोः सुताः ॥ १५ ॥ विभावसोरिति ॥ विभावसोर्भार्या उषा व्युष्टादिपुत्रत्रय-

द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ११ ॥ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः ॥ १२ ॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥ स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः॥ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला ॥१४॥ वसोराङ्गिरसी पुत्रो विश्वकर्मा कृतीपतिः ॥ ततो मनुश्चाक्षुषोऽभूद् विश्वे साध्या मनोः सुताः ॥ १५ ॥ विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥ पञ्च यामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥ सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥ अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये प्रेतभूतविनायकाः ॥ १८ ॥ प्रजापतेरङ्गिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥ कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥ धिषणायां वेदशिरा देवलं वयुनं मनुम् ॥ २० ॥

मसूत। चतुर्थे तु "प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः।" इत्युक्तं तदपि कल्पान्तरवृत्तमिति ज्ञेयम्। अथ आतपात्पञ्चयामो दिवसाभिमानी जातः अत एव रात्रिस्त्रियामा प्रदोषप्रत्यूषयोर्दिवसावयवत्वात् येन पञ्चयामेन हेतुना भूतानि कर्मसु जाग्रति प्रवर्त्तन्ते ॥ १६ ॥ सरूपेति युग्मम् ॥ भूतस्य द्वे भार्ये तत्र सरूपाख्या भार्या कोटिशो रुद्रानसूत। तेषु रैवताद्याः बहुरूपान्ताः मुख्या रुद्रा महानिति सर्वेषां विशेषणम्। एवमेकादशरूपस्य रुद्रस्य ये पार्षदाः अन्ये च ये घोररूपा भूतप्रेतादयस्तेऽन्यस्यां भार्यायां जाताः ॥ १७ ॥ १८ ॥ प्रजापतेरिति ॥ प्रजापतेरङ्गिरसो द्वे भार्ये तयोर्मध्ये स्वधा नाम पत्नी पितॄन् पुत्रत्वेऽकरोत्। अथ च सती नाम पत्नी अथर्वाङ्गिरसं नाम वेदं पुत्रत्वेऽकरोत् ॥ १९ ॥ कृशाश्व इति ॥ कृशाश्वः अर्चिर्नाम्न्यां भार्यायां धूम्रकेशमजीजनत्। धिषणाख्यायां च भार्यायां वेदशिरा वेदशिरसमित्यर्थः। देवलादित्रयं

चेति चतुरः पुत्रानजीजनत् ॥ २० ॥ तार्क्ष्यस्येति ॥ तार्क्ष्यस्य तृक्षस्य मरीचेः पुत्रत्वात् तार्क्ष्यनाम्नः कश्यपस्य विनताद्याश्चतस्रो भार्याः । सन्ध्यभाव आर्षः । स्पष्टं शेषम् ॥ २१ ॥ सुपर्णेति ॥ सुपर्णा विनता साक्षाद्यज्ञेशस्य वाहनं गरुडमसूत । गरुडस्यावतारोऽयं साक्षाद्गरुडस्य नित्यत्वात् सुपर्णैव सूर्यस्य । सूतमनूरुमरुणं च असूत । कद्रूरनेकशो नागानसूत ॥ २२ ॥ कृत्तिकेति सार्द्धम् ॥ हे भारत इन्दोः पत्न्यस्तु कृत्तिकादीनि नक्षत्राणि आसन् स इन्दुः रोहिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणात् कुपितस्य दक्षस्य शापात् यक्ष्मग्रहार्दितः क्षयरोगपीडितः सन् तासु पत्नीषु अनपत्यः अभूत् । पुनस्तं दक्षं प्रसाद्य क्षये कृष्णपक्षे दिताः खण्डिताः सतीः । क्षयैधिता इति पाठे क्षये सति पुनरेधितास्तेनैव वर्द्धिताः सतीः कला एव लेभे न त्वपत्यानि ॥ २३ ॥ शृण्विति ॥ अथ इदं जगत् याभ्यः प्रसूतं तासां लोकानां मातॄणां कश्यपपत्नीनां शङ्कराणि

तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति ॥ पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥ सुपर्णाऽसूत गरुडं साक्षाद् यज्ञेशवाहनम्॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥ कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत ॥ दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षयेदिताः ॥ २३ ॥ शृणु नामानि लोकानां मातॄणां शंकराणि च ॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ २४ ॥ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ॥ मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ॥ २५ ॥ तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ॥ २६ ॥ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः ॥ २७ ॥ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः ॥२८॥ सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु॥ द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ॥ अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः ॥२९॥ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ॥ धूमकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥ ३० ॥ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३१ ॥

सुखकराणि नामानि चकारादपत्यानि च शृणु ॥ २४ ॥ अदितिरिति ॥ स्पष्टम् । सन्ध्यभावावार्षौ ॥ २५॥ अल्पत्वेन सुगमत्वाद्यथायथं सूचीकटाहन्यायमनुसृत्य व्युत्क्रमेण तासां वंशमाह–तिमेरिति ॥ यादोगणाः मत्स्यादयो जलचराः श्वापदाः व्याघ्रादयो वनचराः । स्पष्टमन्यत् ॥ २६ ॥ ताम्राया इति ॥ स्पष्टम् ॥ २७ ॥ इलाया इति ॥ भूरुहाः वृक्षाद्याः सौरसाः सुरसायाः इमे पुत्राः द्विशफेतराः एकशफाः अश्वगर्दभादयः । स्पष्टमन्यत् ॥ २८ ॥ सुता इति सार्द्धद्वयम् ॥ एकषष्टिसङ्ख्याका दनोः पुत्रा जातास्तेषां मध्ये प्राधानिकान् मुख्यानष्टादश शृणु । द्विमूर्द्धेति ॥ २९ ॥ ३० ॥ स्वर्भानोरिति ॥ वृषपर्वणः शर्मिष्ठां कन्यां बली नाहुषः नहुषपुत्रः ययातिः उवाह ॥ ३१ ॥

वैश्वानरेति ॥ वैश्वानरो दनोः पुत्रः ॥ ३२ ॥ उपदानवीमिति सार्द्धम् ॥ अथ पुलोमां कालकां चेति द्वे वैश्वानरस्य सुते ब्रह्मणा चोदितः कः प्रजापतिर्भगवान् कश्यपः उपयेमे । तयोरतिबलत्वात् कश्यपं विना तन्मनोरथपूर्त्यसंभवात् ब्रह्मप्रेरणया अधर्ममपि पौत्रीपरिणयनमङ्गीकृतवान् ॥ ३३ ॥ ३४ ॥ पौलोमा इति सार्द्धम् ॥ हे राजन् तयोः पुलोमाकालकयोः पुत्राः पौलोमाः कालकेयाश्च दानवा युद्धशालिनो महापराक्रमवन्तः षष्टिसहस्रसङ्ख्याका निवातकवचसंज्ञका जाताः । तांश्च यज्ञघ्नान्स्वर्गं गतः इन्द्रस्य प्रियङ्करः एक एव ते पितुः पिता अर्जुनः जघान ॥ ३५ ॥ विप्रचित्तिरिति ॥ पूर्वार्द्धं स्पष्टम् । शतं चैकमित्यस्य विवरणं राहुर्ज्येष्ठो यस्य तत् तत्केतूनां शतम् इति यः केतुभिः सहितो राहुः ग्रहत्वमुपागतः ॥ ३६ ॥ अथेति ॥ मङ्गलार्थः यः अदितेर्वंशः सः अतोऽग्रे अनुपूर्वशः क्रमेण श्रूयताम् । योऽत्र विभुः नारायणो देवः स्वांशेन

वैश्वानरसुतायाश्च चतस्रश्चारुदर्शनाः ॥ उपदानवी हयशिरा पुलोमा कालका तथा ॥ ३२ ॥ उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ॥ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ ३३ ॥ उपयेमेऽथ भगवान् कश्यपो ब्रह्मचोदितः ॥ ३४ ॥ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता॥ जघान स्वर्गतो राजन्नेक इन्द्रप्रियंकरः ॥ ३५ ॥ विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३६ ॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ॥ यत्र नारायणो देवः स्वांशेनावतरद् विभुः ॥ ३७ ॥ विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥३८ ॥ विवस्वतः श्राद्धदेवं संज्ञासूयत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥ सा वै भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि ॥ ३९ ॥ छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः ॥ कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४० ॥ अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ॥ यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४१ ॥ पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा ॥ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४२ ॥

वामनरूपेण अवतरत् अवातरत् । अडभाव आर्षः ॥३७॥ विवस्वानित्याद्याः द्वादशादित्या अदितेः सुताः ॥ ३८ ॥ विवस्वत इति सार्द्धम् ॥ महाभागा विवस्वतो भार्या संज्ञा श्राद्धदेवाख्यं मनुमसूयत । तथा यमीं यमुनां यमं देवं चेति मिथुनमपि संज्ञैवासूत । सैव वडवा भूत्वा भुवि गता सती नासत्यावश्विनीकुमारौ सुषुवे ॥३९॥ छायेति ॥ छायाख्या द्वितीया पत्नी तु ततः विवस्वतः शनैश्चरं तथा सावर्णिं मनुं तपतीं नाम कन्यां च लेभे । या तपती संवरणं राजानं पतिं वव्रे ॥ ४० ॥ अर्यम्ण इति ॥ अर्यम्णो मातृकानाम पत्नी तयोरर्यममातृकयोश्चर्षणयः कृताकृतज्ञानवन्तः सुताः पश्यति कर्मत्वेन चर्षणीनां निघण्टावुक्तेः । यत्र येषु आत्मानुसन्धानविशेषत्वेन मानुषी जातिश्च ब्रह्मणोपकल्पिता । तथा च श्रुतिः । " पुरुषत्वे चाविस्तरामात्मा" इति ॥ ४१ ॥ पूषेति ॥ पूषा तु अनपत्योऽभूत् । यः पुरा दक्षयज्ञे भग्नदन्तः अभूत् पश्चात्पिष्टादश्चाभूत् ।

यः दक्षाय कुपितं हरमिति शेषः । विवृतद्विजः प्रकटितदन्तः सन् जहास ॥ ४२ ॥ त्वष्टुरिति ॥ दैत्यात्मजा रचना नाम कन्यका त्वष्टुर्भार्या तयोः ताभ्यां त्वष्टृरचनाभ्यां स्पष्टं शेषम् ॥ ४३ ॥ तमिति ॥ तं द्विषतां शत्रूणां दैत्यानां स्वस्त्रीयं भागिनेयमपि तं विश्वरूपं सुरगणाः पौरोहित्ये वव्रिरे । यत् यदा विमतेन अवज्ञातेन आङ्गिरसेन बृहस्पतिना गुरुणा त्यक्तास्तदा गत्यन्तराभावात् तं वृतवन्तः ॥ ४४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य षष्ठेऽध्याये व्यधादिमाम् ॥६॥
सप्तमे गुरुणा त्यक्तैर्विश्वरूपो वृतः सुरैः ॥ पौरोहित्यं चकारात्राध्यायश्लोकाः कुवेर्दयः ॥ उवाचेत्यष्टकं साङ्ग्विनेत्रे वेदा अनुष्टुभः ॥ ७ ॥ कस्येति ॥ हे भगवन् आत्मन आचार्येण सुराः कस्य हेतोः परित्यक्ताः तेषां शिष्याणां त्यागकारणं यत्तदेतत् गुरौ अक्रममपराधमाचक्ष्व । एतदिति सामान्ये नपुंसकम् ॥ १ ॥ इन्द्र इति अष्टकम् ॥

त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ॥ सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४३ ॥ तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि ॥ विमतेन परित्यक्ता गुरुणाङ्गिरसेन यद् ॥ ४४ ॥ इति श्रीभागवते षष्ठस्कन्धे दक्षकन्यावंशवर्णनं नाम षष्ठोऽध्यायः ॥६॥ राजोवाच ॥ कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व भगवन् शिष्याणामक्रमं गुरौ ॥ १ ॥ श्रीशुक उवाच ॥ इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥३॥ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवान् स्तूयमानश्च भारत ॥ ४ ॥ उपगीयमानो ललितमास्थानाध्यासनाश्रितः ॥ पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥ युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनन्दत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ नोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम् ॥८॥ ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ॥ आययौ स्वगृहं तूष्णीं विद्वाञ्छ्रीमदविक्रियाम् ॥९॥

हे भारत हे नृप त्रिभुवनैश्वर्यमदेनोल्लङ्घितः सतां पन्थाः येन सः मरुदादिभिः परिश्रितः परिवृतो निषेव्यमाणः स्तूयमानश्च आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदाश्रितः अप्सरोगन्धर्वादिभिर्ललितं यथा भवति तथोपगीयमानः चन्द्रमण्डलवच्चारुणा मनोहरेण पाण्डुरेण श्वेतवर्णेन आतपत्रेण छत्रेण । अन्यैश्च चामरव्यजनादिभिः पारमेष्ठ्यैर्महाराजचिह्नैर्युक्तश्च अर्द्धमासनमेवासनं यस्यास्तया मृगलोचनेतिवदासनपदस्य वृत्तावन्तर्भावः । पौलोम्या सह भृशमतिशयेन विराजमानः स इन्द्रो देवानामात्मनश्च परमाचार्यं सुरासुरैर्नमस्कृतं मुनिवरं सम्प्राप्तं सम्यक् कृपया आगतमपि वाचस्पतिं बृहस्पतिं पश्यन्नपि यदा आसनान्नोच्चचाल आसनमारुह्य प्रत्युत्थानासनादिभिश्च नाभ्यनन्दत् तदा श्रीमदेन या विक्रिया तां विद्वान् जानन् कविः क्रान्तदर्शी आङ्गिरसः बृहस्पतिः प्रभुः शापादिना इन्द्रदण्डे समर्थोऽपि तूष्णीं ततः स्थानान्निर्गत्य सहसा स्वगृ-

हमाययौ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८॥ ९ ॥ तर्हीति ॥ तर्ह्येवेन्द्रोऽप्यात्मनः सकाशाद्गुरोर्हेलनमपमानं प्रतिबुद्ध्य ज्ञात्वा सदसि स्वयं परप्रेरणमन्तरेणैवात्मना-त्मानं गर्हयामास निन्दितवान्॥१०॥ अहो इति ॥ अहो मम कृतं कर्म वै निश्चितमसाध्वेव यत् दभ्रा अल्पा बुद्धिर्यस्य तेनैश्वर्यमत्तेन मया गुरुः सदसि कात्कृतः तिरस्कृतः सदसीत्यपराधाधिक्याय ॥ ११ ॥ क इति ॥ अतः त्रिविष्टपपतेर्ममापि लक्ष्मीं सम्पदं पण्डितः तस्या मादकतादिदोषज्ञानवान् को गृध्येत् वाञ्छेत् । यया सम्पदाहं विबुधानां सात्त्विकानां देवानामीश्वरोऽप्यासुरं भावमहङ्कारमद्य नीतोऽस्मि ॥ १२ ॥ ननु राजसिंहासनस्थस्य अनभ्युत्थाने दोषाभाव इत्याशङ्क्याह—य इति ॥ पारमेष्ठ्यं धिषणं महाराजसिंहासनमधितिष्ठन् ब्राह्मणादि कमपि कंचन न प्रत्युत्तिष्ठेदिति ये ब्रूयुस्ते परमुत्कृष्टं धर्मं न विदुः।"ब्राह्मणं कुलसम्पन्नं भक्तं विष्णोर्महात्मनः ।आयान्तं वीक्ष्य नोत्तिष्ठेत्स दुःखैः परिभूयते ॥" इत्यादिशास्त्रविरोधात् ॥१३॥ तेषामिति ॥ अधस्तमसि पततां कुपथदेष्टृणां कुमार्गे प्रवर्त्तकानां तेषां वचो ये श्रद्दध्युः तत्र श्रद्धां कुर्वन्ति

तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥ अहो बत मयाऽसाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥ को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥ तेषां कुपथदेष्टृणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥ अथाहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥ एवं चिन्तयतस्तस्य मघोनो भगवान् गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतः संज्ञां परीक्षन् भगवान् स्वराट् ॥ ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥

ते मज्जन्ति नरकादिदुःखे निमग्ना भवन्ति । यथा अश्मना कृतः प्लवो नौर्यैस्ते तथा मज्जन्तं प्लवमनुमज्जन्ति तद्वदित्यर्थः ॥ १४ ॥ अथेति ॥ अथ तस्मात् अगाधा धिषणा यस्य तं सर्वज्ञम् अमराणामाचार्यं द्विजं ब्राह्मणत्वात्कृपालुं बृहस्पतिं निशठः शाठ्यरहितः अहं शीर्ष्णा तच्चरणं स्पृशन् प्रसादयिष्ये ॥ १५ ॥ एवमिति ॥ एवं तस्य मघोनः इन्द्रस्य स्वसभायामेव चिन्तयतः सतो बृहस्पतिर्यतो भगवान् सर्वज्ञोऽतस्तदभिप्रायं भाविकार्यं च सर्वं ज्ञात्वा अधि अधिकया उत्कृष्टया आत्मनो मायया शक्त्या स्वगृहाद-प्यदृष्टामन्तर्धानलक्षणां गतिं स्थितिं गतः ॥ १६ ॥ गुरोरिति ॥ यदा च भगवान् स्वराट् इन्द्रः परीक्षन् परित ईक्षमाणोऽपि । शता आर्षः । गुरोः संज्ञां स्थितिं स्थानज्ञानं नाधिगतो न प्राप्तस्तदा गुरुवैमुख्येन रक्षकाभावादसुरेभ्यः कथमस्माकं निर्वाहो भविष्यतीति धिया ध्यायन् सर्वैः सुरैर्युक्तोऽप्यात्मनो मनसः शर्म स्वास्थ्यं नालभत ॥ १७ ॥

तदिति ॥ तद् बृहस्पतेर्वैमनस्यं श्रुत्वैव दुर्मदाः सर्वेऽसुराः औशनसं मतं शुक्राचार्यस्य संमतिमाश्रित्य आततायिनः गृहीतशस्त्राः सन्तो देवान् प्रत्युद्यमं चक्रुः तेषां नाशाय युद्धं चक्रुः ॥ १८ ॥ तैरिति ॥ तदा तैरसुरैर्विसृष्टैस्तीक्ष्णैरिषुभिर्निर्भिन्नान्यङ्गानि ऊदरशिरआदीनि उरवो बाहवश्च येषां ते तथाभूताः अत एव लज्जया आनता कन्धरा येषां ते तथाभूताः इन्द्रेण सहिता देवाः ब्रह्माणं शरणं ययुः उपायार्थं विज्ञापनं चक्रुः ॥ १९ ॥ तानिति ॥ तान् देवान् तथोक्तप्रकारेणासुरैरभ्यर्दितान् पीडितान् वीक्ष्य परया कृपया व्याप्तस्तान् परिसान्त्वयन् भगवानजो देवः आत्मभूः ब्रह्मा उवाच ॥ २० ॥ अहो इति ॥ हे सुरश्रेष्ठाः ऐश्वर्यमदात् ब्राह्मणं तत्रापि दान्तं वशीकृतचित्तं तत्रापि ब्रह्मिष्ठं ब्रह्मज्ञानिनं यन्नाभ्यनन्दत नाभिनन्दितवन्तस्तद्वो युष्माभिर्महदभद्रमन्याय्यमेव कृतम् ॥२१॥ तस्येति॥ हे सुरा :स्वे स्वयं वैरिणो हन्तारो येषां तेभ्यः पूर्वं भवद्भिरेव पराभूतेभ्य इत्यर्थः । प्रक्षीणेभ्यः परेभ्यः दैत्येभ्यः अत्र परेभ्योऽन्येभ्यः सकाशात् केभ्यः स्ववैरिभ्य इति चक्रवर्ती । वो युष्माकं समृ-

तच्छ्रुत्वैवासुराः सर्वे आश्रित्यौशनसं मतम्॥देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः॥१८॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः ॥ ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः॥१९॥तांस्तथाऽभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः॥कृपया परया देव उवाच परिसान्त्वयन्॥२०॥ब्रह्मोवाच॥ अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत्॥ ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत॥२१॥तस्यायमनयस्यासीत् परेभ्यो वः पराभवः॥प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत्सुराः॥२२॥मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात्॥संप्रत्युपचितान् भूयः काव्यमाराध्य भक्तितः॥आददीरन् निलयनं ममापि भृगुदेवताः॥२३॥त्रिविष्टपं किं गणयन्त्यभेद्यमन्त्रा भृगूणामनुशिक्षितार्थाः॥न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम्॥२४॥तद् विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम्॥सभाजितोऽर्थान् स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥

द्धानामपि यत् यः पराभवः स एव तस्यैवानयस्य अन्यायस्यायं विपाकः फलं युष्माकमासीत् ॥ २२ ॥ मघवन्निति सार्द्धम् ॥ हे मघवन् पूर्वं गुरोरतिक्रमात् प्रक्षीणान् अपि द्विषतः शत्रून् सम्प्रति भक्तितः काव्यं शुक्रं गुरुमाराध्य उपसेव्य भूय उपचितान् पश्य । यतः भृगुः शुक्रः देवता येषां ते ममापि निलयनं स्थानमाददीरन् गृह्णीयुः । गुरुसत्कारतिरस्कारावेव सम्पद्विपदोर्हेतू इति भावः ॥ २३ ॥ अत्र सामाद्या उपाया अप्यशक्या इत्याह—त्रिविष्टपमिति ॥ अभेद्यो मन्त्रो मन्त्रणा येषां ते तथा । तत्र हेतुमाह । भृगूणामिति । शुक्राचार्याणामनुशिक्षितमेवार्थः पुरुषार्थत्वेनोपादेयो येषां ते दैत्याः त्रिविष्टपं किं गणयन्ति । यतः विप्रा गोविन्दो गावश्चेश्वरा अनुग्राहका येषां तेषां नरेश्वराणामभद्राणि नैव भवन्ति अन्येषां तु भवन्ति अतः यावद्दैत्यानां विप्रादयोऽनुग्राहकास्तावत्तेषामभद्राणि न भविष्यन्ति । यदा भवतामपि विप्राद्या अनुग्राहका भविष्यन्ति तदा भवतामपि दुःखशान्तिर्भविष्यतीति ॥ २४ ॥ तदिति ॥ तत्तस्मात् तपस्विनं त्वाष्ट्रं त्वष्टुः पुत्रम् आत्मवन्तं स्वाधीनं विश्वरूपं विप्रमाशु भजत । यद्यस्य विश्व-

रूपस्य कर्म असुरपक्षपातरूपं क्षमिष्यध्वम् । लृटि टेरेत्वाभाव आर्षः । तत्तदा सः युष्माभिः सभाजितः सत्कृतः सन्नथानन्तरमेव वो युष्माकमर्थान् मनोरथान् विधास्यत साधयिष्यति ॥ २५ ॥ त इति ॥ हे राजन् ते देवाः ब्रह्मणा एवमुदिताः उक्ताः अत एव विगतः ज्वरोऽसुरजनितः सन्तापो येषां ते त्वाष्ट्रं विश्वरूपम् ऋषिम् उपव्रज्य परिष्वज्य चेदं वक्ष्यमाणमब्रुवन् ॥ २६ ॥ वयमिति ॥ हे तात ते तव भद्रमस्तु । वयमतिथयो याचकास्ते तवाश्रमं प्राप्ताः अतो हे तात पितॄणामस्माकं समयोचितः एतत्कालयोग्यः कामः मनोरथः सम्पाद्यताम् ॥ २७ ॥ पुत्राणामिति ॥ हे ब्रह्मन् पुत्रवतां पुत्रादिपोषणव्यापृतानामपि सतां पुत्राणां परः उत्कृष्टो धर्मः पितृशुश्रूषणं सेवनमेव ब्रह्मचारिणां पुत्राद्यभावेन तत्पोषणचिन्तारहितानां भवादृशानां तु पितृसेवापरो धर्म इति किमुत वक्तव्यम् । तेषां तु तद्भवत्येवेत्यर्थः ॥ २८ ॥ आचार्य इति ॥ आचार्यः उपनयनपूर्वकं साङ्गोपनिषद्वेदाध्यापकः ब्रह्मणो वेदस्य मूर्त्तिः पिता प्रजापतेर्ब्रह्मणो मूर्त्तिः भ्राता मरुत्पतेरिन्द्रस्य मूर्त्तिः माता साक्षात्क्षितेस्तनुः ॥ २९ ॥ दयाया इति ॥

श्रीशुक उवाच ॥ त एवमुदिता राजन् ब्रह्मणा विगतज्वराः ॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः सम्पाद्यतां तात पितॄणां समयोचितः ॥ २७ ॥ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २८ ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ २९ ॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ॥ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥ तस्मात् पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपनयंस्तात संदेशं कर्तुमर्हसि ॥ ३१ ॥ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथाञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ॥ छन्दोभ्योऽन्यत्र न ब्रह्मन् वयो ज्यैष्ठ्यस्य कारणम् ॥ ३३ ॥

भगिनी दयाया मूर्त्तिः अतिथिः अज्ञातपूर्वः गृहागतः स्वयं साक्षाद्धर्मस्य आत्मा मूर्त्तिः अभ्यागतो ज्ञातपूर्वः सः अग्नेर्मूर्त्तिः। सर्वभूतानि च स्थावरजङ्गमानि सर्वात्मनो भगवतो मूर्तयः । सर्वभूतेष्वात्मदृष्टिः कर्त्तव्येत्यर्थः ॥ ३० ॥ तस्मादिति ॥ हे तात तस्मात् पितॄणामार्त्तानामस्माकं परेभ्यः शत्रुभ्यः पराभवरूपामार्तिं स्वतपसापनयन् सन्देशमस्मदर्थितं कर्त्तुमर्हसि ॥ ३१ ॥ वृणीमह इति ॥ ब्रह्मिष्ठं ब्रह्मनिष्ठं ब्राह्मणं गुरुं त्वाम् उपाध्यायं वृणीमहे । यथा येनोपाध्यायवरणप्रकारेण तव तेजसा अञ्जसा अनायासेनैव सपत्नान् स्वशत्रून् विजेष्यामः । तङभाव आर्षः ॥ ३२ ॥ ननूपाध्यायस्य पादाभिवन्दनमावश्यकं तज्ज्येष्ठानां वः भ्रातुष्पुत्रे मयि कथं युक्तमित्याशङ्क्याह—नेति ॥ हे ब्रह्मन् अर्थेषु प्रयोजननिमित्तं हि यविष्ठस्य कनिष्ठस्याङ्घ्र्यभिवादनं न गर्हयन्ति वृद्धाः । वस्तुतस्तु छन्दोभ्योऽन्यत्र वेदज्ञानं विहाय न वयो ज्यैष्ठ्यस्य ज्येष्ठत्वस्य कारणं किंतु वेदज्ञत्वमेव ज्येष्ठत्वस्य कारणम् । यद्वा । छन्दोभ्यो वैदिककृत्येभ्योऽन्यत्र अर्थेषु व्यावहारिककृत्येषु यविष्ठाङ्घ्र्यभिवादनं न गर्हयन्तीति न अपि तु गर्हयन्त्येव । यतो व्यव-

हारकृत्येषु वय एव ज्येष्ठत्वकारणं वैदिककृत्येषु न वयोज्येष्ठत्वकारणं किन्तु छन्दोज्ञत्वमेवातस्तव वेदज्ञानेऽधिकत्वादभिवादनीयोऽसि इति ॥ ३३ ॥ अभ्यर्थित इति ॥ स्पष्टम् ॥ ३४ ॥ विगर्हितमिति सार्द्धम् ॥ हे नाथाः पौरोहित्यं धर्मशीलैर्विगर्हितं निन्दितं ब्रह्मवर्चसः ब्रह्मतेजसः । समासान्ताभाव आर्षः । उपव्ययः अधिकक्षयो यस्मात् तथापि मद्विधः सुशीलः तच्छिष्यः तेषां भवतां शिक्षणार्हः लोकेशैर्युष्माभिरभियाचितं कथं प्रत्याख्यास्यति । अस्माकं तु स एव युष्मद्वचनप्रत्याख्यानाभाव एव स्वार्थः स्वपुरुषार्थ उच्यते । शास्त्रे शास्त्रज्ञैरिति शेषः ॥ ३५ ॥ धनलाभार्थं पौरोहित्यं नाङ्गीकरोम्यपि तु भवतां गौरवादेवेत्याह—अकिञ्चनानामिति ॥ हे अधीश्वराः क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलं हट्टादौ पतितव्रीह्यादेरुपादानमुञ्छनं तदेवाकिंचनानां तपस्विनां धनं हि प्रसिद्धम् । तत्र तत्र शास्त्रे तेनेह द्विविधेनान्नेनेह गृहाश्रमे निर्वर्तिता साधूनां सदाचाराणां सती लौकिकालौकिकक्रिया येन स तथाविधोऽहं येन दुर्मतिर्हृष्यति तादृशं विगर्ह्यं तेजोहानिकरत्वेन निन्द्यं पौरोधसं कथं करोमि ॥ ३६ ॥ तथापीति ॥

ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३४ ॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मवर्च उपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥ अकिंचनानां हि धनं शिलोञ्छनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ३६ ॥ तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥ श्रीशुक उवाच ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८ ॥ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ॥ आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ॥ तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४० ॥ इति श्रीभा० म० ष० इन्द्रादिदेवैर्विश्वरूपस्य पौरोहित्याय वरणं नाम सप्तमोऽध्यायः ॥ ७ ॥

तथापि तेजोनाशकत्वेन निन्दितत्वेऽप्यहं न प्रतिब्रूयां न प्रत्याख्यायां गुरुभिर्युष्माभिरेतत् कियत् प्रार्थितं स्वल्पमेव प्रार्थितमतो भवतां प्रार्थितं त्वन्यदपि सर्वं प्राणैरर्थैश्चाहं साधये ॥ ३७ ॥ तेभ्य इति ॥ महातपा अपि विश्वरूपस्तेभ्यो देवेभ्य एवं प्रतिश्रुत्य प्रतिज्ञाय तैर्वृतः परमेण समाधिना परमोद्यमेन पौरोहित्यं पुरोहितकार्यं चक्रे ॥ ३८ ॥ सुरेति ॥ उशनस इयम् औशनसी तया विद्यया गुप्तामपि सुरद्विषां दैत्यानां श्रियं विष्णुर्देवतास्या इति वैष्णवी तया श्रीनारायणकवचात्मिकया विद्यया आच्छिद्य आहृत्य विभुः भगवदनुग्रहेण समर्थो विश्वरूपो महेन्द्राय अदात् ॥ ३९ ॥ ययेति ॥ यया विद्यया गुप्तो रक्षितः सहस्राक्ष इन्द्रः विभुः समर्थः सन्नसुरचमूर्दैत्यसेना जिग्ये । तज्जार्षः । तां विद्यां स उदारधीः उदारबुद्धिः विश्वरूपो महेन्द्राय प्राह स्म प्रादात् ॥ ४० ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य सप्तमे निरमादिमाम् ॥ ७ ॥

अष्टमे विश्वरूपोऽदाद्वर्म नारायणात्मकम् ॥ शक्राय जैत्रं तत्राङ्घ्रियुक्ताः श्लोकास्त्रिंशीर्द्वयः ॥ चत्वार्युवाचेति साङ्घ्रिनागवेदाः अनुष्टुभः ॥ ८ ॥ ययेति ॥ यया विद्यया गुप्तो रक्षितः सहस्राक्षः क्रीडन्निवानायासेन सवाहान् रिपुसैनिकान् दैत्यसेनापतीन् विनिर्जित्य त्रिलोक्याः संबन्धिनीं श्रियं बुभुजे ॥ १ ॥ भगवन्निति ॥ हे भगवन् तन्नारायणात्मकं वर्म कवचं ममाख्याहि । येन सहायभूतेन गुप्तो रक्षित इन्द्रो मृधे युद्धे यथा येन प्रकारेण आततायिनः वधोद्यतान् शत्रून् अजयत् तत्प्रकारं च ममाख्याहि ॥ २ ॥ वृत इति ॥ स्पष्टम् ॥ ३ ॥ धौतेति सार्द्धम् ॥ भये आगते सति धौतौ प्रक्षालितौ अङ्घ्री पाणी च येन सः आचम्य आचमनं कृत्वा अत एव शुचिः सपवित्रः पवित्रेण कुशरचितमुद्रिकाविशेषेण सहितः उदङ्मुखतयोपविश्य वाग्यतः मौनी मन्त्राभ्यामष्टाक्षरद्वादशाक्षराभ्यां कृतः स्वाङ्गेषु करयोश्च न्यासो येन स नारायणपरं नारायणदेवत्यं वर्म संनह्येत् बध्नीयात् ॥ ४ ॥ तत्राष्टाक्षरेण पादाद्यष्टाङ्गेषु न्यासमाह—पादयोरिति सार्द्धम् ॥ “ ॐ नमो नारायणाय ” इत्यस्याष्टाक्षरमन्त्रस्य प्रणवसम्पुटितमोङ्काराद्येकै-

राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥ कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ नारायणमयं वर्म सन्नह्येद् भय आगते ॥ ४ ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ५ ॥ ॐ नमो नारायणायेति विपर्ययमथापि वा ॥ करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥ ६ ॥ न्यसेद् हृदयमोङ्कारं विकारमनुमूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ७ ॥ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ॥ सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत् ॥ ॐ विष्णवे नम इति ॥ ८ ॥

कमक्षरमानुपूर्व्यात् यथाक्रमेण पादाद्यष्टाङ्गेषु विन्यसेत् । अथ वा विपर्ययं यथा भवति तथा शिरआदिपादान्तेषु यकाराद्योङ्कारान्तमपि विन्यसेत् क्रमेण सृष्टिन्यासं व्युत्क्रमेण संहारन्यासं वा कुर्यात् ॥ ५ ॥ “ ॐ नमो भगवते वासुदेवाय ” इति मन्त्रेण करन्यासं कुर्यात् । तत्र करन्यासमिति ततोऽङ्गन्यासानन्तरं द्वादशाक्षरविद्यया प्रणवादि यकारान्तं प्रणवसम्पुटितमेकैकमक्षरं दक्षिणतर्जनीपर्यन्तमङ्गुलीषु परिशिष्टमक्षरचतुष्टयमङ्गुष्ठयोराद्यन्तपर्वसु विन्यसेदिति शेषः ॥ ६ ॥ पुनः षडक्षरमन्त्रेण षडङ्गन्यासमाह—न्यसेदिति सार्द्धद्वयम् ॥ तत्राद्यः श्लोको व्याख्यातप्रायः । षकारणकारयोर्विश्लेषेण षडक्षराणि हृदयादिषडङ्गेषु न्यसेत् । शिखया शिखायामित्यर्थः । मकारमस्त्रमुद्दिश्य ध्यात्वा बुधः मन्त्रमूर्त्तिर्भवेत् । एवं मन्त्रमूर्त्तिः सन् तत् मकारास्त्रं मः अस्त्राय फडित्येवं सविसर्गं फडन्तं सर्वदिक्षु विनिर्दिशेत् दिग्बन्धं कुर्यात् ।

षकारणकार्ययोर्विश्लेषेणान्यथा प्रतीतेर्भ्रमनिरासाय मन्त्रं दर्शयति ओमिति ॥ ७ ॥ ८ ॥ आत्मानमिति ॥ षड्भिरैश्वर्यादिभिः भगशब्दवाच्याभिः शक्तिभिर्युतं विद्या च मन्त्रात्मिका तेजश्च तपश्च मूर्तिर्यस्य तं ध्येयं ध्यातुं योग्यमीश्वररूपं परमात्मानं ध्यायेत् । तदनन्तरं चेमं वक्ष्यमाणं श्रीनारायणकवचाख्यं मन्त्रमुदाहरेत् आवृत्त्या जपेदित्यर्थः ॥ ९ ॥ ॐ हरिरिति ॥ पतगेन्द्रस्य गरुडस्य पृष्ठे न्यस्ताङ्घ्रिपद्मः दरः शङ्खः अरि चक्रं तदादिकानष्टायुधान् दधानः । अष्टगुण इति अणिमाद्यष्टैश्वर्ययुक्तः अष्टायुधधारणायाष्टबाहुः हरिः सर्वदेशे सर्वकाले च मम रक्षां विदध्यात् करोतु ॥ १० ॥ जले त्विति ॥ जलेष्विति वा पाठः । यादांसि हिंस्रा जलजन्तवस्तद्गणेभ्यो वरुणस्य पाशाच्च यादोगणा एव वरुणपाशस्तस्माद्वा मां जले तु मत्स्यमूर्त्ती रक्षतु । मायया स्वेच्छया बटुवामनरूपो जातो भगवान् स्थलेषु मां रक्षतु। त्रयो विक्रमाः बलेस्त्रिभुवनमादातुं पादविक्षेपा यस्य स विश्वरूपः स्थूलरूपो मां खे आकाशे रक्षतु ॥ ११ ॥ दुर्गेष्विति ॥ यस्य महाट्टहासं विमुञ्चतः कुर्वतो दिशो विनेदुः दशदिक्षु प्रतिध्वनिर्जातस्तच्छ्रवणेन

आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ९ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ १० ॥ जले तु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ ११ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुञ्चतो यस्य महाऽट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १२ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान्॥ १३॥मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात्॥दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबन्धात्॥ १४॥सनत्कुमारोऽवतु कामदेवाद् हयशीर्षा मां पथि देवहेलनात्॥देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात्॥ १५

चासुरस्त्रीणां गर्भाश्च न्यपतन् । सः असुरयूथपस्य हिरण्यकशिपोररिः प्रभुर्नृसिंहः अटवीवनमाजिमुखं युद्धसंमुखप्रदेशः आदिर्येषां तेषु दुर्गेषु सङ्कटस्थानेषु मां पायात् ॥ १२ ॥ रक्षत्विति ॥ यज्ञैः स्वावयवरूपैः कल्प्यते निरूप्यत इति तथेति स्वार्थे कल्पप् वा यज्ञाः कल्पाः यतः इति वा स्वदंष्ट्रया उन्नीता रसातलादुद्धृता धरा येन सः असाववतारेषु प्रसिद्धो वराहो मा मामध्वनि मार्गे रक्षतु । अद्रिकूटेषु गिरिशिखरेषु रामो जामदग्न्यो मां रक्षतु। विप्रवासे देशान्तरे सलक्ष्मणो भरताग्रजो दाशरथिः रामोऽस्मान् अव्यात् ॥ १३॥ मामिति ॥ उग्रधर्मादभिचारादिप्रवृत्तितोऽखिलात्प्रमादात् विहिताकरणलक्षणाच्च मां नारायणः पातु नरश्च मां हासात् गर्वात् पातु । अयोगात् योगभ्रंशात् योगनाथो दत्तः दत्तात्रेयश्च मां पातु । सत्त्वादिगुणप्रेरितात् कर्मरूपबन्धात् मां गुणाधीशः कपिलः पायात् ॥ १४ ॥ सनदिति ॥ कामदेवात् कन्दर्पवेगात् मां सनत्कुमारोऽवतु । पथि मार्गे यद्देवानां हेलनं नमस्कारादि यथोचितमकृत्वा गमनेनावज्ञानं तस्मात् मां हयशीर्षा हयग्रीवोऽवतु । देवर्षिवर्यः नारदः पुरुषो महापुरुषो भगवांस्तदर्च-

नस्यान्तराच्छिद्रात् द्वात्रिंशदपराधलक्षणादवतु । कूर्मः कच्छपावतारो हरिर्मामशेषात् निरयात् अवतात् ॥ १५ ॥ धन्वन्तरिरिति ॥ अपथ्यात् रोगजनकद्रव्यभक्षणात् मां धन्वन्तरिर्भगवान्पातु । द्वन्द्वात् शीतोष्णादिजनिताद्भयात् निर्जितः आत्मा येन स ऋषभो मां पातु । लोकात् जनापवादात् यज्ञः यज्ञावतारो भगवान् पातु । जननिमित्तो योऽन्त उपघातस्तस्माद्बलो बलभद्रोऽवतात् । कृतान्तादिति पाठे कालादित्यर्थः । क्रोधवशात्सर्पाणां गणादहीन्द्रः शेषो मामवतात् ॥ १६ ॥ द्वैपायन इति ॥ अप्रबोधादज्ञानान्मां द्वैपायनो वेदव्यासो भगवान् प्रपातु । बुद्धस्तु पाखण्डगणाद्वेदविरुद्धाचारसमूहात् प्रमादाद्वेदविहिताचारे आलस्यादिना प्रवृत्त्यभावाच्च मां प्रपातु । धर्मस्यावनाय रक्षणाय उरवो बहवः कृता अवतारा येन स कल्किः कालमलभूतात्कलेः सकाशान्मां प्रपातु ॥ १७ ॥ दिनस्य रात्रेश्च षड्षड्भागेषु रक्षाप्रार्थनम्—मामिति ॥ तत्र दिनस्य रात्रेश्च षष्ठो भागः त्रिंशद्घटिकामिते दिनमाने पञ्चघटिकात्मकः न्यूनेऽधिके वाऽनुपातात् तत्र प्रातः दिनस्य प्रथमे भागे मां गदया युक्तः केशवोऽव्यात् । आसङ्गवं

धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनान्ताद् बलो गणात् क्रोधवशादहीन्द्रः ॥ १६ ॥ द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात् प्रमादात् ॥ कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥ १७ ॥ मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्रपाणिः ॥ १८ ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ १९ ॥ श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥ २० ॥ चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ॥ दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २१ ॥

द्वितीयो भागः सङ्गवः तमभिव्याप्य माम् आत्तवेणुः गृहीतवेणुर्गोविन्दोऽव्यात् । तृतीयो भागः प्राह्णस्तत्र गृहीतशक्तिर्नारायणोऽव्यात् । चतुर्थो भागः मध्यंदिनं तत्र मामरीन्द्रपाणिः चक्रहस्तो विष्णुरव्यात् ॥ १८ ॥ देव इति ॥ पञ्चमो भागोऽपराह्णस्तत्र मामुग्रं दैत्यभयङ्करं शार्ङ्गाख्यं धनुर्यस्य स देवो देवपक्षपाती मधुहा मधुसूदनोऽवतु । षष्ठो भागः सायं तत्र मां त्रिधामा ब्रह्मादित्रिमूर्तिः माधवोऽवतु । रात्रौ प्रथमो भागः प्रदोषस्तत्र हृषीकेशोऽवतु । उत अपि अर्द्धरात्रे द्वितीये भागे तथा निशीथे तृतीये भागेऽपि एकः पद्मनाभ एवावतु ॥ १९ ॥ श्रीवत्सेति ॥ अपररात्रे चतुर्थे भागे श्रीवत्सो रोमावर्त्तचिह्नविशेषो धामनि स्वविग्रहे वक्षःस्थले यस्य स ईशो मामव्यात् । प्रत्यूषे पञ्चमे भागे जनानामविद्यामर्दयतीति जनार्दन ईशोऽसिधरः सन् मामव्यात् । प्रभाते षष्ठे भागे दामोदरोऽव्यात् । प्राह्णादिशब्दानां क्वचित् किंचिद्भिन्नार्थवाचकत्वेऽप्यत्र तत्तद्भागपरतया विवक्षा । अनुसन्ध्यं प्रतिसन्ध्यं दिनरात्रिसन्ध्ययोः कालमूर्त्तिर्विश्वेश्वरो भगवान् मामव्यात् ॥ २० ॥ चक्रमिति ॥ युगान्तानलस्येव तिग्मा तीक्ष्णत्वेना-

तिभयङ्करा नेमिर्यस्य तत् भगवता प्रयुक्तं प्रेरितं चक्रं समन्तादस्मत्सर्वतो भ्रमत्सदस्मदरिसैन्यमाशु दन्दग्धि दन्दग्धि गर्हितं दहति। तस्यायं स्वभाव एव नतु तस्मात्प्रार्थनीय-मित्यर्थः। दहतेर्यङ्लुकि लट्। यद्वा। त्वमेवंभूतं चक्रमसि अतोऽरिसैन्यं गर्हितंद हेति लोण्मध्यमैकवचनम्। कक्षं शुष्कतृणं यथा वातोद्धूतो हुताशोऽग्निर्दहति तद्वदित्यर्थः ॥ २१ ॥ गदे इति ॥ अशनिवत्स्पर्शनं येषां ते विस्फुलिङ्गा यस्यास्तस्याः सम्बोधनं हे गदे त्वमजितस्य भगवतः प्रियासि अहं च तस्य दासः अनेन कर्त्तव्यस्यावश्यकत्वं सूचितम्।अतस्त्वं कूष्माण्डादीन्निष्पिण्ढि निष्पिण्ढि संचूर्णय संचूर्णय।अन्याननुक्तांश्चास्मदरीन् चूर्णय चूर्णय।सर्वत्र वीप्सा अतिशीघ्रत्वाय॥२२॥त्वमिति॥हे दरेन्द्र पाञ्चजन्य त्वं कृष्णेन पूरितो मुखवायुपूरणेन वादितः अत एव भीमः स्वनः शब्दो यस्य तथाभूतः सन् यातुधानादीनामन्यस्य च ममारेर्हृदयानि कम्पयन् तान् विद्रावयेति। यातुधानाः राक्षसाः प्रमथादयो रुद्रगणविशेषाः विप्रग्रहाः ब्रह्मराक्षसाः ये चान्ये घोरदृष्टयस्तान् ॥ २३ ॥ त्वमिति ॥ तिग्मा तीक्ष्णा धारा यस्य तत्सम्बोधनं हे तिग्मधार हे असिवर खड्गश्रेष्ठ त्वमीशेन भगवता प्रयुक्तो ममारिसैन्यं च्छिन्धि छिन्धि शतचन्द्राकाराणि मण्डलानि यस्मिंस्तत्सम्बोधनं हे शतचन्द्र चर्मन् अघोनामघवतां संप्रसारण-

**गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि॥कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २२ ॥ त्वं यातुधानप्रम-थप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २३ ॥ त्वं तिग्मधाराऽसिवरारिसैन्यमी-शप्रयुक्तो मम छिन्धि छिन्धि ॥ चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २४ ॥ यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यस्तथा अंहोभ्य एव वा ॥ २५ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयान्तु संक्षयं सद्यो ये नः श्रेयः-प्रतीपकाः ॥ २६ ॥ गरुडो भगवान्स्तोत्रस्तोभश्छन्दोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २७ ॥**

मार्षम्। द्विषां चक्षूंषि छादय। पापचक्षुषां च उग्रदृष्टीनां चक्षूंषि हर ॥ २४ ॥ यदिति युग्मम् ॥ नोऽस्माकं यद्भयं ग्रहेभ्य आदित्यादिभ्यो नवभ्योऽभूत् यच्च भयं केतुभ्यः उल्कापातादिभ्योऽभूत् राहुभ्रातृकेतोः ग्रहान्तर्भूतत्वात् नृभ्यो दुष्टमनुष्येभ्य एव वा यद्भयमभूत् यद्भयं सरीसृपेभ्यः सर्पवृश्चिकादिभ्योऽभूत् यत्तु भयं दंष्ट्रिभ्यो व्याघ्रसिंहादि-भ्योऽभूत् यच्च भयं भूतेभ्यः प्रेतादिभ्यः। यद्वा। पञ्चमहाभूतेभ्यो जलाग्निविद्युदादिभ्योऽभूत् यच्च भयमंहोभ्यः पापेभ्य एव वाऽभूत् एतानि सर्वाणि भयानि ये चान्ये नोऽ-स्माकं श्रेयसां च प्रतीपकाः व्याघातकाः ते च। तत्करोतीति ण्यन्तात्प्रतीपशब्दात् ण्वुल्। भगवतो नामानि रूपाणि अस्त्राणि च तेषां कीर्त्तनात् सद्यस्तत्क्षणमेव सम्यक् पुनरुत्पत्तिराहित्यं यथा भवन्ति तथा क्षयं प्रयान्तु ॥ २५ ॥ २६ ॥ गरुड इति ॥ स्तोत्राणि बृहद्रथन्तरादिसामानि तैः स्तोभ्यते संस्तूयत इति स्तोत्रस्तोभः छन्दोमयो वेदमूर्तिः।ऐकपद्यपाठे स्तोभाः गीतिपूरकाक्षराणि। स्तोत्रस्तोमच्छन्दोमय इति पाठे तु स्तोत्रस्तोमः सामाधारऋक्समूहस्तल्लक्षणं छन्दःसामवेदस्तन्मयः भगवान् प्रभुः एवंभूतो

गरुडो मामशेषकृच्छ्रेभ्यः सर्वदुःखेभ्यो रक्षतु । तथा विश्वक् सर्वतः सेना यस्य स भगवान् स्वनामभिरशेषकृच्छ्रेभ्यो रक्षतु विश्वक्सेनः पार्षदविशेषो वा ॥ २७ ॥ सर्वेति ॥ हरेर्नामानि च रूपाणि च यानानि वाहनानि आयुधानि च तानि सर्वापद्भ्यो नो बुद्धीन्द्रियमनःप्राणान् पान्तु । तथा पार्षदभूषणाः भगवत्पार्षदमुख्याश्च नो बुद्ध्यादीन् पान्तु ॥ २८ ॥ यथेति ॥ वस्तुतः परमार्थतः सच्च असच्च मूर्तामूर्तं यत्तत्सर्वं जगद्भगवानेव न ततो भिन्नम् यथा हि यथार्थं शास्त्रप्रतिपादितं सत्यं चेत्तदानेनैव सत्येन नोऽस्माकं सर्वे उपद्रवा नाशं यान्तु गच्छन्तु । यदि वेदाः प्रमाणं स्युरितिवत् असन्देहे सन्देहवचनं शैलीविशेषः ॥ २९ ॥ यथेति युग्मम् ॥ यथा ऐकात्म्यस्यानुभावो भावना ध्यानं येषां तेषां विकल्पो भेदस्तद्रहितोऽपि तथा भावनारहितानां भेददर्शिनां भूषणानि कौस्तुभादीनि आयुधानि सुदर्शनादीनि लिङ्गानि च चतुर्भुजद्विभुजादिमूर्तीः आख्याः रामकृष्णादिनामानि शक्तीः ज्ञानैश्वर्यादीनि स्वमायया स्वेच्छया स्वयमेव धत्त इति प्रतिभाति । तत्तु "यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय।" इत्यादिशास्त्रोक्तं

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः॥बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः ॥२८॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥२९॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥ भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥३०॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः॥पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥३१॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः॥प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः॥३२॥मघवन्निदमाख्यातं वर्म नारायणात्मकम्॥विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान्॥३३॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा॥पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते॥३४॥न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित्॥३५॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः॥ योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३६॥

यथा यथार्थं सत्यं चेत् तदा तेनैव सत्यमानेन यथार्थभूतेन प्रमाणेन सर्वैः पूर्वोक्तैरनुक्तैश्चाष्टभुजादिस्वरूपैर्नोऽस्मान् सदा सर्वत्र सर्वज्ञः सर्वगः भगवान् हरिः पातु ॥ ३० ॥ ३१ ॥ विदिक्ष्विति ॥ स्वनेन महाट्टहासेन यः सर्वलोकानां यद्भयं तत्प्रहापयन् अपसारयन् विदिक्षु आग्नेय्यादिषु चतसृषु दिक्षु प्राच्यादिषु चतसृषु ऊर्ध्वमधः समन्तात् सर्वतः अन्तर्बहिश्चास्मान् स्वतेजसा ग्रस्तानि अभिभूतानि समस्तानां तेजस्विनां दिग्गजविषशस्त्रजलाग्न्यादीनां तेजांसि प्रभावाः येन स भगवान्नारसिंहः नरसिंह एव पातु। यद्वा । नारसिंहः नरसिंहभक्तः प्रह्लादः स्वनेन नृसिंहनामगर्जनेन॥ ३२ ॥भगवन्निति ॥ दंशितः कवचितः विजेष्यसीति। तङभाव आर्षः । स्पष्टमन्यत्॥ ३३॥ एतदिति ॥ स दृष्टः स्पृष्टो वा सद्यः साध्वसात् भयाद्विमुच्यते किं पुनर्धारकः । स्पष्टमन्यत्॥ ३४॥नेति ॥ तस्य विद्यां धारयतः राजादिभ्यः कुतश्चित्कर्हिचिदपि भयं नैव भवेत् ॥ ३५॥ इमामिति ॥ पुरा कश्चित्कौशिको द्विजोऽभूत् स च मरुधन्वनि निरुदके मलिनेऽपि देशे इमां विद्यां धारयन् पुरा योगधारणया स्वाङ्गं जहौ । एतेन क्षेत्रतीर्थाद्यनपेक्षत्वं विद्याया दर्शितम् ॥ ३६ ॥

तस्येति ॥ एकदा स्त्रीभिर्वृतश्चित्ररथो नाम गन्धर्वपतिः यत्र द्विजस्य क्षयः देहत्यागस्तस्योपरि विमानेन ययौ ॥ ३७ ॥ गगनादिति अर्द्धम् ॥ तस्य स्थानस्योल्लङ्घनात् सद्यस्तत्क्षणमेव सविमानोऽवाक्शिराः अधःशिरा गगनान्न्यपतत् ॥ ३८ ॥ स इति ॥ अस्यास्थीनि सरस्वत्यां क्षिप ततस्त्वमितो गन्तुं शक्ष्यसि नान्यथेति वालखिल्यानां ऋषीणां वचनात्स चित्ररथः तस्यास्थीन्यादाय प्राचीसरस्वत्यां पूर्ववाहिन्यां । सरस्वत्यां पुंवद्भावाभाव आर्षः । प्रास्य प्रक्षिप्य तत्र स्नात्वा च तत्प्रभावेण विस्मितः सन् स्वं धाम गन्धर्वलोकमन्वगात् जगाम । अन्यथा गन्तुं नापारयिष्यदिति ॥ ३९ ॥ य इति ॥ काले यस्मिन् कस्मिन्नपि काले भयकाले च स्पष्टमन्यत् ॥ ४० ॥ एतामिति ॥ विश्वरूपादधिगतः प्राप्तः सन् स्पष्टमन्यत् ॥ ४१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्याष्टमेऽध्याये व्यधादिमाम् ॥ ८ ॥ नवमे विश्वरूपस्य वधो वृत्रस्य चोद्भवः ॥ देवैर्हरेः स्तुतिस्तत्र श्लोकाः सार्द्धाः शरेषवः ॥ उवाचषट्कं पादोना स्याद् द्व्यशीतिरनुष्टुभाम् ॥ ९ ॥ तस्येति ॥ हे भारत तस्य विश्वरूपस्य त्रीणि

**तस्योपरि विमानेन गन्धर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३७ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ॥३८॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ३९ ॥ श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४० ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४१ ॥ इति श्रीभागवते महा० षष्ठ० नारायणवर्मवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ३ ॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥**

शिरांसि आसन् । सोमस्य पीथं पानं यस्मिंस्तत् एवं सुरापीथम् अन्नमत्तीत्यन्नादम् इति वयं शुश्रुम ॥ १ ॥ स वा इति ॥ हे नृप यस्य देवाः पितरः स वै विश्वरूपो बर्हिषि यज्ञे प्रत्यक्षं प्रकटं सप्रश्रयं सविनयं च यथा भवति तथा देवेभ्यो हविर्भागमिन्द्रायेदमग्नय इदमित्युच्चकैरवदत् उच्चारयन्ददौ ॥ २ ॥ स इति ॥ मातू रचनाया दैत्येषु स्नेहेन तद्वशमनुगच्छतीति स एव विश्वरूपः देवान् यजमानोऽप्यसुरान्प्रति तु देवानां दृष्टिं वञ्चयित्वा परोक्षं गुप्तं यथा भवति तथा भागम् अवहत् प्रापयत् ॥ ३ ॥ तदिति ॥ तत् असुरेभ्यो हविर्दानलक्षणं तस्य विश्वरूपस्य देवहेलनं देवापराधं धर्मेऽलीकं कपटं चालक्ष्य ज्ञात्वा सुरेश्वर इन्द्र एवमयमसुरान् वर्द्धयित्वास्मान् घातयिष्यतीति भीतो रुषा क्रोधेन तरसा वेगेन तस्य शीर्षाण्यच्छिनत् ॥ ४ ॥

सोमपीथमिति ॥ यत्तस्य शिरः सोमपीथं तत्कपिञ्जलः पक्षी आसीत् एवमन्यदपि ॥ ५ ॥ ब्रह्मेति अर्द्धम् ॥ यदपि यद्यपि इन्द्र ईश्वरस्त्रिलोक्यधीश्वरस्तथापि ब्रह्महत्यायाः प्राबल्यात्तामञ्जलिना हस्तद्वयेन जातत्वात्तेनैव जग्राह स्वयमनुतापं चकारेत्यर्थः। संवत्सरेति ॥ एवमनुतापेन क्षीणपापवेगः संवत्सरपर्यन्तं तथैव विगीतः स्थित्वा तदन्ते भूतानां स्वशरीरारम्भकमहाभूतानां शुद्धये।यद्वा।प्राणिनां मध्ये स्वविशुद्धये अपवादपरिहाराय तदघं हत्यारूपं पापं भूम्यादिभ्यश्चतुर्द्धा व्यभजद्विभज्य ददौ। आकाशस्य अपाविन्यासं-भवाच्चतुर्द्धा विभागः। अन्तःकरणगतमघं तु सूक्ष्मरूपेण स्थितमेव तदेव पुनरपि वृत्रवधेन ब्रह्महत्यां जनयिष्यति ॥ ६ ॥ भूमिरिति ॥ खातस्य गर्तस्य पूरः पूरणं तेन वरेण यदि खातस्य पूरणं स्वत एव भविष्यति तर्हि हत्यां ग्रहीष्यामीति भाषाबन्धरूपेणैव ब्रह्महत्यायास्तुरीयं रूपं चतुर्थभागं भूमिर्जग्राह।भूमौ यदीरिणमूषरं प्रदृश्यते तद्ब्रह्महत्या-रूपमेवेति ज्ञेयम्। अत एवोषरेऽध्ययनादिशुभक्रियानिषेधः ॥ ७ ॥ तुर्यमिति ॥ छेदे सति विरोहः पुनः प्ररोहो भवत्विति वरेण तुर्यं ब्रह्महत्यायाश्चतुर्थं भागं द्रुमा जगृहुः। तेषामिति स्पष्टम् अतो निर्यासभक्षणनिषेधः ॥ ८ ॥ शश्वदिति ॥ शश्वत्कामवरेण नित्यबहुसंभोगेऽपि अलंबुद्ध्यभावः गर्भवत्या अपि संभोगे गर्भानुपघातश्च तद्रूपेण

**सोमपीथं तु यत्तस्य शिर आसीत्कपिञ्जलः ॥ कलविङ्कः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः ॥ संवत्सरान्ते तदघं भूतानां स विशुद्धये ॥ भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥ भूमिस्तुरीयं जग्राह खातपूरवरेण वै॥ ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः ॥ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥८॥ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥ रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥ १० ॥ हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे ॥ इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥ ११ ॥**

वरेणांहस्तुरीयं पापस्य चतुर्थं भागं स्त्रियो जगृहुः। तासु रजोरूपेण मासि मासि तत्प्रदृश्यते। तथा च रजोदर्शने स्त्रीस्पर्शादि न कार्यम् ॥ ९ ॥ द्रव्येति ॥ द्रव्यस्य भूयः आधिक्यं यत्र द्रव्ये क्षीरादावापो मिश्रा भवेयुस्तस्याधिक्यं स्यादिति वरेण। यद्वा। द्रव्याणां मध्ये स्वस्य कूपादावुद्धृतस्यापि भूयस्त्वं निर्झरोद्गमादिना पुनर्वृद्धिस्तेन वरेण तुरीयं मलं पापमापो जगृहुः। द्रवभूय इति पाठेऽप्ययमेवार्थः। यद्वा।द्रवभूयः सांसिद्धिकं द्रवत्वं तेन वरेण तत्पापं बुद्बुदफेनाभ्यां तासु दृष्टम् अत एतदभिज्ञस्तद्बुद्बुदादि क्षिपन् दूरीकुर्वन्नपो हरति आहरति। बुद्बुदादिसहिताहरणे तु पापमेवाहरति।दृष्टं तद्धरिकिल्बिषमिति पाठे इन्द्रपापमित्यर्थः ॥१०॥ संवत्सरान्ते इति प्रागुक्तेराश्विनमासारम्भ इन्द्रो ब्रह्महत्यातो मुक्तस्तदैव त्वष्टा स्वपुत्रवधं श्रुत्वा इन्द्रवधोपायं चकारेत्याह—हतेति ॥ एवमिन्द्रस्य दोषनिवृत्तौ ततस्तदनन्तरं हतः पुत्रो विश्वरूपो यस्य स त्वष्टा इन्द्रस्य शत्रुः इन्द्रशत्रुस्तत्संबोधनं हे इन्द्रशत्रो विवर्धस्व इन्द्रस्य शत्रुः सन् विवर्धस्व। मा चिरं शीघ्रमेव विद्विषं शत्रुमिन्द्रं जहीत्युच्चारयन् इन्द्राय इन्द्रं हन्तुं शत्रवे शत्रूत्पत्त्यै ।यद्वा।

इन्द्ररूपं शत्रुं हन्तुं जुहावेत्यन्वयः। इन्द्रशत्रो इत्यत्र तत्पुरुषस्याभिप्रेतत्वेऽपि इन्द्रः शत्रुर्यस्येति बहुव्रीह्यर्थ एव स्वरव्यक्तिक्रमादापतितः। तथा हि इदिधातोरुदात्तगणपठितत्वे-नेन्द्रशब्दो ह्याद्युदात्तः। तत्र समासस्य चेति सूत्रेण समासमात्र एवान्तोदात्तविधानात्तत्पुरुषे। अनुदात्तं पदमेकवर्जमित्यनेन इन्द्रशत्रो इत्यस्याद्यनुदात्तत्वं ततो बहुव्रीहौ प्रकृत्या पूर्वपदमिति तद्बाधकसूत्रेण पूर्वपदस्य स्वभावसिद्धस्वरस्थापनाद्बहुव्रीहाविन्द्रशत्रो इत्यस्याद्युदात्तत्वम्। त्वष्टा तु दैवाद्आद्युदात्तस्वरतयैव पपाठ तेन इन्द्र एव तस्य शत्रुर्हन्ता जातः। तदुक्तं श्रुत्या। "यदब्रवीत् स्वाहेन्द्रशत्रो वर्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत्" इति। तथा चोक्तंशिक्षायाम्। "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति ॥ ११॥ अथेति ॥ अथ अन्वाहार्यपचनाद्दक्षिणाग्नितः घोरदर्शनः भयङ्कररूपो वृत्र उत्थितः। भयङ्करत्वमेव स्पष्टयति।युगान्तसमये प्रलयप्रारम्भे लोकानां कृतान्तः कालात्मा रुद्रो यथा तद्वत्। चक्रवर्ती तु पचनादित्यत्र पठनादिति पपाठ व्याचख्यौ च। अथ स्वीयपा-ठव्यतिक्रमेऽवगते सति ससंभ्रममनु पश्चादेव आहार्यपठनात् स्वभावप्राप्ताद्युदात्तव्यञ्जितबहुव्रीहिपठनानन्तरम् आहार्यताप्राप्तावनुदात्तव्यञ्जिततत्पुरुषपाठाद्धेतोः घोरदर्शनः

अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ॥ कृतान्त इव लोकानां युगान्तसमये यथा ॥ १२ ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ॥
दग्धशैलप्रतीकाशं सन्ध्याऽभ्रानीकवर्चसम् ॥ १३ ॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १४ ॥ देदीप्यमाने त्रिशिखे शूल
आरोप्य रोदसी ॥ नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १५ ॥ दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि
ग्रसता भुवनत्रयम् ॥ १६ ॥ महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १७ ॥ येनावृता
इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥

उत्थितः।स्वाभाविकपाठादिन्द्रोऽस्य हन्ता भविष्यति पश्चादाहार्यपाठादिन्द्रोऽप्यनेन हतो भविष्यति स वाहनस्येन्द्रस्य निगरणात् इति भावः अन्वाहार्यशब्दस्य षाण्मासिकश्रा-द्धवाचित्वाद्व्याख्यान्तरं न घटते इति चाह स्म ॥ १२ ॥ विष्वगिति सार्द्धचतुष्कम् ॥ विष्वक् समन्ततः स्वस्योर्द्ध्वाधो दिक्षु च इषुविक्षेपमात्रं प्रतिदिनं वर्द्धमानं दग्धशैल-प्रतीकाशमत्युच्चं कृष्णवर्णं च सन्ध्याभ्रानीकवद्वर्चो दीप्तिर्यस्य तं तप्तताम्रवच्छिखाः श्मश्रूणि च यस्य तं मध्याह्नार्कवदुग्रे सन्तापकरे भयङ्करे च लोचने यस्य तं तिस्रः शिखाः अग्राणि यस्य तस्मिन् देदीप्यमाने शूले रोदसी आरोप्येव नृत्यन्तमुन्नदन्तं पदा महीं चालयन्तं नभस्तलं पिबतेव ऋक्षाणि नक्षत्राणि जिह्वया लिहतेवेति भुवनत्रयं ग्रसतेव शतार्षः। महता विस्तीर्णेन रौद्रा दंष्ट्रा यस्मिंस्तेन दरीतुल्येन गम्भीरेण वक्त्रेण मुहुर्मुहुर्जृम्भमाणं तं वीक्ष्य वित्रस्ताः सर्वे लोका दश दिशः प्रदुद्रुवुः ॥ १३॥ १४ ॥ १५ ॥ ॥ १६ ॥ १७ ॥ येनेति ॥ येन त्वाष्ट्रमूर्तिना त्वष्टुरपत्यरूपेण तमसा इमे सर्वे लोका आवृताः। स परमदारुणः भयङ्करः लोकानां पापरूप इव त्वाष्ट्र आवरकत्वाद्वृत्र इति

प्रोक्तः इति वृत्रशब्दनिरुक्तिः ।पाप इत्युत्प्रेक्षामात्रं नतु पापवत्त्वं भगवद्भक्तत्वात् ॥ १८ ॥ तमिति ॥ आद्यं पादत्रयं स्पष्टम् । सः वृत्रः तानि अस्त्रशस्त्रादीनि कृत्स्नशः सर्वाणि अग्रसत् भक्षितवान् । तङ्भाव आर्षः ॥ १९ ॥ तत इति ॥ एवं ग्रस्तं तिरस्कृतं तेजो येषां ते सर्वे देवगणास्ततस्तेजसस्तिरस्काराद्विस्मिताः विषण्णास्ते समाहिताः सन्तः प्रत्यञ्चमन्तर्यामिणमादिपुरुषमुपतस्थुः तुष्टुवुः । तङ्भाव आर्षः ॥ २० ॥ वाय्विति ॥ वाय्वाद्युपलक्षितानि त्रयोविंशतिस्तत्त्वानि तैर्निर्मितास्त्रयो लोकास्तत्रत्याः प्राणिनस्तेषामधिपतयो ब्रह्मादयश्च ततोऽर्वाचीना ये वयं ते सर्वे उद्विजन्तो भीताः सन्तः । शता आर्षः । यस्मै अन्तकाय कालाय बलिंहराम वहाम तत्तत्कालविहितं कर्म नियमेन कुर्मः । असावपि कालो यस्माद्बिभेति ततः परमेश्वरादेव नोऽस्माकमरणं शरणं रक्षणमस्तु ॥ २१ ॥ अविस्मितमिति ॥ अविस्मितं निरहङ्कारं कुतूहलशून्यं वा यद्वा।न विद्यते विस्मितमाश्चर्यं यत्र तं भावे क्तः सर्वाश्चर्यनिर्मातारि आश्चर्यासम्भवात् स्वेन स्वस्वरूपभूतपरमानन्दलाभेनैव परिपूर्णाः कामाःयस्य सममुपाधिपरिच्छेदशून्यं प्रशान्तं

तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः॥१९॥ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ॥ प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥२०॥ देवा ऊचुः॥ वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ॥ हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततोऽस्तु नः ॥ २१ ॥ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ॥ विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्ति सिन्धुम् ॥२२॥ यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरन्तात्त्राताश्रितान्वारिचरोऽपि नूनम् ॥ २३ ॥ पुरा स्वयंभूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले ॥ एकोऽरविन्दात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः॥२४॥य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम्॥वयं न यस्यापि पुरः समीहतः पश्याम लिङ्गं पृथगीशमानिनः॥२५॥

रागादिशून्यं तं विना विहाय योऽपरं शरणार्थमुपसर्पति गच्छति स बालिशः महामूर्ख एव नतु विज्ञः।हि यस्मात्स शुनो लाङ्गुलेन। ह्रस्व आर्षः।सिन्धुमतितितर्ति अतितरितुमिच्छति अतितितीर्षति आर्षः प्रयोगः । यथा श्वा एव सिन्धुं तरितुं न शक्नोति कुतः श्वपुच्छग्राहिणस्ते च यथा समुद्रे मज्जन्ति तथा परमेश्वरं त्यक्त्वान्योपायावलम्बिनो मज्जन्ति ॥ २२ ॥ यस्येति ॥ यस्य मत्स्यमूर्त्तेः उरुशृङ्गे विस्तृतशृङ्गे जगतीं पृथ्वीरूपां स्वनावं बध्वा मनुः सत्यव्रतो नाम राजा यथा यथावदनायासेनैव दुर्गं प्रलयकालिकं महाभयं ततार अतः स एव वारिचरः गृहीतमत्स्यमूर्तिर्नोऽस्मानप्याश्रितान् शरणागतान् दुरन्तात् त्वाष्ट्रभयान्नूनं त्राता रक्षिष्यति ॥ २३ ॥ पुरेति ॥ पुरा सृष्टिप्रारम्भसमय उदीर्णैरुद्भूतैर्वातैर्ये ऊर्मयस्तेषां रवैः शब्दैः कराले भयङ्करे संयमाम्भसि प्रलयोदकेऽरविन्दात् नाभिकमलात्स्वस्थानात् पतितः पतितप्रायः एकः असहायः स्वयम्भूः ब्रह्मापि तस्माद्भयात् येन सहायभूतेन ततार स एव नोऽस्माकमपि पारः अस्माद्भयात्तारकोऽस्तु ॥ २४ ॥ य इति ॥ यः ईशः एकः असहाय एव निजमायया नोऽस्मान् ससर्ज

येनानुगृहीताः सन्तो वयं विश्वं सृजामः पृथगीशमानिनोऽपि वयं यस्य पुरः समीहितः अस्मत्तः पूर्वमेव अन्तर्यामितयास्मदादिशरीराणि तत्तत्कार्येषु प्रेरयतोऽपि । शता आर्षः । लिङ्गं चिह्नं वयं न पश्यामः तमेव शरणं व्रजामः इति तृतीयेन संबन्धः ॥ २५ ॥ यो न इति ॥ नित्य एव वस्तुतः सच्चिदानन्द एव यः स्वमायया अचिन्त्यनिजशक्त्या नानातनुभिर्देवादिषु कृतावतारः सन् सपत्नैः शत्रुभिरसुरादिभिर्भृशमत्यन्तमर्द्यमानान् पीड्यमानानोऽस्मान् आत्मसात्कृत्वा स्वकीयान् मत्त्वा युगे युगे तत्तदवसरे पाति च तमेवेत्युत्तरेणान्वयः । तत्र देवेषु वामनः ऋषिषु परशुरामः तिर्यक्षु नृसिंहहयग्रीववाराहादिः नृषु रामकृष्णादिः ॥ २६ ॥ तमेवेति ॥ वयं सर्वे आत्मनां जीवानां दैवतमुपास्यं परं कारणं प्रधानं प्रकृतिरूपं पुरुषं च विश्वरूपं ततः अन्यं पृथगपि स्थितं शरण्यं शरणार्हं तमेव शरणं व्रजाम। स्वानां स्वभक्तानां नोऽस्माकं शं सुखं स एव महात्मा विधास्यति ॥२७॥ इतीति ॥ हे महाराज इत्युपतिष्ठतां तेषां सुराणां । शता आर्षः । प्रथमं प्रतीच्यां दिशि शङ्खचक्रगदाधरः। भगवानाविरभूत् अत्र प्रतीच्यां दिशि समुद्रकूले इत्यर्थः ।

यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव ॥ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगे युगे च ॥ २६ ॥ तमेव दैवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यत् ॥ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा॥२७॥श्रीशुक उवाच॥ इति तेषां महाराज सुराणामुपतिष्ठताम् ॥ प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥ २८ ॥ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥ २९ ॥ दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः ॥ दण्डवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः ॥ ३० ॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥ ३१ ॥ यत्ते गतीनां तिसृणामीशितुः परमं पदम् ॥ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥

देशान्तरस्योत्तमस्य दैत्याक्रान्तत्वात् इत्याहुः ॥ २८ ॥ आत्मेति युग्मम् ॥ हे राजन् श्रीवत्सकौस्तुभौ विनान्यैश्चतुर्भुजत्वादिभिश्चिह्नैरात्मतुल्यैः भगवत्समानरूपैः श्रीवत्सकौस्तुभौ भगवतः एव चिह्ने न तु सुनन्दादीनामिति भावः । षोडशभिः पार्षदैः सुनन्दादिभिः परितः सेवितम् उन्निद्रे फुल्ले शरदम्बुरुहे ते इवेक्षणे यस्य तं दृष्ट्वा तस्येक्षणेन य आह्लादः तेन विक्लवा विवशास्ते सर्वेऽवनौ दण्डवत्पतिताः सन्तः शनैरुत्थाय तुष्टुवुः ॥ २९ ॥ ३० ॥ नम इति ॥ यज्ञस्य वीर्यं फलजनकत्वं यस्मात्तस्मै यज्ञाधिष्ठात्रे ते तुभ्यं नमः । उत अपि वयसे कालात्मने ते नमः । अस्तं प्रक्षिप्तं चक्रमर्थादस्मद्विघातकेषु दैत्येषु येन तस्मै दैत्यविनाशकाय ते नमः । सुशोभनाः पुरवो बहवो हूतयो नामानि यस्य तस्मै नमः ॥३१ ॥ यदिति ॥ हे धातः गुणत्रयस्येशितुर्नियन्तुः गुणत्रयात्मकानां तिसृणां गतीनां परमं पदं निर्गुणस्वरूपम् । यद्वा । तिसृणां देवतिर्यङ्मनुष्याख्यानां गतीनामीशितुः प्रापकस्य ते तव यत्परमं पदं सर्वोत्कृष्टं रूपं तद्विसर्गस्यार्वाचीनः अस्मादृशो जनो वेदितुं ज्ञातुं नार्हति अतः केवलं तस्मै नमोऽस्तु ॥ ३२ ॥

ॐ नम इति ॥ परमहंसपरिव्राजकैः संन्यासिभिः परमेणातिदृढेन आत्मयोगेन परमात्मविषयकेण समाधिना चित्तैकाग्र्येण परिभाविते संशोधितेऽन्तः करणे परिस्फुटः परिस्फुरितो यः पारमहंस्यो धर्मो भगवद्भजनं तेन उद्घाटितं तमः अज्ञानरूपं कपाटं यस्य तस्मिन् द्वारभूते चित्ते अपावृते प्रकटे आत्मलोके स्वधामनि प्रत्यग्रूपे स्वयमुपलब्धमाविर्भूतं निजसुखं तदनुभवरूपो भवान् स्पष्टं शेषम्॥ ३३॥ दुरवबोध इति ॥ इवशब्दोऽवधारणे । यत्त्वमशरणो निराश्रय एवाशरीरः शरीररहितोऽपि अनवेक्षितोऽस्माकं बलाद्यधिष्ठातॄणामिन्द्रादीनां समवायो मेलनं साहाय्यं येन स तथाभूतोऽपि अगुणेऽपि सर्वोपादानत्वेऽप्यविक्रियमाणेनैवात्मनेदं सगुणं विश्वं सृजसि पासि संहरसि च सोऽयं तव विहारयोगः क्रीडाप्रकारो दुरवबोध एव ॥ ३४ ॥ अथेति ॥ अर्थान्तरे संशयान्तरमप्यस्तीत्यर्थः । देवदत्तो यथेह गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते तथा भवान् ब्रह्मस्वरूपो जीवरूपेण संसारे गुणविसर्गपतितः गुणकार्ये शरीरे प्रविष्टः पारतन्त्र्येण कालकर्मस्वभावाद्यधीनतया स्वकृतयोः शुभाशुभयोः

ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिनापरिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकवाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥३३॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥ अथ तत्रभवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददाति आहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ॥ ३५ ॥ न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसरे उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय को नु अर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥

कुशलाकुशलं सुखदुःखात्मकं फलमुपाददाति भुङ्क्ते । तङ्भाव आर्षः । यद्वा । भवानपि तत्र गुणविसर्गे पतितोऽन्तर्यामितया प्रविष्टः। यद्वा । रामकृष्णाद्यवतारेषु सुखदुःखाद्यनुभवात्तद्रूपेण स्थितःपारतन्त्र्येण कुशलाकुशलं फलमुपाददाति तङ्भाव आर्षः आहोस्वित् अथ वा आत्मारामःउपशमशीलःसमञ्जसमप्रच्युतं दर्शनं चिच्छक्तिर्यस्य तादृशो भवान् उदास्त उदासीनतया साक्षितया वर्त्तत इति ह वाव न विदाम इत्यपि नैव विद्मः ॥ ३५ ॥एवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाह—न हीति ॥ भगवति अपरिगणितगुणगणे ईश्वरे अनवगाह्यं ज्ञातुमशक्यं माहात्म्यं यस्य तत्र अर्वाचीना नव्यकल्पिताः वस्तुस्वरूपा संस्पर्शिनो विकल्पवितर्कविचारप्रमाणाभासकुतर्का येषु तैः शास्त्रैः कलिलं व्याकुलं दूषितमन्तःकरणमाश्रयो यस्य दुरवग्रहस्य तेनैव वादिनां विवादस्यानवसरे अविषये तत्र विकल्प एवं वा एवं वेत्याकारः वितर्कः किमत्र

युक्तमित्यनिश्चयः विचार इत्थमेवेति निश्चयः । तत्र प्रमाणाभासास्तदनुग्राहकाः कुतर्काश्च उपरतो निरस्तः समस्तः मायामयः संसारो यस्मिन् केवलेऽद्वितीयेऽपि त्वयि विरुध्यत इति विरोधः कर्तृत्वाकर्तृत्वं सुखित्वदुःखित्वादिकं चोभयं त्वयि न विरुद्धमित्यर्थः । न ह्यन्यदृष्टान्तेन त्वयि विकल्पो युज्यते अप्रतर्क्यैश्वर्यात् । आत्ममायामघटितघटनाकारिणीमन्तर्द्धाय मध्ये निधाय कोऽन्वर्थः कर्तृत्वादि दुर्घटः असङ्गत इव भवतीति यदि वस्तुतः कर्तृत्वादि भवेदपि न तु तदस्तीत्याहुः स्वरूपद्वयस्य अभावात् ॥ ३६ ॥ समेति ॥ सममतीनां यथार्थबुद्धीनां विषममतीनां भ्रान्तबुद्धीनां च मतमभिप्रायमनुसरसि । तत्र दृष्टान्तमाहुः । यथेति । यथा रज्जुखण्डः यथार्थबुद्धीनां रज्जुरूपेण भासमानोऽपि सर्पादिविषया धीर्येषां तेषां भयंकरादिरूपेण प्रतिभाति तथा यथार्थबुद्धीनां त्वं सच्चिदानन्दपूर्णगुणस्वरूपेण भासमानोऽपि भ्रान्तानां दुःखित्वपक्षपातित्वादिरूपेण भासि ॥ ३७ ॥ स इति ॥ पुनर्विचारे कृते स एव भगवानेव सर्ववस्तुनि सर्वप्रपञ्चवस्तुस्वरूपः परमार्थभूतः सर्वेश्वरः सकलजगतो यानि कारणानि महदादीनि तेषामपि कारणभूतः सर्वेषां जीवानां प्रत्यगात्मत्वादन्तर्यामित्वादित्यर्थः । सर्वेषां गुणानां गुणकार्यत्वेन जडानां बुद्धीन्द्रियादीनामाभासैः प्रकाशैरुपलक्षितः अन्यथा

**समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ॥ ३७ ॥ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्पन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशलाः स्वात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपर्यावर्तः ॥ ३९ ॥**

जडतादात्म्याध्यासे जीवस्यापि जडप्रायत्वात्त्वां विना जीवस्यापि न प्रकाश इति अतः सर्वलयाधिष्ठानतया नेति नेति इत्यादिश्रुतिभिः एको भवानेव पर्यवशेषित इति ॥ ३८ ॥ अथेति ॥ अथ ह वाव अत एव हे मधुमथन तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिन्दुमात्रेण सकृदवलीढया आस्वादितया भक्त्या स्वमनसि निष्पन्दमानमतिशयेन स्रवत् यत् अविरतं निरन्तरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशाभासा येषां ते एकान्तिनः भोगाकाङ्क्षाशून्याः सर्वभूतानां प्रिये सुहृदि च सर्वात्मनि भगवति त्वयि नितरां प्रतिदिनं तत्रापि निरन्तरं प्रतिक्षणं च निर्वृतं सुखेन प्रतिष्ठितं मनो येषां ते हि यस्मात् स्वार्थे पुरुषार्थे कुशला निपुणाः स्वात्मा प्रियः सुहृच्च येषाम् । यद्वा । स्वात्मनां जीवानां प्रियसुहृदः साधवः परमभागवताः एते त्वच्चरणाम्बुजानुसेवां पुनः कथमु ह वा विसृजन्ति । यत्र यस्यामनुसेवायां सत्यां सेवकस्य संसारपर्यावर्तः संसारे भ्रमणं पुनर्न भवतीत्यर्थः ॥ ३९ ॥

ननु यूयं परहिंसामुद्दिश्य मां यजध्वेऽतो नानुग्राह्या इत्याशङ्क्याहुः—त्रिभुवनेति ॥ त्रिभुवनमात्मा भुवनं स्थानं च यस्य त्रिभुवनस्यात्मा भुवनं चेति वा त्रिषु भुवनेषु विक्रमः प्रभावो यस्य त्रिषु लोकेषु नयनं दृष्टिर्यस्य त्रिषु लोकेषु मनोहरोऽनुभावो लीला यस्येति सम्बोधनानि हे दण्डधर । हे भगवन् दितिजा दैत्याः दनुजा दानवाश्च अपिशब्दादेव मनुष्यादयश्च तवैव विभूतयः । तत्र दैत्यदानवकृतलोकोपद्रवं दृष्ट्वा तस्य प्रलयहेतुत्वात्तेषामनुपक्रमसमयोऽयमुपद्रवकालोऽयं न भवतीति मत्वा स्वात्ममायया स्वस्वरूपभूतया मायया शक्त्या सुराद्याकृतिभिर्यथापराधं तेषां दण्डं दधर्थ । एवं तथैव यदि मन्यसे हन्तुमिच्छसि तदा एनं त्वाष्ट्रं वृत्रमपि जहि । तत्र सुराकृतिर्वामनादिः नराकृती रामकृष्णादिः मृगाकृतिर्वराहादिः मिश्रिताकृतिर्हयग्रीवनृसिंहादिः जलचराकृतिर्मत्स्यकूर्मादिः ॥ ४० ॥ अस्माकमिति ॥ हे तत पितः हे ततामह हे पितामह वेदे व्यवहृतौ तततताममहशब्दौ । हे अनघ तावकानां तव पादयोर्नतानां तव चरणकमलयुगले तद्ध्यानेनैवानुबद्धो हृदये निगडः शृङ्खला येषां तेषां स्वलिङ्गविवरणेन निजमूर्तिप्रकटनेन

त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दण्डं दण्डधर दधर्थ एवमेनमपि भगवञ्जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ अस्माकं तावकानां तव नतानां तत ततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिङ्गविवरणेनात्मसात्कृतानामनुकम्पाऽनुरञ्जितविशदरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चान्तस्तापमनघार्हसि शमयितुम् ॥ ४१ ॥ अथ ह भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथा देशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयाऽनुभवतः सर्वप्रत्ययसाक्षिणः ॥ आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिङ्गादिभिरिव हिरण्यरेतसः ॥ ४२ ॥

आत्मसात्कृतानां स्वकीयत्वेनाङ्गीकृतानामित्यर्थः । अस्माकमन्तःस्थितं तापं वृत्रभयम् अनुकम्पय । अनुरञ्जितं सानुरागं च विशदं निर्मलं कपटादिदोषशून्यं च रुचिरं मनोहरं च शिशिरं शीतलं च यत्स्मितं तत्सहितेनावलोकेन तथानुकम्पयैव विगलितो मुखचन्द्रान्निर्गतो यो मधुरो मोदकरो मुखरसः प्रियवाक् सैवामृतकला तया चेत्यर्थः । शमयितुमर्हसि ॥ ४१ ॥ अथेति ॥ हे भगवन् अस्माभिः अखिलजगतामुत्पत्त्यादिषु निमित्तायमाना या दिव्या अन्तरङ्गशक्त्यात्मिका माया तया विनोदो यस्य तस्य सकलजीवनिकायानामन्तर्हृदयेषु ब्रह्मस्वरूपेण उदासीनतया प्रत्यगात्मान्तर्यामी तद्रूपेण च तथा बहिरपि प्रधानस्वरूपेण च स्थितस्येति शेषः । अत एव देशकालदेहावस्थानविशेषाननुलङ्घ्य तेषामुपादानतया तेषामुपलम्भकतया चानुभवतः सर्वेषां प्रत्ययानां बुद्ध्यादीनां साक्षिणः आकाशवन्निर्विकारं शरीरं स्वरूपं यस्य तस्य साक्षात्परब्रह्मणः

परमात्मनस्तव इह इदानीं कियान् वै अर्थविशेषो विज्ञापनीयः स्यात्। यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिङ्गादिभिः प्रकाशो न क्रियते तथास्माभिरपि सर्वज्ञस्य तवाग्रे कार्यार्थं प्रकाशनं न कार्यमित्यर्थः ॥ ४२ ॥ अत इति ॥ अतः सर्वज्ञत्वाद्वयं यत्कामेन यस्य कार्यस्य कामनात् उपसृतानां शरणागतानां त्वद्भक्तानां विविधैर्वृजिनैर्दुःखैर्यः संसारपरिश्रमस्तस्योपशमकरीं भगवतः परमगुरोस्तव चरणमेव शतपलाशं कमलं तस्य च्छायामुपसादिताः प्राप्ताः त्वयैवान्तर्यामिणा कृपया प्रापिता इति वा तदस्माकं कार्यं त्वं स्वयं विज्ञप्तिमन्तरेणैवोपकल्पय सम्पादय ॥ ४३ ॥ अथो इति ॥ हे ईश हे कृष्ण अथो अनन्तरं शीघ्रमेव भुवनत्रयं ग्रसन्तं शतार्षः त्वाष्ट्रं वृत्रं जहि । येन नोऽस्माकं तेजांसि अस्त्राणि मन्त्राः आयुधानि च ग्रस्तानि ॥४४॥ हंसायेति ॥ हंसाय शुद्धाय दह्रं दहरं हृदयाकाशः स निलयो यस्य तस्मै निरीक्षकाय साक्षिणे कृष्णायानन्दरूपाय मृष्टम् उज्ज्वलं यशो यस्य निरुपक्रमायेति श्रमजनकलौकिकप्रकारमन्तरेणैव कार्यसम्पादनसमर्थायेत्यर्थः । सद्भिः संगृह्यते यस्तस्मै भवपान्थः भवरूपे पथि वर्त्तमानस्तस्य

अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥ ४३ ॥ अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम् ॥ ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च॥ ४४ ॥ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ॥ सत्संग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते ॥ ४५ ॥ श्रीशुक उवाच ॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः ॥ ४६ ॥ श्रीभगवानुवाच ॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ४७ ॥ किं दुरापं मयि प्रीते तथाऽपि विबुधर्षभाः ॥ मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् ॥ ४८ ॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ॥ तस्य तानिच्छतो यच्छेद् यदि सोऽपि तथाविधः ॥ ४९ ॥

जनस्य निजाश्रमाप्तौ स्वशरणप्राप्तौ सत्यां संसारस्यान्ते परीष्टा सर्वतः पूजिता उत्तमा गतिः फलरूपा यस्तस्मै हरये ते तुभ्यं नमः ॥ ४५ ॥ अथेति ॥ हे राजन् एवं सादरं यथा भवति तथा त्रिदशैर्देवैरीडितः स्तुतः अभिनन्दितः प्रसादितश्च हरिः स्वकीयमुपस्थानं स्तोत्रमाकर्ण्य अथानन्तरं तान् प्राह स्म ॥ ४६ ॥ प्रीत इति ॥ हे सुरश्रेष्ठाः मदीयं यदुपस्थानं स्तोत्रं तत्सहितया विद्यया ज्ञानेन वः युष्माकमहं प्रीतः आत्मनो ममैश्वर्यस्यासंसारित्वादेः पूर्वोक्तस्य स्मृतिर्मयि भक्तिश्च पुंसां यया विद्यया भविष्यत्येव ॥ ४७ ॥ किमिति ॥ हे विबुधर्षभाः मयि प्रीते सति किं दुरापं किं दुर्लभं तथापि मयि एकान्ता एकरसा मतिर्यस्य सः तत्वविन्मत्तः अन्यत् किमपि न वाञ्छति ॥ ४८ ॥ यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्सम्पादनं कृपालोर्ममानुचितमित्याशयेनाह—नेति ॥ गुणेषु विषयेषु तत्त्वदर्शी अनात्मज्ञ इत्यर्थः । कृपणः पुरुषः आत्मनः श्रेयो न वेद न जानाति तस्याज्ञस्य तान् विषयानिच्छतो यदि कश्चित्तान्विषयान् यच्छेत् दद्यात् तदा स दातापि तथाविधो ज्ञेयः अनात्मज्ञ एवेत्यर्थः ॥ ४९ ॥

स्वयमिति॥ यः स्वयं निःश्रेयसं परमानन्दप्राप्तिसाधनं भगवद्भजनं विद्वान् जानाति सः अज्ञाय जनाय कर्म दुःखकारणविषयप्राप्तिसाधनं न हि वक्ति तदुपदेशमपि नैव करोति तत्सम्पादनं तु दूरतः । यथा भिषक्तमः सद्वैद्यो हि अपथ्यं वाञ्छतोऽपि रोगिणो यथा तन्न राति न ददाति तद्वत् ॥ ५० ॥ एवं तत्त्वमुक्त्वा तदभिप्रायमनुसरन्नाह—मघवन्निति ॥ हे मघवन् ऋषिसत्तमं दध्यञ्चं यात एवं वो युष्माकं भद्रं भविष्यति विद्यया व्रतैस्तपसा च सारं दृढं तस्य गात्रं शरीरं शीघ्रं याचत याचध्वम् ॥ ५१ ॥ स वा इति ॥ " स दध्यङ् ह यन्मध्वाथर्वणो नाम अश्वस्य शीर्ष्णा प्रपदीमुवाच " इति श्रुत्यादिप्रसिद्धः दध्यङ्नामा ऋषिः निष्कलं शुद्धं ब्रह्माधिगतो ज्ञातवान् । निष्कृतमिति पाठे तु नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतः ततश्च स विद्याद्वयमश्विभ्यां प्रादादित्युत्तरस्यानुषङ्गः उपदिदेशेत्यर्थः । यद्वै निष्कलं ब्रह्म अश्वशिरसा प्रोक्तत्वादश्वशिरो नाम प्रसिद्धम् । एवं च तयोर्वैद्यतया देवैर्निराकृतामृतादिभागयोरप्यश्विनोरमरतां जीवन्मुक्ततां व्यधात्सम्पादितवानित्यर्थः । एवं ह्यत्र प्रसिद्धा कथा । " निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः । दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ ॥ भगवन् देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् । कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छ-

**स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ॥ न राति रागिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः ॥ ५० ॥ मघवन्यात भद्रं वो दध्यञ्चमृषिसत्तमम् ॥**
**विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥ ५१ ॥ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम् ॥ यद्वा अश्वशिरो नाम तयोरमरतां व्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम् ॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥ युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ येन वृत्रशिरो हर्ता मत्तेज उपबृंहितः ॥ ५४ ॥**

तम् ॥ तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् । उवाच भिषजोर्विद्यां मावादीरश्विनोर्मुने ॥ यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते । शिरश्छिन्द्यां न संदेह इत्युक्त्वा स ययौ हरिः ॥ इन्द्रे गते तथाभ्येत्य नासत्यावूचतुर्द्विजम् । तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः ॥ आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् । सन्धास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज ॥ तस्मिन्निन्द्रेण सञ्छिन्ने पुनः सन्धाय मस्तकम् । निजं ते दक्षिणां दत्त्वा गमिष्यावो यथागतम् ॥ एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः । प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशङ्कितः ॥" ॥५२॥ दध्यङ्ङिति ॥ आथर्वणो दध्यङ् अभेद्यं मन्त्रान्तरैरनिराकार्यं मदात्मकं वर्म श्रीनारायणकवचमधिगत इति पूर्वस्यानुषङ्गः । यत् स त्वष्ट्रे प्रादात् त्वष्टा च विश्वरूपाय स्वपुत्राय प्रादात् यच्च त्वं ततो विश्वरूपादधाः धृतवानसि तदेवं विद्यासारं तद्गात्रं ततो याचध्वमिति पूर्वेणान्वयः ॥ ५३ ॥ युष्मभ्यमिति सार्द्धम् ॥ युष्मास्वेव स्थिताभ्याम् आश्विभ्यां स्वशिष्याभ्यां याचितः संस्तयोः प्रीत्यर्थं धर्मज्ञः परार्तिहरणं परो धर्म इति जानन् युष्मभ्यमङ्गानि दास्यति । यद्वा । अश्विभ्यामिति दृष्टान्तः । यथा याचितः सन् स्वशिरच्छेदनमङ्गीकृत्याप्यसत्यत्वभयादश्विभ्यां विद्यां प्रादात्तथेत्यर्थः । यतो धर्मज्ञः ततो दानानन्तरमेव मम तेजस

उपबृंहितः वर्धितः सन् अस्थिभिर्विश्वकर्मणा निर्मित आयुधश्रेष्ठो वज्रो भविष्यतीति शेषः । येन भवान् वृत्रशिरो हर्ता हरिष्यति ॥ ५४ ॥ तस्मिन्निति ॥ वृत्रे निहते सति तेजश्च अस्त्राणि च आयुधानि च सम्पदश्च भूयो यूयं प्राप्स्यथ एवं वो युष्माकं भद्रमेव भविष्यति । मत्परान् मद्भक्तान् केऽपि न हिंसन्तीति निश्चेतव्यम् ॥ ५५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य नवमे निरमादिमाम् ॥ ९ ॥ दशमे तु दधीच्यस्थिजातवज्रधरो वृषा ॥ वृत्रेणायुद्धयत महांस्तत्र श्लोकास्त्रिवह्नयः[33] ॥ अनुष्टुभः सार्द्धपञ्चत्रिंशच्चैर्वार्युग्वाच च[34] ॥ १० ॥ इन्द्रमिति ॥ अनिमिषाणां देवानां स्पष्टम् ॥ १ ॥ तथेति ॥ हे भारत यथा भगवता शिक्षितं तथा देवैर्याचितः महानुदारचित्तः आथर्वणः दध्यङ् मोदमानोऽपि तन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाण इव प्रहसन्निदमुवाच ॥ २ ॥ अपीति ॥ हे वृन्दारकाः देवाः यूयं सात्त्विकत्वेनेन्द्रियाधिष्ठातृत्वेन च प्रसिद्धा अपि संस्थायां मृत्यौ यस्तु चेतनापहः मूर्च्छाजनकः अत एव दुःसहः अभिद्रोहो दुःखलक्षणोपद्रवः शरीरिणां भवति तम् अपि किन्न जानीथ । यद्वा । यूयं तम-

तस्मिन्विनिहते यूयं तेजोऽस्त्रायुधसम्पदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ५५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे इन्द्रादिकृतगद्यपद्यात्मकस्तोत्रवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ इन्द्रमेवं समादिश्य भगवान्विश्वभावनः ॥ पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥ १ ॥ तथाऽभियाचितो देवैरृषिराथर्वणो महान् ॥ मोदमान उवाचेदं प्रहसन्निव भारत ॥ २ ॥ अपि वृन्दारका यूयं न जानीथ शरीरिणाम् ॥ संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः ॥ ३ ॥ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ॥ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥ देवा ऊचुः ॥ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकम्पिनाम् ॥ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥ ननु स्वार्थपरो लोको न वेद परसंकटम् ॥ यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

भिद्रोहं न जानीथेति ज्ञायतेऽन्यथा युष्माकमियं याच्ञा न स्यादिति शेषः ॥ ३ ॥ जिजीविषूणामिति ॥ इह प्रियेषु वस्तुषु जीवानामात्मा देहः प्रेष्ठः प्रियतमः यतो जिजीविषूणामीप्सितः धनादि दत्त्वापि रक्षणीयः अतो भिक्षमाणाय अतिथिरूपेण याचमानाय विष्णवेऽपि तं दातुं क उत्सहेत ॥ ४ ॥ किमिति ॥ हे ब्रह्मन् भवद्विधानां भूतानुकम्पिनां प्राणिषु दयातिशयवतां महतामुदारचित्तानामत एव पुण्यश्लोकैः सत्कीर्तिभिरपि ईड्यानि स्तुत्यानि कर्माणि येषां तेषां पुंसा यद्दुस्त्यजं तत्किं नु न किमपीत्यर्थः ॥ ५ ॥ नन्विति ॥ अत्र इदं पद्यं नन्वित्यादि न याचेतेत्यन्तमृषेर्वचः तत इदमेव न याचेतेति चतुरक्षरविनाभूतं देवानां वचः । तथा हि स्वार्थपरः स्वर्गादैश्वर्यभोगाभिलाषी लोको याचकादिजनः परस्य दातुः संकटं स्वदेहास्थिदानपीडां न वेद न जानाति । यदि वेद तदा च न याचेत। उपलक्षणमेतत् यज्ञादिषु पशून्न हन्यादित्यपि ज्ञेयम् । ततो देवा ऊचुः।स्वार्थपरः जीवनेन विषयभोगाभिलाषी भवादृशो दाता लोकोऽपि परस्य याचकस्य सङ्कटं न जानाति। यदि सोऽपि वेद तदा ईश्वरो दातुं समर्थः सन्नेति नाह।

प्रत्याख्यानं न कुर्यादित्यन्वयः । यद्वा । देवानामेवेदं वचः प्रोक्तप्रकारद्वयेन व्याख्येयम् । तथा च यथा वयं स्वार्थपरास्तव सङ्कटानुसन्धानं न कुर्मस्तथा त्वमपि स्वार्थपरः प्रत्याचक्षाणोऽस्मत्सङ्कटं नानुसन्धत्स इति तुल्य एवोपालम्भ इति भावः ॥ ६ ॥ धर्ममिति ॥ वो युष्माकं मुखाद्धर्मं श्रोतुकामेन मे मया यूयं प्रत्युदाहृताः निराकृता इवोक्ता न वस्तुतः अत एषोऽहं त्यजन्तं त्यक्ष्यन्तं प्रियमप्यात्मानं देहं वो युष्माकमर्थे सन्त्यजामि त्यजन्तमित्यनेन अन्ते मामयं त्यक्ष्यतीति धर्मयशोलाभाय तत्त्यागः प्रथमत एवोचित इति सूचितम् ॥ ७ ॥ य इति ॥ हे नाथाः यः पुमान् भूतानां दयया अध्रुवेण अनित्येन आत्मना देहेन धर्मं यशो वा न ईहेत न सम्पादयेत्स स्थावरैरपि शोच्यः स्थावरेभ्योऽपि जड इत्यर्थः ॥ ८ ॥ एतावानिति ॥ आत्मा स्वयंभूतानां शोकेन शोचति हर्षेण च हृष्यति तस्य यो धर्मः पुण्यविशेषः सः पुण्यश्लोकैरुपासितः स एतावानेवाव्ययोऽक्षयः ॥ ९ ॥ अहो इति ॥ पारक्यैः मरणान्तरं शृगालादिभक्ष्यैः अस्वार्थैः आत्मोपयोगशून्यैः क्षणभङ्गुरैः स्वं वित्तं ज्ञातयः पुत्रादयो विग्रहो देहस्तैर्यद् यो मर्त्यो

ऋषिरुवाच ॥ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ॥ एष वः प्रियमात्मानं त्यजन्तं संत्यजाम्यहम् ॥ ७ ॥ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ॥ ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ॥ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥ अहो दैन्यमहो कष्टं पारक्यैः क्षणभङ्गुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः॥१०॥श्रीशुक उवाच ॥ एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ॥ परे भगवति ब्रह्मण्यात्मानं सन्नयञ्जहौ ॥ ११ ॥ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबन्धनः ॥ आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥ अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ॥ मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसाऽन्वितः ॥ १३ ॥ वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत ॥ स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥

नोपकुर्यात् परोपकारं न कुर्याद्यदि तदा तस्याहो दैन्यमहो कष्टं तस्य जीवनं केवलं दैन्येन दुःखभोगार्थमेवेत्यर्थः ॥ १० ॥ एवमिति ॥ एवं कृतं व्यवसितं निश्चयो येन स आथर्वणो दध्यङ् परे ब्रह्मणि भगवति आत्मानं मनः सन्नयन् तनुं जहौ ॥ ११ ॥ यतेति ॥ यता वशीकृता अक्षा इन्द्रियाणि असवः प्राणाः मनो बुद्धिश्च येन सः तत्वदृक् अतो ध्वस्तबन्धनः निरस्तदेहाद्यध्यासः परमं योगं समाधिलक्षणमास्थितः सन् गतं त्यक्तं देहं न बुबुधे मरणपीडां नानुभूतवान् । एतेन दधीचोऽपि मुक्तिरभूदिति सूचितम् ॥ १२ ॥ अथेति युग्मम् ॥ अथ मुनेः शुक्तिभिः अस्थिभिः विश्वकर्मणा निर्मितं वज्रमुद्यम्य उत्सिक्तः उन्नद्धः भगवत्तेजसान्वितः सर्वैर्देवगणैर्वृतः गजेन्द्रस्य ऐरावतस्योपरि स्थितः मुनिगणैश्च स्तूयमानः इन्द्रः त्रैलोक्यं हर्षयन्निव अशोभत । अत्र शक्तिभिरिति सक्थिभिरस्थिभिरिति च पाठः ॥ १३ ॥ १४ ॥

वृत्रमिति ॥ हे राजन् स इन्द्रः क्रुद्धः सन् ओजसा वेगेन असुरानीकानां यूथपैः पर्यस्तं परिवृतं वृत्रं च्छेत्तुमभ्यद्रवत् । यथा प्रलयसमये क्रुद्धो रुद्रोऽन्तकं यमं हन्तुमभिद्रवति तद्वदित्यर्थः । रुद्रो यममपि हन्तुं शक्नोतीत्यभिप्रायेण दृष्टान्तः ॥१५॥ तत इति ॥ तदा वैवस्वतमन्वन्तरस्य प्रथमे चतुर्युगे त्रेतायुगस्य मुखे प्रारम्भे नर्मदातीरे सुराणामसुरैः सह परमदारुणः रणः अभवत्॥१६॥रुद्रैरिति युग्मम्॥ हे राजन् रुद्रादिभिर्देवगणैः स्वया श्रिया च रोचमानं वज्रधरं मरुत्पतिं शक्रं दृष्ट्वा वृत्रः पुरःसरः स्वामी येषां ते असुरा मृधे युद्धे नामृष्यन् नासहन्त ॥१७॥१८॥ नमुचिरिति सार्द्धत्रयम् ॥ कार्तस्वरपरिच्छदाः स्वर्णभूषिताः नमुचिरित्यादयः उत्कल इत्यन्ताः सहस्रशः अन्ये च दैतेयादयः सुमालिमालिप्रमुखाश्च मृत्योरपि दुरासदं दुष्प्रवेशमपीन्द्रसेनाग्रं सिंहनादेन भयङ्करगर्जनेन प्रतिषिध्य निवार्याभ्यार्दयन् पीडितवन्तः । अभ्यर्दयन्निति ह्रस्वपाठे आ-

वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ॥ पर्यस्तमोजसा राजन्क्रुद्धो रुद्र इवान्तकम्॥१५॥ततः सुराणामसुरै रणः परमदारुणः॥ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥ १६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ॥ मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वमायया ॥ नामृष्यन्नसुरा राजन्मृधे वृत्रपुरःसराः ॥ १८ ॥ नमुचिः शम्बरोऽनर्वा द्विमूर्धा ऋषभोऽम्बरः ॥ हयग्रीवः शङ्कुशिरा विप्रचित्तिरयोमुखः ॥ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ॥ १९ ॥ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥ इल्वलः पल्वलश्चैव दन्दशूको वृषध्वजः ॥ कालनाभमहानाभौ भूतसंतापनो वृकः ॥२०॥ सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः॥ प्रतिषिध्येन्द्रसेनाग्र्यं मृत्योरपि दुरासदम् ॥ अभ्यर्दयन्नसंभ्रान्ताः सिंहनादेन दुर्मदाः ॥२१॥ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः ॥ सर्वतोऽवाकिरञ्छस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २२ ॥ न तेऽदृश्यन्त संछन्नाः शरजालैः समन्ततः ॥ पुङ्खानुपुङ्खपतितैर्ज्योतींषीव नभोघनैः ॥ २३ ॥ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २४ ॥

ड्भाव आर्षः ॥ १९ ॥ २० ॥ २१ ॥ गदाभिरिति सार्द्धम् ॥ गदादिभिश्च विबुधर्षभान् सर्वतोऽवाकिरन् अभ्यवर्षन् । “शतघ्नी च चतुर्हस्ता लोहकण्टकसञ्चिता । भुशुण्डी सर्वतो लोहकण्टकानुक्रमोन्नता ॥” इत्यभिधानम् ॥ २२ ॥ न त इति ॥ पुङ्खः शरस्य मूलप्रदेशः एकस्य शरस्य मूलदेशमनु तत्संलग्नो परस्य पुङ्खो यथा भवति तथा पतितैः शरजालैः समन्ततः सञ्छन्नास्ते देवा नादृश्यन्त । यथा नभस्थैर्घनैः छन्नानि ज्योतींषि यथा न दृश्यन्ते तद्वत् एतेन तेषां तदप्राप्तिः सूचिता ॥२३॥न त इति॥ शस्त्राणामस्त्राणां चयानि वर्षाणि तेषामोघाः सुरसैनिकान्न व्यासेदुः न प्रापुः यतो लघुहस्तैः शीघ्रभेदिभिर्देवैः सिद्धपथ आकाशमार्गे स्वप्राप्तेः पूर्वमेव सहस्र-

धा च्छिन्नाः ॥ २४ ॥ अथेति ॥ क्षीणा अस्त्राणां शस्त्राणां च ओघा येषां ते असुराः अथानन्तरं गिरिशृङ्गैर्द्रुमैरुपलैः पाषाणैश्च सुरबलमभ्यवर्षन् तांश्च गिरिशृङ्गादीन् देवाः पूर्ववत् अस्त्रादिवच्चिच्छिदुः ॥ २५ ॥ तानिति ॥ तानिन्द्रसैनिकान् शस्त्राणामस्त्राणां च पूगैः समूहैरक्षतान् क्षतशून्यान् स्वस्तिमतः सुखिनो द्रुमादिभिश्चाविक्षतान्नि-शाम्य वृत्रो नाथो येषां ते असुराः तत्रसुः भीता जाताः ॥ २६ ॥ सर्वे इति ॥ कृष्णोऽनुकूलो येषां तेषु देवगणेषु दैत्यैः कृताः कृताः पुनः पुनः कृताः प्रयासाः प्रहारप्र-यत्नलक्षणाः सर्वे विमोघाः वृथा अभवन् । यथा महत्सु साधुषु क्षुद्रैर्बहिर्मुखैः पुरुषैः प्रयुक्ताः रुशतीः रुशत्यः शापरूपाः पूर्वसवर्णदीर्घ आर्षः । रूक्षाः परुषाः निन्दापरा वाचो यथा अकल्याणकर्त्र्यः क्षोभकर्त्र्यो वा न भवन्ति तद्वत् ॥ २७ ॥ त इति ॥ हरौ अभक्ताः हतो निवृत्तो युद्धे दर्पो गर्वो येषां ते आत्तः परैर्गृहीतः सारो येषां ते अति प्र-सिद्धाः ते असुराः अत्रैकस्तच्छब्दः प्रसिद्धवाची अपरः परामर्शक इत्यपौनरुक्त्यम् । स्वप्रयासं वितथं निरीक्ष्य आजिमुखे युद्धारम्भे पतिं वृत्रं विसृज्य पलायनाय मनो

अथ क्षीणास्त्रशस्त्रौघा गिरिशृङ्गद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २५ ॥ तानक्षतान्स्वस्तिमतो निशम्य शस्त्रास्त्रपूगै-रथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरविक्षतांस्तत्रसुरिन्द्रसैनिकान् ॥ २६ ॥ सर्वे प्रयासा अभवन्विमोघाः कृताः कृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २७ ॥ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजि-मुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥ २८ ॥ वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ २९ ॥ कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वञ्छम्बर मे शृणुध्वम् ॥ ३० ॥ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह कॢप्ता ॥ लोको यशश्चाथ ततो यदि ह्यमुं मृत्युं वरं को न वृणीत युक्तम् ॥ ३१ ॥

दधुः ॥ २८ ॥ वृत्र इति ॥ भग्नं परैः क्षतयुक्तं कृतमत एव तीव्रेण भयेन पलायितं च स्वबलं सैन्यं प्रेक्ष्य प्रधावतः पलायमानान् तान् वीरतया प्रसिद्धान् अनुगान् स्वान्तरङ्गानप्यसुरान् वीक्ष्य मनस्वी धीरः वीरश्च वृत्रः विहस्य वीराणां कातर्यमनुचितमिति सूचयंस्तेषामुपहासं कृत्वा एतद्वक्ष्यमाणं बभाषे ॥ २९ ॥ कालेति ॥ पुरुषेषु प्रकृष्टो वीरः वृत्रः कालोपपन्नां तदवसरोचितां मनस्विनां रुचिरां शौर्यव्याञ्जिकां वाचमुवाच । हे विप्रचित्त्यादयः मे वचः शृणुध्वम् । तङार्षः ॥ ३० ॥ जातस्येति ॥ जातस्य प्राणिमात्रस्य एषः प्रसिद्धो मृत्युः सर्वतः सर्वत्र ध्रुवः कुत्रापि त्रिलोक्यां गत्वाप्यनिवार्यः यतः यस्येह संसारे प्रतिक्रिया निवृत्त्युपायो न च कॢप्ता भगवतापि नैव निर्मिता ततो मृत्योर्यदि लोको ब्रह्मलोके इह यशश्च स्यात् । अथ तर्हि अमुं युक्तं समुचितं मृत्युं को नाम न वृणीत ॥ ३१ ॥

द्वाविति ॥ योगरतो योगमार्गे प्रवृत्तः जितासुःवशीकृतप्राणेन्द्रियश्च सन् ब्रह्मसंधारणया भगवद्ध्यानेन कलेवरं जह्यादिति यत्स एको मृत्युः अग्रणीः अनिवृत्तः अपराङ्मुखश्च सन् वीरशये रणभूमौ कलेवरं विजह्यादिति यत्स चैको मृत्युः तौ द्वौ मृत्यू इह शास्त्रे सम्मतौ अत एव दुरापौ दुर्लभौ ॥ ३२ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य दशमे निरमादिमाम् ॥ १० ॥ एकादशे वृत्रशक्रयुद्धे वृत्रो जगाद च ॥ ज्ञानभक्तिमयीर्वाचः श्लोकास्तत्राद्रिबाहवः ॥ अनुष्टुभः पञ्चरामौ उवाचद्वितयं तथा ॥ ११ ॥ त इति ॥ हे नृप एवं धर्मं शंसतः कथयतः पत्युर्वृत्रस्य वचः अचेतसः व्याकुलचित्ताः भयत्रस्ताः पलायनपराश्च ते असुरा नैवागृह्णन् ॥ १ ॥ विशीर्यमाणामिति युग्मम् ॥ हे राजन् कालोऽनुकूलो येषां तैस्त्रिदशैर्देवैः काल्यमानां विद्राव्यमाणामत एवानाथवदनाथामिव विशीर्यमाणामासुरीं स्वकीयां पृतनां सेनां दृष्ट्वा क्रुद्धः अमर्षितः असहनः असुरर्षभः इन्द्रशत्रुर्वृत्रः अतप्यत ततश्च ओजसा बलात्कारेण तान् त्रिदशान्निवार्य निर्भर्त्स्य चेदं वक्ष्यमाणं वचनमुवाच ॥ २ ॥ ३ ॥ किमिति ॥ मातुः

द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३२ ॥ इति श्रीभा० षष्ठ० दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ ॥ त एवं शंसतो धर्मं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पलायनपरा नृप ॥ १ ॥ विशीर्यमाणां पृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥ दृष्ट्वाऽतप्यत संक्रुद्ध इन्द्रशत्रुरमर्षितः ॥ तान्निवार्यौजसा राजन्निर्भर्त्स्येदमुवाच ह ॥ ३ ॥ किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ॥ न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥ यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि ॥ अग्रे तिष्ठत मात्रं मे न चेद् ग्राम्यसुखे स्पृहा ॥ ५ ॥ एवं सुरगणान्क्रुद्धो भीषयन्वपुषा रिपून् ॥ व्यनदत्सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥ तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै ॥ निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥

उच्चरितैः पुरीषवदुदरान्निर्गतैः धावद्भिः पलायमानैः पृष्ठतो हतैर्दैत्यैर्वो युष्माकं किं फलं न यशो नापि धर्म इत्यर्थः । आत्मानं शूरं मन्यमानानां भीतस्य यो वधः स श्लाघ्यो न भवति नापि स्वर्ग्यः स्वर्गहेतुः । मातुरुच्चरिता इति पाठे देवानां सम्बोधनम् ॥ ४ ॥ यदीति ॥ हे क्षुल्लकाः ममाग्रे यूयं तुच्छा एव तथापि यदि वो युष्माकं प्रधने युद्धे श्रद्धा हृदि सारं धैर्यं वाऽस्ति चेत् यदि ग्राम्यसुखे विषयभोगे स्पृहा इच्छा नास्ति तदा मात्रं क्षणमात्रं मेऽग्रे तिष्ठत तिङन्तादग्रेऽपि मात्रशब्दो बहुस्थलेषु समासावयव इव प्रयुज्यते । गच्छतिमात्रं चलतिमात्रं केवलं गच्छति न त्वन्यत्करोतीत्यर्थः । तथात्रापि चेत् तदायमर्थः । यदि मदग्रे योद्धुं न शक्नुथ तदा केवलं तिष्ठत नाहं भीतान् हन्मीति परन्तु नायं विवक्षितोऽर्थः ॥ ५ ॥ एवमिति ॥ सुमहाप्राणो महाबलो वृत्रः क्रुद्धः सन् एवं वचसा वपुषा शरीरेण च स्वारिपून् स्वशत्रून् सुरगणान् भीषयन् व्यनदत् नादं चकार । येन वृत्रनादेन हेतुना लोकाः प्राणिनः सर्वे विचेतसो जाताः ॥ ६ ॥ तेनेति ॥ तेन नादेन वृत्रस्य विस्फोटनेन ऊर्वोः प्रगण्डयोर्वा करतलाघातेन च मूर्छिता

देवगणाः यथा अशनिना हतास्तथा भूमौ निपेतुः । वै चार्थे ॥ ७ ॥ ममर्देति ॥ रणरङ्गे रणभूमौ दुष्टः उत्कृष्टो मदो यस्य सः अत एव उद्यतं शूलं येन सः वृत्रः ओजसा स्वसामर्थ्येन गां पृथ्वीं कम्पयन् आतुरं भीतमतः निमीलिताक्षं सुरसैन्यं पद्भ्यां ममर्द । यथा नलानां समूहो नालं वनमुत्कृष्टो मदो यस्य स यूथपतिर्गजो यथा मर्दयति तद्वत् ॥ ८ ॥ विलोक्येति ॥ वज्रधरः इन्द्रस्त वृत्रं विलोक्यात्यमर्षितोऽसहमानोऽभिद्रवते स्वसम्मुखमागच्छते स्वशत्रवे तस्मै तं हन्तुं महागदां चिक्षेप आपततीं नुमभाव आर्षः । सुदुःसहामपि तां वृत्रः वामेन करेण लीलया जग्राह ॥ ९ ॥ स इति ॥ हे नृप स उग्रविक्रमः इन्द्रशत्रुर्वृत्रो भृशं कुपितोऽतो मृधे उन्नदन् तया गदया महेन्द्रवाहमैरावतं कुम्भस्थले मस्तके जघान । तस्यतत्कर्म सर्वे स्वपरसैनिकाः समपूजयन् सत्कृतवन्तः ॥ १० ॥ ऐरावत इति ॥ वृत्रगदयाभिमृष्टः अभिहतः भिन्नमुखः विदीर्णवक्त्रः भृशार्त्तः अतिपीडितः सहेन्द्रः इन्द्रं वहन्नित्यर्थः । ऐरावतः असृङ् मुञ्चन् विघूर्णितः सन् सप्त धनुः प्रमाणमष्टाविंशतिहस्तमात्रं देशमपासरत् तिर्यक् पृष्ठतो वा गतः । याथ

ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ॥ गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥ विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम् ॥ चिक्षेप तामापततीं सुदुःसहां जग्राह वामेन करेण लीलया ॥९॥ स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोग्रविक्रमः ॥ जघान कुम्भस्थल उन्नदन्मृधे तत्कर्म सर्वे समपूजयन्नृप ॥ १० ॥ ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ॥ अपासरद्भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक्सप्तधनुर्भृशार्तः ॥ ११ ॥ न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा ॥ इन्द्रोऽमृतस्यन्दिकराभिमर्शवीतव्यथक्षतवाहोऽवतस्थे ॥ १२ ॥ स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ॥ स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसञ्जगाद ॥ १३ ॥ वृत्र उवाच ॥ दिष्ट्या भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ॥ दिष्ट्याऽनृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् ॥ १४ ॥

कुलिशेनाहतोऽद्रिस्तथेति॥ ११ ॥नेति॥ सन्नो वसन्नो वाहो वाहनं यस्य तस्मै अत एव विषण्णं विषादेन व्याकुलं चेतो यस्य तस्मै इन्द्राय महात्मा धर्मात्मा स वृत्रो भूयो गदां न प्रायुङ्क्त न चिक्षेप इन्द्रस्तु अमृतस्यन्दी अमृतस्रावी यः स्वकरस्तेनाभिमर्शः स्पर्शस्तेन वीता गता व्यथा पीडा यस्य तथाभूतः क्षतो वाहो हस्ती यस्य स तथाभूतोऽवतस्थे॥ १२ ॥स इति॥हेनृपेन्द्र आहवकाम्यया युद्धेच्छया वज्रायुधं वज्रं गृहीत्वाऽवस्थितं रिपुं भ्रातृहणं विश्वरूपं हतवन्तं तमिन्द्रं विलोक्य नृशंसं क्रूरं तत्कृतमंहः पापरूपं कर्म च स्मरन् शोकेन मोहेन भ्रातृस्नेहेन च संततः सहन् जगाद रिपोरवज्ञार्थं क्रोधजोऽयं हासः ॥ १३ ॥ दिष्ट्येति ॥ हे असत्तम यो ब्रह्महा ब्राह्मणं हतवान् एवं स्वगुरुहा मम भ्रातृहा च रिपुर्भवानद्य मे ममाग्रतः समवास्थतः एतद्दिष्ट्या भद्रं जातमित्यर्थः । मम शूलेन निर्भिन्नं दृषत्तुल्यं पाषाणसदृशं हृत् हृदयं यस्य तेन त्वया निमित्तेन अद्य

अचिरादेवाहं भ्रातुरनृणः स्यामेतद्दिष्ट्या भद्रमेव ॥ १४ ॥ य इति ॥ यः स्वर्गकामो भवानात्मविदः द्विजातेर्ब्राह्मणस्य स्वगुरोः नारायणकवचोपदेष्टुः अपापस्य दीक्षितस्य यज्ञे दीक्षावतः नोऽस्माकमग्रजस्य विश्वरूपस्य विश्रभ्य उपाध्यायतयावरणेन विश्वासं दत्त्वा खड्गेन शिरांसि अवृश्चत् । स्वर्गकामो याज्ञिकः पुरुषः अकरुणः दयाशून्यः सन् यथा पशोः शिरः छिनत्ति तद्वदित्यर्थः ॥ १५ ॥ ह्रीति ॥ एवंभूतविश्वरूपवधादेव ह्रीश्रीदयाकीर्तिभिः सद्गुणैरुज्झितं त्यक्तं रहितं पुरुषान् अदन्तीति पुरुषादाः राक्षसास्तेऽपि गुरुतया स्वीकृतं सेवन्त एव नतु तद्धननं कुर्वन्ति तत्करणात्तेन स्वकृतेन कर्मणा तैरपि गर्ह्यं निन्द्यं मच्छूलेन विभिन्नो देहो यस्य तम् अत एव कृच्छ्रेण मृतम् अतो महाघोरे युद्धे मृतस्य मदग्रतो दाहार्थनयनस्याशक्यत्वादस्पृष्टवह्निमदग्धदेहं समदन्तीति वर्तमानसामीप्ये वर्तमानवन्निर्देशो नात्र विलम्बः संदेहश्च नास्ति ॥ १६ ॥ अन्य इति ॥ अन्ये तु येऽज्ञा मत्प्रभावानभिज्ञास्तु त्वा त्वां नृशंसं क्रूरमनुवर्तमानाः यदि उद्यतास्त्राः सन्त इह संग्रामे मह्यं मां प्रहरन्ति प्रहरिष्यन्ति तदा निशातेन तीक्ष्णीकृतेन शूलेन

**यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ॥ विश्रभ्य खड्गेन शिरांस्यवृश्चत् पशोरिवाऽकरुणः स्वर्गकामः ॥ १५ ॥ ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ॥ कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्ति गृध्राः ॥ १६॥ अन्येऽनु ये त्वेह नृशंसमज्ञा ये ह्युद्यतास्त्राः प्रहरन्ति मह्यम् ॥ तैर्भूतनाथान् सगणान् निशातत्रिशूलनिर्भिन्नगलैर्यजामि॥१७॥ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह ॥ तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये॥१८॥ सुरेश कस्मान्न हिनोषि वज्रं पुरःस्थिते वैरिणि मय्यमोघम् ॥ मा संशयिष्ठा न गदेव वज्रं स्यान्निष्फलं कृपणार्थेव याच्ञा ॥ १९ ॥ नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा स तेजितः ॥ तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥**

भिन्नो गलो येषां तैः सगणान् भूतप्रेतादिगणसहितान् भूतनाथान् भैरवादीन् यजामि यक्ष्यामीत्यर्थः । वर्तमानत्वनिर्देशः प्राग्वत् ॥ १७ ॥ अथो इति ॥ हे वीर हे हरे इन्द्र अथो अथ वा इह संग्रामे मे यदि प्रमथ्य मम सेनां विलोड्य कुलिशेन वज्रेण मम शिरो भवानेव हर्ता हरिष्यति तत्र तर्हि मृतेन स्वशरीरेण भूतेभ्यो बलिं विधाय तेभ्योऽनृणः सन् मनस्विनां धीराणां नारदादीनां पादरजः प्रपत्स्ये । यत्र ते गच्छन्ति तद्भगवत्स्वरूपं प्राप्स्यामीत्यर्थः ॥ १८ ॥ सुरेशेति ॥ हे सुरेश पुरःस्थिते वैरिणि मयि अमोघं वज्रं कस्माद्धेतोर्न हिनोषि न क्षिपसि गदेव वज्रमपि निष्फलं भविष्यतीति मा संशयिष्ठाः संशयं मा कार्षीः।कृपणादर्थः प्रयोजनं यस्याः सा याच्ञा यथा निष्फला भवति तथा वज्रं न स्यात् ॥ १९ ॥ नन्विति ॥ निश्चितमेतत् । हे शक्र एष तव वज्रो हरेस्तेजसा दधीचेस्तपोजनिततेजसा च तेजितस्तीक्ष्णीकृतोऽतो विष्णुना यन्त्रितः प्रेरितः त्वं तेनैव वज्रेण शत्रुं मां जहि । यतः यत्र पक्षे हरिस्ततस्तस्मिन् पक्षे विजयः श्रीर्गुणाश्च दयासन्तोषसौशील्यादयो भवन्तीत्यर्थः ॥ २० ॥

अहमिति ॥ अहं तु तव वज्रस्य रंहसा वेगेन विलुलितः छिन्नो ग्राम्यपाशः संसारबन्धनभूतो देहो यस्य सः अपविद्धास्त्यक्ताः लोकास्तत्तल्लोकविषयभोगवासना येन तथाभूतः सन् भगवान् संकर्षणो यथा मामाह स्म तथा तस्य भगवतश्चरणारविन्दे मनः समाधाय स्थिरीकृत्य मुनेर्मननशीलस्य भगवद्भक्तस्य गतिं भगवन्तमहं यामि यास्यामि ॥ २१ ॥ संकर्षणो मत्स्वाम्यपि मह्यं स्वर्गराज्यं न दास्यतीत्याह—पुंसामिति ॥ एकान्तधियां विवेकिनां स्वकानां स्वकीयत्वेनाङ्गीकृतानां पुंसां याः सम्पदो दिवि स्वर्गे इत्युपलक्षणमन्तरिक्षलोकस्य महर्लोकादिचतुर्णां च तेषु च याश्च भूमौ याश्च रसायां भूमेरधः सप्तसु लोकेषु ताः का अपि भगवान्न राति नैव ददाति यत् याभ्यः सम्पद्भ्यः द्वेषोऽन्योन्यवैरम् उद्वेगो मनश्चाञ्चल्यम् आधिर्मानससन्तापः मदो गर्वः कलिः कलहः व्यसनं तन्नाशे ह्रासे वा दुःखं प्रयासः संवर्द्धनसंरक्षणादिप्रयत्नेन श्रमः एते भवन्ति ॥ २२ ॥ त्रैवर्गिकेति ॥ हे शक्र अस्माकं पतिर्भगवान् पुरुषस्य त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते करोति ततस्त्रैवर्गिकायासविघातात् भगवत्प्रसादोऽनुमेयः यः

**अहं समाधाय मनो यथा ह संकर्षणस्तच्चरणारविन्दे ॥ त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥ पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् ॥ न राति यद् द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः ॥ २२ ॥ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ॥ ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोऽन्यैः ॥ २३ ॥ अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ॥ मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः ॥ २४ ॥ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥ २५ ॥ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ॥ प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ २६ ॥**

प्रसादः अकिंचनगोचर एकान्तभक्तिलभ्य इत्यन्वये हेतुः । यश्चान्यैर्विषयाक्रान्तचित्तैर्दुर्लभः तथा चानुमानप्रयोगः अहं भगवत्प्रसादवान् त्रैवर्गिकायासरहितत्वात् एवं त एवं यथैकान्तभक्ता नारदादयः येनैवं तेनैवं यथा विषयाक्रान्तचित्ता युष्मदादय इति अतो भगवत्प्रसादाभावात्तव सम्पदो भविष्यन्तीति भावः ॥ २३ ॥ अथेन्द्रं शिक्षयन् भगवन्तं प्रार्थयते—अहमिति ॥ हे हरे तव पादावेव एकं मूलमाश्रयो येषां तेषां दासानामनुदासोऽहं भूयः पुनर्भवितास्मि भविष्यामि भवेयम् । असुपतेः प्राणनाथस्य तव गुणान् मम मनः स्मरेत चिन्तयेत।तङार्षः । वाक् च तानेव गुणान् गृणीत कीर्त्तयेत् । तङार्षः । कायस्तस्यैव कर्म सेवां करोतु ॥ २४ ॥ नेति ॥ हे समञ्जस निखिलसौभाग्यनिधे त्वा त्वां विरहय्य त्यक्त्वा नाकपदं स्वर्गपदं न कांक्षे नेच्छामि।तङार्षः । एवं पारमेष्ठ्यादीन्न काङ्क्षे परमेष्ठी ब्रह्मा तत्स्थानं पारमेष्ठ्यं सार्वभौमं सर्वभूमेरैश्वर्यं रसाधिपत्यं भूमेरधोलोकानां राज्यं योगसिद्धीरणिमादिकाः किं बहुना अपुनर्भवं मोक्षमपि न काङ्क्षे ॥ २५ ॥ अजातेति ॥ हे अरविन्दाक्ष यथा अजातपक्षाः पक्षिणः चूकाद्यैः

पीडिताः मातरं द्रष्टुमिच्छन्ति तद्वत् यथा वत्सतराः अतिबालकाः वत्साः दाम्ना बद्धाः क्षुधा पीडिताः कदा स्तन्यं दुग्धं प्राप्स्याम इति तदिच्छन्ति तथेत्यर्थः । व्युषितं प्रवासिनं प्रियं पतिं यथा विषण्ण तद्विरहेण विषादं प्राप्ता प्रिया द्रष्टुमिच्छति तद्वत् तापत्रयपीडितं कर्मभिर्बद्धं कामादिभिर्विषण्णं च मम मनस्त्वां दिदृक्षते द्रष्टुमिच्छति ॥ २६ ॥ ममेति ॥ हे नाथ स्वामिन् स्वकर्मभिः संसारचक्रे भ्रमतोऽपि मम उत्तमश्लोकस्य तव जनेषु भक्तेषु सख्यं भूयात् त्वन्मायया आत्मात्मजदारगेहेष्वासक्तं चित्तं यस्य तस्य मम तेषु आत्मात्मजादिषु सख्यमासक्तिर्न भूयात् ॥ २७ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकायाम् ॥ गङ्गासहायः षष्ठस्यैकादशे निरमादिशाम् ॥ ११ ॥

द्वादशे तु महायुद्धे शिरो वृत्रस्य वासवः ॥ वज्रेण चिच्छेद तत्र श्लोकाः सार्द्धाः शैरांत्रयः ॥ चत्वार्युवाचेति साङ्गिनन्दरामा अनुष्टुभः ॥ १२ ॥ एवमिति ॥ हे नृप आजौ युद्धे मोक्षप्रतिबन्धकं देहं जिहासुः त्यक्तुमिच्छुः अतः विजयादपि मृत्युमेव वरं मन्यमानः वृत्रः शूलं प्रगृह्य सुरेन्द्रमभ्यपतत् । यथा अप्सु प्रलयोदके महापुरुषं विष्णुं

**ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ॥ त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २७ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे वृत्रासुरेण भगवत्स्तोत्रवर्णनं नाम एकादशोऽध्यायः ॥११॥ ऋषिरुवाच॥ एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः ॥ शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥ ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसाऽसुरेन्द्रः ॥ क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद ॥२॥ ख आपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ॥ वज्रेण वज्री शतपर्वणाऽच्छिनद्भुजं च तस्योरगराजभोगम्॥३॥ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ॥ हनौ तताडेन्द्रमथाऽमरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ४ ॥ वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसङ्घाः ॥ अपूजयंस्तत् पुरुहूतसंकटं निरीक्ष्य हा हेति विचुक्रुशुर्भृशम् ॥ ५ ॥**

कैटभाख्यो दैत्योऽभ्यपतत्तद्वत् ॥ १ ॥ तत इति ॥ ततः वीरः असुरेन्द्रो वृत्रो युगान्ताग्निवत्कठोरा जिह्वा शिखा यस्य तत् शूलमाविध्य भ्रमयित्वा महेन्द्राय तरसा वेगेन क्षिप्त्वा विनद्य हे पाप त्वं मया हतोऽसीति रुषा जगाद ॥ २ ॥ ख इति ॥ तच्छूलं खे आकाशे आपतत् आगच्छत् विचलत् विभ्रमत् ग्रहश्च उल्का च ग्रहोल्कं तद्वद्दुष्प्रेक्ष्यमपि निरीक्ष्य अजातविक्लवो भयशून्य एव वज्री इन्द्रः शतं पर्वाणि यस्य तेन वज्रेणाच्छिनत् तथा उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारं तस्य वृत्रस्य भुजं चाच्छिनत् ॥ ३ ॥ छिन्नेति ॥ छिन्न एको बाहुर्यस्य स तथाभूतोऽपि वृत्रः संरब्धः क्रुद्धः सन् गृहीतो वज्रो येन स तमिन्द्रमासाद्य प्राप्य परिघेण लोहदण्डविशेषेण हनौ कपोलप्रान्ते तताड । अथानन्तरमेवामरेभम् ऐरावतं च तताड । “ अनित्यण्यन्ताश्चुरादयः ” इति न णिच् आर्षत्वाद्वा । मघोनः इन्द्रस्य हस्ताद्वज्रं च न्यपतत् ॥ ४ ॥ वृत्रस्येति ॥ तदतिमहाद्भुतं वृत्रस्य कर्म सुरादयः सर्वेऽपूजयन् सत्कृतवन्तः पुरुहूतस्येन्द्रस्य तत्सङ्कटं निरीक्ष्य सुरादयो हा हेति भृशं विचुक्रुशुश्च ॥ ५ ॥

इन्द्र इति ॥ अरेः सन्निधौ स्वहस्तात् च्युतं वज्रं विलज्जितः इन्द्रः पुनर्न जगृहे तदा च वृत्रस्तमिन्द्रमाह स्म । हे हरे इन्द्र आत्तवज्रः संस्त्वं शत्रुं मां जहि अयं विषादस्य कालो न भवति ॥ ६ ॥ युयुत्सतामिति ॥ उत्पत्तिलयस्थितीनामीश्वरं सर्वज्ञमाद्यमनादिं सनातनं नित्यं पुरुषं भगवन्तं विना तस्य तु सर्वत्र जय इति भावः । परो देह एवात्मा येषां पराधीनात्मनामिति वा युयुत्सतां योद्धुमिच्छतां शता आर्षः । आततायिनां गृहीतशस्त्राणामेकत्र स्वपक्ष एव सदा जय इति नियमो न किंतु कुत्रचिदेव जयः एकत्र कुत्रचित् नैव । यद्वा । कुत्रचिदपि सदा जयो नैव किं तु एकत्रैव कदाचिदेव तेन कुत्रचित्पराजयोऽपि भवत्येव ॥ ७ ॥ पराधीनतामाह—लोका इति ॥ इमे सपाला लोकाः यस्य वशे स्थिताः स्वयं विवशाः सन्तः श्वसन्ति चेष्टन्ते शिचा जालेन बद्धाः द्विजाः पक्षिणो यथा चेष्टन्ते तद्वत् अतः सः कलयतीति कालो भगवानेवेह जयपराजयादौ कारणम् ॥ ८ ॥ ओज इति ॥ ओज आदिरूपेण स्थितं तं भगवन्तमेव हेतुमज्ञाय अविज्ञाय ल्यबार्षः जनो मोहात् जडमस्वतन्त्रमात्मानं देहमेव हेतुं मन्यते । ओजः सहो

इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः ॥ तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम् ॥ विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे ॥ द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ८ ॥ ओजः सहो बलं प्राणममृतं मृत्युमेव च ॥ तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥ ९ ॥ यथा दारुमयी नारी यथा यन्त्रमयो मृगः ॥ एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः ॥ १० ॥ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः ॥ शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात् ॥ ११ ॥ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम् ॥ १२ ॥ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ॥ भवन्त्येव हि तत्काले यथानिच्छोर्विपर्ययाः ॥ १३ ॥

बलं क्रमादिन्द्रियमनोदेहशक्तयः स्पष्टमन्यत् ॥ ९ ॥ यथेति ॥ स्पष्टम् ॥ १० ॥ पुरुष इति ॥ पुरुषः प्रकृत्यधिष्ठाता प्रकृतिः प्रधानं व्यक्तं महत्तत्त्वमात्मा अहङ्कारः भूतानि आकाशादीनि इन्द्रियाणि चक्षुरादीनि आशया मनो बुद्धिश्चित्तं च एते यस्य भगवतोऽनुग्रहाद्विना अस्य विश्वस्य सर्गादौ न शक्नुवन्ति समर्था न भवन्ति ॥ ११ ॥ ननु स्वकर्मद्वारा जीव एव सृष्ट्यादिहेतुरिति मीमांसका मन्यन्ते तत्राह—अविद्वानिति ॥ एवमीश्वरं स्वतन्त्रं सर्वनियन्तारमविद्वान् अजानन्ननीशं पराधीनतया असमर्थमात्मानं जीवमीश्वरं स्वतन्त्रं मन्यते ननु पित्रादयः स्रष्टारो व्याघ्रादयो हन्तारः प्रसिद्धास्तत्राह । वस्तुतः स्वयं भगवानेव भूतैर्भूतानि सृजति तैरेव तानि ग्रसते ॥ १२ ॥ आयुरिति ॥ याः पुरुषस्य आयुः श्रीः कीर्तिरैश्वर्यं चेत्याशिषः काम्यमानाः सन्ति ता अपि तत्काले आयुराद्युचिते काले भगवत एव भवन्ति अनिच्छोरपि विपर्यया अपकीर्त्यादयो यथा प्रयत्नं विनैव भवन्ति तथेत्यर्थः । अतस्तव जयकालत्वात्त्वमेव जेष्यसीत्यर्थः ॥ १३ ॥

तस्मादिति ॥ तमात्सर्वेश्वराधीनत्वात् अकीर्तियशसो जयापजययोः अपि तथा मृत्युजीवितयोश्चेत्येतेषां कार्यभूताभ्यां सुखदुःखाभ्यां समः स्यात् ॥ १४ ॥ सत्त्वमिति ॥ सत्त्वादयः प्रकृतेर्गुणा भवन्ति आत्मनो गुणा न भवन्ति तत्र कार्यकारणसङ्घातात्मके देहे स्थितमात्मानं यः साक्षिमात्रं तदध्यासरहितं वेद जानाति स हर्षविषादादिभिर्न बध्यते न लिप्यत इत्यर्थः ॥ १५ ॥ अत्रार्थेऽहमेव ते गुरुरित्याह—पश्येति ॥ हे शक्र वृक्णं च्छिन्नमायुधं भुजश्च यस्य तमत एव त्वया निर्जितं तथापि तव प्राणजिहीर्षया यथाशक्ति मृधे घटमानं मां पश्य अतस्त्वमपि अहमिव विषादरहितो भव ॥ १६ ॥ प्राणेति ॥ अयं समर एव द्यूतं प्राणा एव ग्लहः पणो यस्मिन् सः इषव एवाक्षाः पाशकाः यस्मिन् सः वाहनानि हस्त्यश्वादीन्येव ततस्ततश्चाल्यमानानि आसनानि फलका यस्मिन् तथा च यथा द्यूते जयपराजयौ पूर्वं ज्ञातुमशक्यौ तथात्र समरे अमुष्य जयोऽमुष्य पराजय इति न ज्ञायते ॥ १७ ॥ इन्द्र इति॥ इन्द्रः गतालीकं निष्कपटं वृत्रवचः श्रुत्वा गृहीतवज्रः सन् तमपूजयत् वचसा सत्कृतवान् । ततश्च भगवद्भक्तस्य वृत्रस्य धैर्यवत्त्वे

तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥१४॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥१५॥ पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे ॥ घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥१६॥ प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः ॥ अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥१७॥ श्रीशुक उवाच ॥ इन्द्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत् ॥ गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः॥१८॥ इन्द्र उवाच ॥ अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी॥ भक्तः सर्वात्मनात्मानं सुहृदं जगदीश्वरम् ॥१९॥ भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम् ॥यद्विहायासुरं भावं महापुरुषतां गतः ॥२०॥ खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव॥वासुदेवे भगवति सत्वात्मनि दृढा मतिः ॥२१॥ यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे॥विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥२२॥

गतविस्मयः प्रहसन् सन् तं वृत्रमाहस्म ॥ १८ ॥ अहो इति ॥ हे दानव यस्य ते तवास्मिन् सङ्कटस्थानेऽपि ईदृशी विवेकधैर्यभक्त्यादियुक्तात्यलौकिकी मतिरस्ति अतस्त्वं सिद्धः कृतार्थः असि सर्वेषामात्मानं सुहृदं मित्रं च जगदीश्वरं भगवन्तं सर्वात्मना अनन्यभावेन मनसा त्वं भक्तः सेवितवानसि।प्रथमं कर्माविवक्षया कर्तरि क्तः ततः कर्मयोगः ॥ १९ ॥ भवानिति ॥ भवान् जनमोहिनीं वैष्णवीं मायाम् अतार्षीत् अजैषीत् । इडभाव आर्षः । यद्यस्मादासुरं भावं क्रौर्यमौढ्यादिकं विहाय महापुरुषतां ज्ञानवैराग्यभक्त्यादिभक्तलक्षणं गतः प्राप्त इत्यर्थः ॥ २० ॥ खल्विति ॥ रजःप्रकृतेस्तव सत्वात्मनि वासुदेवे भगवति दृढा निश्चला मतिः भक्तिरिति यत्तदिदं खलु महदाश्चर्यम् ॥ २१ ॥ यस्येति ॥ निश्रेयसं मोक्षस्तस्येश्वरे दातारि हरौ भगवति यस्य भक्तिरस्ति तस्य अमृताम्भोधौ विक्रीडतः तव क्षुद्रैः खातकोदकैः गर्त्तादिजलोपमैः स्वर्गादिभिः किं न किंचित्प्रयोजनम् अस्माकं तु भक्त्यभावादेतैरेव निर्वृतिरिति भावः ॥ २२ ॥

इतीति ॥ हे नृप अन्योऽन्यं धर्मजिज्ञासया इत्येवं धर्मं ब्रुवाणौ महावीर्यौ युधां युद्धानां युध्यन्त इति युधो योद्धारस्तेषां वा पती मुख्यौ इन्द्रवृत्रौ युयुधाते ॥ २३ ॥ आविध्येति ॥ हे मारिष मान्य अरिन्दमः वृत्रः कार्ष्णायसं लोहरचितं घोरं परिघं वामहस्तेन आविध्य भ्रमयित्वा इन्द्राय प्राहिणोत् प्रक्षिप्तवान् ॥ २४ ॥ स इति ॥ स तु देव इन्द्रः वृत्रस्य परिघं करभोपमं हस्तिशावकशुण्डाकारं करं च शतपर्वणा वज्रेण युगपच्चिच्छेद ॥ २५ ॥ दोर्भ्यामिति ॥ उत्कृत्तं मूलं ययोस्ताभ्यां दोर्भ्यां भुजाभ्यां रक्तं रुधिरं स्रवतीति तथाभूतोऽसुरः वृत्रो यथा वज्रिणा हतः च्छिन्नपक्षः खात् अत्युच्चप्रदेशाद् भ्रष्टः पतितो गोत्रः पर्वतो भाति तथा बभौ ॥ २६ ॥ कृत्वेति सार्द्धत्रयम् ॥ दैत्यो वृत्रः अधरां हनुं भूमौ कृत्वा उत्तरां हनुं दिवि स्वर्गे कृत्वा नभोवद्गम्भीरेण वक्त्रेण लेलिहः सर्पस्तद्वदुल्बणया भयङ्करया जिह्वया कालकल्पाभिः मृत्युतुल्याभि-

श्रीशुक उवाच ॥ इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृपः ॥ युयुधाते महावीर्याविन्द्रवृत्रौ युधांपती ॥ २३ ॥ आविध्य परिघं वृत्रः कार्ष्णायसमरिंदमः ॥ इन्द्राय प्राहिणोद् घोरं वामहस्तेन मारिष ॥ २४ ॥ स तु वृत्रस्य परिघं करं च करभोपमम् ॥ चिच्छेद युगपद्देवो वज्रेण शतपर्वणा ॥ २५ ॥ दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः ॥ छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः ॥ २६ ॥ कृत्वाऽधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम् ॥ २७ ॥ नभोगम्भीरवक्त्रेण लेलिहोल्बणजिह्वया ॥ दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम् ॥ २८ ॥ अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन् ॥ गिरिराट् पादचारीव पद्भ्यां निर्जरयन् महीम् ॥ २९ ॥ जग्रास स समासाद्य वज्रिणं सहवाहनम् ॥ महाप्राणो महावीर्यो महासर्प इव द्विपम् ॥ ३० ॥ वृत्रग्रस्तं तमालक्ष्य सप्रजापतयः सुराः ॥ हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः ॥ ३१ ॥ निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः ॥ महापुरुषसन्नद्धो योगमायाबलेन च ॥ ३२ ॥ भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः ॥ उच्चकर्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा ॥ ३३ ॥

र्दंष्ट्राभिश्च जगत्रयं ग्रसन्निव । शतार्षः । अतिमात्रोऽत्युच्छ्रितो महान् कायो यस्य सः महाप्राणः महावीर्यश्च अतस्तरसा वेगेन गिरीन् आक्षिपन् चालयन् पद्भ्यां महीं निर्जरयन् संचूर्णयन् पादचारी गिरिराडिव वज्रिणं वज्रधरमिन्द्रं समासाद्य झटिति प्राप्य सवाहनमैरावतसहितं महासर्पोऽजगरः द्विपमिव जग्रास । तङ्भाव आर्षः ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ वृत्रेति ॥ वृत्रग्रस्तमिन्द्रं समालक्ष्य दृष्ट्वा सप्रजापतयः सुरादयो निर्विण्णाः सन्तो हा कष्टमिति चुक्रुशुः ॥ ३१ ॥ निगीर्ण इति ॥ महापुरुषेण श्रीनारायणकवचरूपेण सन्नद्धो दंशितः योगमायाबलेन चेति योगबलेन स्वमायाबलेन च सन्नद्धः तत्र योगोऽष्टाङ्गः माया अन्तर्द्धाय पवनादिरूपेण स्थितिः इन्द्रः असुरेन्द्रेण निगीर्णः अतः उदरं गतोऽपि न ममार ॥ ३२ ॥ भित्त्वेति ॥ बलभित् इन्द्रः विभुः भगवदनुग्रहेण समर्थः वज्रेण तस्य कुक्षिं भित्त्वा बहिर्निष्क्रम्य ओजसा बलेन

शत्रोर्वृत्रस्य शिरः गिरिशृङ्गमिव वज्रेणोच्चकर्त चिच्छेद । अत्र वृत्रेणेन्द्रे ग्रस्ते मम हन्ताऽन्यो नास्तीति मत्वा वृत्रो योगेन देहं त्यक्तुं समाधिं चकार । तेन निश्चेष्टस्य तस्य कुक्षिं भित्त्वा इन्द्रः सुखेन तच्छिरश्चकर्त इति गिरिशृङ्गमिव वज्रेणेति दृष्टान्तेन लभ्यते ॥३३॥ वज्रस्त्विति ॥ आशुवेगः अतिवेगवानपि वज्रस्तस्य वृत्रस्य कन्धरं कन्धरां कृन्तन् तस्य समन्तात्सर्वदिक्षु परिवर्तमानोऽपि ज्योतिषां सूर्यादीनामयने दक्षिणोत्तरगतिरूपे संवत्सरे योऽहर्गणः षष्ट्युत्तरशतत्रयात्मको भवेत् तावताहर्गणेन वार्त्रहत्ये वृत्रहत्या-योग्ये काले शिरो न्यपातयत् । यद्वा । स्वार्थे तद्धितः । वृत्रहत्यायां वृत्रहननार्थं परिवर्तमान इत्यर्थः । यद्वा । आशुवेगोऽपि समन्तात् परिवर्तमानः कन्धरायाः सर्वतो दिक्षु भ्रमन्नेव कृन्तन् नत्वेकतो दिशः तत्रापि वर्षमितेन कालेन कन्धराया महासारत्वात् यद्वा वार्त्रहत्ये इति अयनविशेषणम् दण्डादिप्रत्ययान्तात्स्वार्थिकेन तत्र भवार्थेन वा अणा रूपम् ॥ ३४ ॥ तदेति ॥ तदा च खे स्वर्गे दुन्दुभयो विनेदुः गन्धर्वसिद्धादयश्च वार्त्रघ्नलिङ्गैर्वृत्रहन्तुर्वीर्यप्रकाशकैर्मन्त्रैर्वार्त्रहत्याय शवसे पृतनाषाढाय चेत्याद्यैस्तमि-न्द्रमभिष्टुवाना अभिष्टुवन्तः मुदा कुसुमैरभ्यवर्षन् ॥ ३५ ॥ वृत्रस्येति ॥ हे अरिन्दम वृत्रस्य देहान्निष्क्रान्तम् आत्मज्योतिः जीवाख्यं तेजः सर्वलोकानां पश्यतां सताम्

वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन् समन्तात् परिवर्तमानः ॥ न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥३४॥ तदा च खे दुन्दुभयो विनेदुर्गन्धर्वसिद्धाः समहर्षिसङ्घाः ॥ वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन् ॥ ३५ ॥ वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम॥ पश्यतां सर्वलोकानामलोकं समपद्यत ॥ ३६ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे वृत्रवधो नाम द्वादशोऽध्यायः ॥१२॥ श्रीशुक उवाच ॥ वृत्रे हते त्रयो लोका विना शक्रेण भूरिद ॥ सपाला ह्यभवन् सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥ देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयम् ॥ प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः ॥ २ ॥

अलोकं लोकातीतं भगवन्तं समपद्यत सम्यक् पुनरावृत्तिवर्जं यथा तथा प्राप ॥ ३६ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्॥ गङ्गासहायः षष्ठस्य द्वादशे निरमादिमाम् ॥ १२ ॥ त्रयोदशे वृत्रहत्याभयान्नष्टश्चिरं वृषा ॥ रक्षितो विष्णुना तत्र श्लोका दहनबाहवः ॥ षड्वाचेति पादोना षड्विंशतिरनुष्टुभः ॥ १३ ॥ वृत्रे इति ॥ हे भूरिद वृत्रे हते सति शक्रेण विना सपालाः त्रयः लोकाः भयङ्करवृत्रमरणात् विज्वराः सन्तापरहिताः स्वर्गादिस्वस्वस्थ.नभोगसम्पत्त्या च निर्वृतेन्द्रियाः आनन्दितमनसश्चाभवन् ॥ १ ॥ देवेति ॥ ततः स्थानाद्देवादयो ब्रह्मेशादयश्च स्वयं स्वधिष्ण्यानि प्रतिजग्मुः । देवानुगाः सेनापतयः गन्धर्वादयश्च अत्र अनिर्वृतं शक्रमपृष्ट्वा स्वयमेव प्रतिजग्मुरिति स्वामिपादाः । यतोऽत्र वृत्रवधानन्तरमेव इन्द्रस्य स्वधिष्ण्यगमनं नोपपद्यते वृत्रवधक्षण एव वृत्रहत्योपद्रवप्राप्तेः तस्मादन्येषु वृत्रवधानन्तरं गतेष्वपि इन्द्रस्तु मानससरोवरादागत्य प्रवर्तिताद-श्वमेधात्परतो गत इति बोद्धव्यम् । ब्रह्मेशेन्द्रादय इत्यत्रेन्द्रग्रहणं तु न समकालत्वाय किन्तु क्रियान्वयमात्राय ॥ २ ॥

इन्द्रस्येति ॥ भो मुने येन वृत्रवधेन हरेरिन्द्रस्य स्पष्टं शेषम् ॥ ३ ॥ वृत्रेति ॥ वृत्रस्य विक्रमेण संविग्नाः भीताः ऋषिभिः सह सर्वे देवाः तस्य वृत्रस्य वधाय इन्द्रं प्रार्थयन् प्रार्थयन्त इन्द्रश्च बृहद्वधात् ब्राह्मणवधात् भीतः सन् वृत्रवधं नैच्छत् ॥ ४ ॥ स्त्रीति ॥ अनुगृह्णद्भिर्मय्यनुग्रहं कुर्वद्भिस्त्र्यादिभिर्विश्वरूपवधोद्भवमेनः पापं विभक्तं विभज्य गृहीतमतोऽहं ततो विमुक्त इति शेषः । वृत्रहत्यामहं क्व मार्ज्मि कस्यै दत्त्वात्मानं शोधयिष्यामि ॥५॥ ऋषय इति ॥ पूर्वार्द्धं स्पष्टम् । हयमेधेन वयं त्वा याजयिष्याम सलोप आर्षः। तथा च ते भद्रं भविष्यति पापाद्विनिर्मुक्तो भविष्यसि अतो मा स्म भैः भयं मा कुरु सिज्लुगार्षः ॥ ६ ॥ हयमेधेनेति ॥ हयमेधेन पुरुषं परमात्मानमीश्वरं देवं नारायणम् इष्ट्वा पूजयित्वा तत्प्रसादात् जगद्वधात् जगद्वधजनितात् पापादपि विमोक्ष्यसे किमेकया वृत्रहत्यया विमोक्ष्यस इत्यत्राश्चर्यमिति शेषः ॥ ७ ॥ ब्रह्मेति ॥ ब्रह्महादयो पातकिनोऽपि यस्य नारायणस्य नामकीर्त्तनमात्रात् शुद्ध्येरन् । तङार्षः॥८॥ तमिति ॥ श्रद्धान्वितस्त्वम् अस्माभिरनुष्ठितेन महामखेनाश्वमेधेन तं भगवन्तमिष्ट्वा स ब्रह्मब्राह्मणसहितं चराचरं

राजोवाच ॥ इन्द्रस्याऽनिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने ॥ येनासन् सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥ श्रीशुक उवाच ॥ वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः ॥ तद्वधायार्थयन्निन्द्रं नैच्छद्भीतो बृहद्वधात् ॥ ४ ॥ इन्द्र उवाच ॥ स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवम् ॥ विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व माज्म्र्यहम् ॥ ५ ॥ श्रीशुक उवाच ॥ ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन् ॥ याजयिष्याम भद्रं ते हयमेधेन मा स्म भैः ॥ ६ ॥ हयमेधेन पुरुषं परमात्मानमीश्वरम् ॥ इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥७॥ ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ॥ श्वादः पुल्कसको वाऽपि शुध्येरन् यस्य कीर्तनात् ॥८॥ तमश्वमेधेन महामखेन श्रद्धाऽन्वितोऽस्माभिरनुष्ठितेन ॥ हत्वाऽपि सब्रह्म चराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥ ९ ॥ श्रीशुक उवाच ॥ एवं संचोदितो विप्रैर्मरुत्वानहनद्रिपुम् ॥ ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥ तयेन्द्रः स्मासहत् तापं निर्वृतिर्नाऽमुमाऽऽविशत् ॥ ह्रीमन्तं वाच्यतां प्राप्तं सुखयन्त्यपि नो गुणाः ॥ ११ ॥

सर्वं जगद्धत्वापि तत्पापेन यर्हि न लिप्यसे तर्हि खलस्य वृत्रस्य निग्रहजनितेन न लिप्यस इति किं वक्तव्यम् ॥९॥ एवमिति ॥ एवं विप्रैः संचोदितः प्रेरितो मरुत्वान् इन्द्रः रिपुं शत्रुं वृत्रमहनत् शब्लुगभाव आर्षः । तस्मिन् वृत्रे हते सति "वृषाकपिमिन्द्रं वृषाकपिर्हरे शक्रे हरीतक्यां जनार्दने" इत्यभिधानात् ब्रह्महत्या आससाद । अत्र प्रायश्चित्तबलेन पापाचरणात् पूर्वतोऽपीयमपि प्रबलदुःखभोगं विना केवलेन प्रायश्चित्तेन न शाम्येदित्यत एव तदानीमेव तमश्वमेधेन न याजयामासुरिति ज्ञेयम् । ऋषयोऽपि प्रायश्चित्तबलेन पापप्रवर्त्तनजन्यपापफलभूतं दुःखं नहुषेणेन्द्रपदारूढेन प्रापिताः ॥१०॥ तयेति ॥ स्मेत्यवधारणे । तया देवादिभिः कारितया हत्यया इन्द्रस्तापमेवासहत् असहत अतोऽमुमिन्द्रं निर्वृतिः सुखं नाविशत् यतः ह्रीमन्तं वाच्यतां स्वर्गसुखलोभेनायं ब्राह्मणं हतवानिति निन्द्यतां प्राप्तमैश्वर्यादयो गुणा अपि नो सुखयन्ति ॥ ११ ॥

तामिति युग्मम् ॥ चाण्डालीमिव रूपिणीं जरया वेपमानम् अङ्गं यस्यास्तां यक्ष्मग्रस्तां क्षयरोगव्याप्ताम् असृक् रुधिरं तद्व्याप्तः पटो यस्यास्तां पलितान् लम्बमानान् श्वेतान् केशान् विकीर्य स्थिताम् इन्द्रं प्रति तिष्ठ तिष्ठेति भाषिणीं मीनस्येव गन्धो यस्य स मीनगन्धिः स चासावसुश्च श्वासवायुस्तस्य गन्धेन मार्गदूषणं कुर्वतीं हत्यामनुधावन्तीमिन्द्रो ददर्श ॥ १२ ॥ १३ ॥ नभ इति ॥ हे विशाम्पते हे नृप सहस्राक्षः इन्द्रः प्रथमं नभः आकाशं गतस्तत्रापि तां दृष्ट्वा सर्वा दिशो गतस्ततोऽत्र सर्वत्र तां दृष्ट्वा प्रागुदीचीमैशानीं दिशं गतः संस्तूर्णं मानसं सरः प्रविष्टः ॥ १४ ॥ स इति ॥ स इन्द्रः यत् यस्मात् इह जलेऽवसत् स्वयं चाग्निदूतः भागनेता यस्य सः तथा चाग्नेर्जलप्रवेशासम्भवात् न लब्धो भागो येन सः भोग इत्यपि पाठः । अन्तः मनसि ब्रह्मवधात् ब्रह्महत्यातो विमोक्षं संचिन्तयन्न लक्षितः सर्वैरज्ञात एव साहस्रं सहस्रं वर्षाणि पुष्करनालस्य तन्तून् अत्यन्तसूक्ष्मत्वादलक्ष्यान् आवसत् यद्यप्यग्निना जलं न दुष्प्रवेशं तदन्तःस्थिताय वरुणायापि हविर्वहनात् तथापि मानसजलं दुष्प्रवेशमेवासीत् रुद्रानुचरै रक्ष्यमाणत्वात् अत एव सर्वत्र गामिनी ब्रह्महत्यापि तत्र गन्तुं न शशाकेति ॥ १५ ॥ तावदिति ॥ न अकं दुःखं यस्मिन्निति नाकः पुण्यलोकः तृतीयो नाकः

**तां ददर्शानुधावन्तीं चाण्डालीमिव रूपिणीम् ॥ जरया वेपमानाङ्गीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२ ॥ विकीर्य पलितान् केशान् तिष्ठ तिष्ठेति भाषिणीम् ॥ मीनगन्ध्यसुगन्धेन कुर्वतीं मार्गदूषणम् ॥ १३ ॥ नभोगतो दिशः सर्वाः सहस्राक्षो विशांपते ॥ प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप मानसम् ॥ १४ ॥ स आवसत् पुष्करनालतन्तूनलब्धभोगो यदिहाग्निदूतः ॥ वर्षाणि साहस्रमलक्षितोऽन्तः संचिन्तयन् ब्रह्मवधाद्विमोक्षम् ॥१५॥ तावत् त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः ॥ स सम्पदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चां गतिमिन्द्रपत्न्या ॥ १६ ॥ ततो गतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारिताघः ॥ पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या ॥ १७ ॥**

त्रिणाकः स्वर्गस्तं तावत् विद्यातपोयोगबलैरनुभावः स्वर्गपालनसामर्थ्यं यस्य सः नहुषो नाम राजा शशास सम्पदैश्वर्याभ्यां यो मदस्तेनान्धा विवेकरहिता बुद्धिर्यस्य नहुषः इन्द्रपत्न्या शच्या तिरश्चां गतिं सर्पयोनिं नीतःउपायेन प्रापितः एवं व्याख्यायते । नहुषः किल कदाचिदिन्द्राणीमुवाच । इन्द्रस्तावदहमतस्त्वं मां भजेति तया चावेदितवृत्तान्तो बृहस्पतिस्ताम् उवाच । ब्राह्मणवाह्यशिबिकामारुह्यागतं त्वां भजेयमिति तं ब्रूहि । ततोऽसौ ब्राह्मणशापात्पतिष्यतीति तथा च तयोक्तो नहुषोऽगस्त्यादीन् शिबिकां वाहयामास । तदा च शीघ्रं सर्प सर्पेति ब्रुवन्नगस्त्यं पदा पस्पर्श । तेन कुपितेन सर्पो भवेति शप्तो महान् सर्पोऽजगरोऽभूदिति ॥ १६ ॥ तत इति ॥ ततो नहुषभ्रंशानन्तरम् ऋतंभरः सत्यसङ्कल्पो हरिस्तस्य ध्यानेन निवारितमघं प्रायश्चित्तबलेन पापाचरणरूपोऽपराधः येन सः ब्राह्मणो ब्राह्मणानां वा गिरा वाक्येनोपहूतः सन्निन्द्रः स्वर्गं गतः दिग्देवतया ईशानदिशि स्थितया श्रीरुद्रेणेन्द्ररक्षकेण हतमोजो यस्य स हत्याजनितः पापस्तु पुंस्त्वमार्षम्। विष्णुपत्न्या मानससरः कमलवनस्थितया लक्ष्म्या अवितमिन्द्रं नाभ्यभूत्

तस्याभिभवं नाकरोदित्यर्थः ॥ १७ ॥ तमिति ॥ हे भारत ब्रह्मर्षयः तमिन्द्रमभ्येत्य पुरुषस्य भगवत आराधनं यस्मिंस्तेन हयमेधेन यथावद्दीक्षयां चक्रुः ॥ १८ ॥ अथेति युग्मम् ॥ ब्रह्मवादिभिः वेदवादिभिः ऋषिभिर्वितते अनुष्ठिते अश्वमेधे महेन्द्रेण सर्वदेवमय आत्मा यस्य तस्मिन् सर्ववेदमयात्मनीति वा पाठः । पुरुषे सर्वान्तर्यामिणि भगवति इज्यमाने सति अथानन्तरमेव स पूर्वोक्तः त्वाष्ट्रवधो वृत्रवधाज्जातं पापं स्वतो भूयान् तत्रापि ज्ञानपूर्वककृतत्वात्तस्य भक्तत्वाच्च पापचयो जातः सोऽपि तेन पूजितेन भगवतैव भानुना नीहार इव शून्याय नीतः निरवशेषो विनाशितः ॥ १९ ॥ २० ॥ स इति ॥ स इन्द्रः मरीचिमुख्यैर्मुनिभिर्वितायमानेन यथोदितेन यथाविध्यनुष्ठितेन तेन वाजिमेधेन अश्वमेधेन अधिकृता यज्ञा येन तमधियज्ञं पुरुषं सर्वान्तर्यामिणं पुराणं सर्वकारणकारणमिष्ट्वा विधूतपापः महान् सर्वपूज्यः आस दिदीपे ॥ २१ ॥ इदमिति युग्मम् ॥ इदं स्वरूपतो गुणतश्च महाख्यानम् अशेषाणां निरवशेषाणां पाप्मनां प्रक्षाल्यतेऽनेनेति प्रक्षालनं निवर्त्तकमित्यर्थः । तीर्थानि पादयोर्यस्य स तीर्थपदः भगवान् तस्यानुकीर्त्तनं

**तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत ॥ यथावद्दीक्षयां चक्रुः पुरुषाराधनेन ह॥१८॥अथेज्यमानेः पुरुषे सर्वदेवमयात्मनि ॥ अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः॥१९॥ स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप ॥ नीतस्तेनैव शून्याय नीहार इव भानुना ॥२०॥ स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः॥ इष्ट्वाऽधियज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः॥२१॥ इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् ॥ भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः ॥ २२ ॥ पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम्॥ धन्यं यशस्यं निखिलाघमोचनं रिपुंजयं स्वस्त्ययनं तथाऽऽयुषम् ॥ २३ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे इन्द्राश्वमेधवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ परीक्षिदुवाच ॥ रजस्तमःस्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः ॥ नारायणे भगवति कथमासीद् दृढा मतिः ॥ १ ॥**

माहात्म्यवर्णनं यस्मिंस्तत् भक्तेरुच्छ्रय उत्कर्षो यस्मिन् तत् भक्तजनानां वृत्रेन्द्रादीनामनुवर्णनं यस्मिंस्तत् महेन्द्रस्य पापान्मोक्षो यस्मिंस्तत् मरुत्वतः इन्द्रस्य विशेषेण जयो यस्मिंस्तत् इन्द्रियमिन्द्रियपाटवकरम् इन्द्रजुष्टं वा धन्यं धनप्रदं यशस्यं यशोवर्द्धकं निखिलाघमोचकं सर्वदुःखनिवर्त्तकं रिपुंजयं शत्रुजयप्रदं स्वस्त्ययनं पुत्रपौत्रादिमङ्गलकारणं तथा आयुषमायुर्वर्द्धकमस्ति ।अत्रायुःशब्दो लक्षणया आयुर्वर्द्धकार्थः ततः स्वार्थिकोऽण्।अथो अत इदमाख्यानं बुधाः सदा पठेयुः सदा सावकाशाभावे तु पर्वणि पर्वणि एकादश्यादिविहितपवित्रकालेऽवश्यं शृण्वन्ति शृणुयुः ॥ २२॥ २३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य व्यधादेतां त्रयोदशे ॥ १३ ॥ चतुर्दशे कृच्छ्रलब्धे चित्रकेतोः सुते मृते ॥ अतिशोकोऽभवत्तत्र श्लोकाः षष्टिस्तथार्द्धकः ॥ अनुष्टुभः सप्तषष्टिरुवाचेति च सप्तकम् ॥ १४ ॥ रज इति ॥ हे ब्रह्मन् रजः तमश्च स्वभावो यस्य तस्य पाप्मनः पापाचारस्य वृत्रस्य नारायणे भगवति दृढा मतिः निश्चला भक्तिः कथमासीत् ॥ १ ॥

देवानामिति ॥ शुद्धसत्वानां शुद्धसत्वगुणोपाधीनाम् अत एवामलात्मनां शुद्धान्तःकरणानां देवानामृषीणां चापि प्रायेण मुकुन्दचरणे भक्तिर्नोपजायते । अन्तःकरणशुद्धौ यथा ज्ञानं स्वतः स्यात्तथा न भक्तिः तस्याः साधुसङ्गं विना असंभवात् ॥ २ ॥ रजोभिरिति ॥ जन्तवो जीवा पार्थिवैः रजोभिः परमाणुभिः समाः सङ्ख्याताः अनन्ताः उक्तास्तेषां मध्ये ये केचन कतिपय एव मनुजादयः श्रेयो धर्ममीहन्ते कुर्वन्ति ॥ ३ ॥ प्राय इति ॥ हे द्विजोत्तम तेषां धर्मानुष्ठातॄणामपि मध्ये केचन वै मुमुक्षवो भवन्ति । मुमुक्षूणामपि सहस्रेषु कश्चिदेव गृहादिसङ्गाद् मुच्येत तेष्वपि कश्चिदेव सिद्ध्यति तत्त्वं जानाति ॥ ४ ॥ मुक्तानामिति ॥ हे महामुने मुक्तानां निवृत्ताध्यासानां सिद्धानां ज्ञानिनामपि कोटिष्वपि प्रशान्तात्मा भोगवासनारहितान्तःकरणः नारायणपरायणः सुदुर्लभः अत्रास्यातिवैरल्येन दौर्लभ्यात् प्रक्रान्तसहस्रशब्दमप्रयुज्यकोटिष्वपीत्युक्तम् ॥ ५ ॥ वृत्र इति ॥ स प्रसिद्धः पापः असुरदेहः अत एव सर्वलोकान् उपतापयतीति तथाभूतो वृत्रः सङ्ग्रामे उल्बणे भयङ्करस्थानेऽपि कृष्णे इत्थं वर्णितप्रकारा दृढा निश्चला मतिर्भ-

देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् ॥ भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ २ ॥ रजोभिः समसङ्ख्याताः पार्थिवैरिह जन्तवः ॥ तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥ ३ ॥ प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम ॥ मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ॥४॥ मुक्तानामपि सिद्धानां नारायणपरायणः ॥ सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥५॥ वृत्रस्तु स कथं पापः सर्वलोकोपतापनः ॥ इत्थं दृढमतिः कृष्ण आसीत् संग्राम उल्बणे ॥ ६ ॥ अत्र नः संशयो भूयान् श्रोतुं कौतूहलं प्रभो ॥ यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥ ७ ॥ सूत उवाच ॥ परीक्षितोऽथ संप्रश्नं भगवान् बादरायणिः ॥ निशम्य श्रद्दधानस्य प्रतिनन्द्य वचोऽब्रवीत् ॥ ८ ॥ श्रीशुक उवाच ॥ शृणुष्वावहितो राजन्नितिहासमिमं यथा ॥ श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि ॥ ९ ॥ आसीद्राजा सार्वभौमः शूरसेनेषु वै नृप ॥ चित्रकेतुरिति ख्यातो यस्यासीत् कामधुङ् मही ॥ १० ॥ तस्य भार्यासहस्राणां सहस्राणि दशाभवन् ॥ सान्तानिकश्चापि नृपो न लेभे तासु संततिम् ॥ ११ ॥

क्तिर्यस्य स तथाभूतः कथमासीत् ॥ ६ ॥ अत्रेति ॥ हे प्रभो यो वृत्रः समरे पौरुषेण शौर्यादिना सहस्राक्षम् अतोषयत् ननु भयेन कृष्णं शरणं गतः तस्य वृत्रस्य अत्र भक्त्यादिमत्त्वे नोऽस्माकं श्रोतॄणां सर्वेषां भूयान् संशयो भवति अतस्तत्कारणं श्रोतुं महत्कौतूहलमुत्साहो वर्त्तते ॥ ७ ॥ परीक्षित इति ॥ श्रद्दधानस्य परीक्षितः सम्यक् प्रश्नं निशम्य भगवान् बादरायणिः अथानन्तरमेव प्रतिनन्द्य वचोऽब्रवीत् ॥ ८ ॥ शृणुष्वेति ॥ हे राजन् अवहितः सावधानस्त्वं द्वैपायनमुखात् नारदाद्देवलादपि श्रुतम् इमम् इतिहासं यथा यथावच्छृणुष्व । तद्भार्षः ॥ ९ ॥ आसीदिति ॥ हे राजन् शूरसेनेषु देशेषु सार्वभौमः चित्रकेतुरिति ख्यातः राजा आसीत् । यस्य मही कामधुगासीत् ॥ १० ॥ तस्येति ॥ तस्य भार्यासहस्राणां दश सहस्राणि कोटिर्भार्या अभवन्नित्यर्थः । सान्तानिकः स्वयं सन्तानार्होऽपि पुत्रोत्पादनसमर्थोऽपि स नृपः तासु सन्ततिं पुत्रं न

लेभे दैवयोगेन ताः सर्वाः वन्ध्या एव मिलिताः इति भावः॥ ११ ॥ रूपेति ॥ रूपादिभिः सर्वैर्गुणैः इयङ्कार्षः सम्पन्नस्यापि तस्य वन्ध्यापतेःपुत्रं विना चिन्ताभूत्॥१२॥ नेति ॥ सार्वभौमस्यापि तस्य सर्वाः सम्पदः वामलोचनाः मनोहरनेत्रा महिष्यः इयं भूश्च प्रीतिहेतवो नाभवन् ॥ १३ ॥ तस्येति ॥ भगवानङ्गिरा ऋषिरेतान् लोकाननुचरन् यदृच्छया भगवत्प्रेरणया एकदा तस्य चित्रकेतोर्भवनमुपागच्छत् ॥ १४ ॥ तमिति ॥ तमङ्गिरसं प्रत्युत्थानादिभिर्विधिवत्पूजयित्वा कृतातिथ्यं सुखमासीनं स्वयमपि राजा समाहितः संयतः उपासीदत् तस्य समीपमुपविवेश ॥ १५ ॥ महर्षिरिति ॥ हे महाराज महर्षिः प्रश्रयावनतं क्षितौ उपासीनं तं प्रतिपूज्य सत्कृत्य समाभाष्य सम्बोध्य इदं वक्ष्यमाणमब्रवीत् ॥१६॥ अपीति ॥ अपि किं ते तवात्मनः शरीरस्यानामयमारोग्यमस्ति स्वस्ति शुभमस्ति तथाप्रकृतीनामपि अनामयं स्वस्त्यस्ति किम् । यथा सप्तभिः प्रकृतिभिः महदहङ्कारपञ्चसूक्ष्मभूतरूपैर्गुप्तः पुमान् जीवः नित्यं गुप्तो भवति नतु ता विना क्षणमपि तिष्ठति तथा राजापि सप्तभिः।"स्वाम्यमात्यजनपदा दुर्गद्रविणसंचयाः।दण्डो मित्रं च तस्यै-

रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्य गुणैः सर्वैश्चिन्ता वन्ध्यापतेरभूत् ॥ १२ ॥ न तस्य संपदः सर्वा महिष्यो वामलोचनाः ॥ सार्वभौमस्य भूश्चेयमभवन् प्रीतिहेतवः ॥ १३ ॥ तस्यैकदा तु भवनमङ्गिरा भगवानृषिः ॥ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥ तं पूजयित्वा विधिवत् प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपासीदत् सुखासीनं समाहितः ॥ १५ ॥ महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ ॥ प्रतिपूज्य महाराज समाभाष्येदमब्रवीत् ॥ १६ ॥ अङ्गिरा उवाच ॥ अपि तेऽनामयं स्वस्ति प्रकृतीनां तथात्मनः ॥ यथा प्रकृतिभिर्गुप्तः पुमान् राजापि सप्तभिः ॥ १७ ॥ आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् ॥ राज्ञा तथा प्रकृतयो नरदेवाऽहिताधयः ॥१८॥ अपि दाराः प्रजामात्या भृत्याः श्रेण्योऽथ मन्त्रिणः ॥ पौरा जानपदा भूपा आत्मजा वशवर्तिनः ॥१९॥ यस्यात्मानुवशश्चेत् स्यात् सर्वे तद्वशगा इमे ॥ लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥ २० ॥

ताः सप्त प्रकृतयो मताः ॥ " इत्युक्तलक्षणाभिर्गुप्त एव सुखमनुभवति नान्यथा स्वामी स्वयम्॥१७॥आत्मानमिति ॥ हे नरदेव आत्मानं प्रकृतिषु अद्धा साक्षान्निधाय तदनुवर्तिनं कृत्वा राजा श्रेयो राज्यसुखमाप्नुयात् तथा प्रकृतयोऽपि राज्ञा आहिताधयः निहितनिक्षेपाः धनतुरगहस्त्यादिभिः समृद्धा भवन्ति । आहताधय इति पाठे आ समन्ततो हताधयो निरस्तमनोदुःखा भवन्ति ॥ १८ ॥ अपीति ॥ दाराः प्रजाश्च अमात्याश्च भृत्याः श्रेण्यः समयविशेषेण सङ्घशो वर्त्तमानास्तैलिकताम्बूलिकादयः वणिग्विशेषाः पौराः पुरवासिनः जानपदाः तत्तद्देशाधिकारिणः भूपाः खण्डमण्डलपतयः आत्मजाः पुत्राश्चापि किन्ते वशवर्तिनः सन्ति ॥ १९ ॥ तव मनः स्ववशेऽस्ति न वेत्याशयेनाह—यस्येति ॥ यस्य आत्मा मनः अनुवशः अनुवर्त्ती स्वाधीनश्चेत् स्यात्तदा इमे सर्वे दारापत्यादयस्तद्वशगाः तद्वशवर्त्तिनो भवन्ति किं च सपाला लोकाः अतन्द्रिता निरलसाश्च सन्तो बलिं

पूजां यच्छन्ति भृत्यादीनां का वार्त्ता ॥ २० ॥ तदाप्यब्रुवाणं राजानं पुनराह—आत्मन इति ॥ आत्मनस्तवात्मा मनः न प्रीयते न तुष्यति तत्किमर्थमिति शेषः । परतो वा स्वतो वा न लब्धः कामो मनोरथो येन तथाभूतमेव त्वामहं लक्षये जानामि अत एव तव मुखं चिन्तया शबलं व्याप्तं लक्षये ॥ २१ ॥ एवमिति ॥ हे राजन् विदुषा सर्वज्ञेनापि मुनिना त्वन्मुखात्तद्वृत्तं श्रोतुमेवं विकल्पितः विविधप्रश्नविषयीकृतः स प्रजाकामः चित्रकेतुः प्रश्रयेणावनतः सन् मुनिमभ्याह स्म ॥ २२ ॥ भगवन्निति ॥ हे भगवन् सर्वज्ञ तपोज्ञानसमाधिभिर्ध्वस्तं निरस्तं पापमन्तःकरणावरकं कालुष्यं येषां तेषां योगिनां भवतां शरीरिषु अस्मदादिषु बहिरन्तर्यदवस्थितं तत्किं न विदितं सर्वं विदितमेवेत्यर्थः ॥ २३ ॥ तथापीति ॥ हे ब्रह्मन् यद्यपि तवाविदितं किंचिन्नास्ति अथाप्यात्मनि मनसि चिन्तितं संकल्पितं ब्रूयाम् भवत इति षष्ठी तृतीयार्थे । यतो विदुषापि पृच्छता भवता त्वयाहं प्रश्नेन चोदितोऽतस्त्वदनुज्ञया वक्तव्यमेवेति शेषः । यद्वा भवतोऽहमाज्ञाकारी ॥ २४ ॥ लोकेति ॥ यथा क्षुत्तृड्भ्यामन्नपानकामं

आत्मनः प्रीयते नात्मा परतः स्वत एव वा ॥ लक्षयेऽलब्धकामं त्वां चिन्तया शबलं मुखम् ॥ २१ ॥ एवं विकल्पितो राजन् विदुषा मुनिना-ऽपि सः ॥ प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम् ॥ २२॥ चित्रकेतुरुवाच॥ भगवन् किं न विदितं तपोज्ञानसमाधिभिः॥ योगिनां ध्वस्त-पापानां बहिरन्तः शरीरिषु ॥ २३ ॥ तथापि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम् ॥ भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥ लो-कपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः ॥ न नन्दयन्त्य प्रजं मां क्षुत्तृट्कामामिवापरे ॥ २५ ॥ ततः पाहि महाभाग पूर्वैः सह गतं तमः ॥ यथा तरेम दुस्तारं प्रजया तद् विधेहि नः ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यर्थितः स भगवान् कृपालुर्ब्रह्मणः सुतः ॥ श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारम-यजद्विभुः ॥ २७ ॥ ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत ॥ नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद्द्विजः ॥ २८ ॥

पुरुषम् अपरे स्रक्चन्दनादयो न सुखयन्ति तथा प्रजाकामम् अप्रजं पुत्ररहितं माम् असिजभाव आर्षः । लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसम्पदः न नन्दयन्ति॥२५॥ तत इति ॥ हे महाभाग ततः पुत्राभावात् पूर्वैः पित्रादिभिः सह तमोगतं नरकं प्राप्तं मां पाहि रक्ष । यथा प्रजया हेतुभूतया वयं दुस्तारं नरकं स्वार्थणिजन्तात्तरतेः खलु । तरेम न गच्छाम तथा तदुपायं नो विधेहि उपदिश । " पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ " इत्युक्तेः ॥ २६ ॥ इतीति ॥ इत्येवं भगवान् कृपालुर्ब्रह्मणः सुतः स द्विजो ब्राह्मणोऽङ्गिरा अर्थितः राज्ञा प्रार्थितः त्वाष्ट्रं त्वष्टृदेवताकं चरुं हविर्विशेषं श्रपयित्वा सिद्धं कृत्वा पुत्रलाभाय त्वष्टारमयजत् ॥ २७ ॥ ज्येष्ठेति ॥ हे भारत राज्ञो महिषीणां मध्ये या प्रथमविवाहितत्वेन ज्येष्ठा सौशील्यादिगुणविशिष्टतया श्रेष्ठा च नाम्ना कृतद्युतिरिति प्रसिद्धा तस्यै यज्ञोच्छिष्टं यज्ञशेषं द्विजोऽङ्गिरा अदात् ॥ २८ ॥

अथेति ॥ अथ तद्धविःशेषदानान्तरं हे राजन् तुभ्यं हर्षशोकप्रदस्तवात्मजः पुत्र एको भविता भविष्यतीति नृपतिं प्राह स्मेत्यन्वयः । इत्युक्त्वा च ब्रह्मसुतोऽङ्गिरा ययौ । हर्षशोकप्रद इति जन्मना हर्षो मरणेन शोक इति सूचितवानपि अप्रियत्वात् स्पष्टं नोवाच । राजा तु पुत्रो मे बहुगुणान्वितो भविष्यतीति हर्षदः । ऐश्वर्यवशात्सगर्वो भविष्यतीति शोकद इत्याशयं प्रकल्प्य प्रसन्न एवाभूत् इति ज्ञेयम् ॥ २९ ॥ सेति ॥ सा वन्ध्यापि कृतद्युतिस्तस्य हविःशेषस्य प्राशनाद्भक्षणादेव हेतोः चित्रकेतोः सकाशात् गर्भमधारयत् । यथा अग्नेः सकाशात् कृत्तिका देवी आत्मजं स्कन्दमधारयत् तद्वदित्यर्थः ॥ ३० ॥ तस्या इति ॥ हे नृप शूरसेनानामीशस्य चित्रकेतोस्तेजसा वीर्येण धृतो यो गर्भः स तस्याः कृतद्युतेः शनकैरनुदिनं ववृधे । शुक्लपक्षे यथा उडुपश्चन्द्रः शनकैर्वर्धते तद्वत् ॥ ३१ ॥ अथेति ॥ अथ काले प्रसूतिसमय उपावृत्ते प्राप्ते सति शूरसेनानां शूरसेनदेशनिवासिनां प्राणिनां शृण्वतां परमां मुदं जनयन् कुमारः समजायत ॥ ३२ ॥ हृष्ट इति ॥ तच्छ्रुत्वा हृष्टो राजा स्नातः शुचिरलङ्कृतश्च

अथाह नृपतिं राजन् भवितैकस्तवात्मजः ॥ हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥ २९ ॥ सापि तत्प्राशनादेव चित्रकेतोरधारयत् ॥ गर्भं कृतद्युतिर्देवी कृत्तिकाऽग्नेरिवात्मजम् ॥ ३० ॥ तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः ॥ ववृधे शूरसेनेशतेजसा शनकैर्नृप ॥ ३१ ॥ अथ काल उपावृत्ते कुमारः समजायत ॥ जनयञ्छूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥ हृष्टो राजा कुमारस्य स्नातः शुचिरलंकृतः ॥ वाचयित्वाऽऽशिषो विप्रैः कारयामास जातकम् ॥ ३३ ॥ तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च ॥ ग्रामान् हयान् गजान् प्रादाद्धेनूनामर्बुदानि षट् ॥ ३४ ॥ ववर्ष काममन्येषां पर्जन्य इव देहिनाम् ॥ धन्यं यशस्यमायुष्यं कुमारस्य महामनाः ॥ ३५ ॥ कृच्छ्रलब्धेऽथ राजर्षेस्तनयेऽनुदिनं पितुः ॥ यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्द्धत ॥ ३६ ॥ मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः ॥ कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥

सन् विप्रैः कुमारस्याशिषो वाचयित्वा जातकं जातकर्म कारयामास ॥ ३३ ॥ तेभ्य इति ॥ तेभ्यो विप्रेभ्यः हिरण्यादिकान् गजान्तान् प्रादात् तथा धेनूनां षट् अर्बुदानि प्रादात् । अर्बुदं दशकोट्यः वेदे तु कोटिरेवार्बुदं नियुतं च प्रयुतं चार्बुदं चेति प्रयुतानन्तरनिर्देशात् ॥ ३४ ॥ ववर्षेति ॥ महामनाः स नृपः कुमारस्य धन्यं धनकरं यशस्यं यशस्करम् आयुष्यम् आयुष्करं यथा तथा अन्येषामपि देहिनां कामान् मनोरथान् पर्जन्य इव ववर्ष यथोचितं पूरयामास । एके तु धन्यमुत्तमं कामं ववर्षेति व्याचख्युः ॥ ३५ ॥ कृच्छ्रेति ॥ यथा निस्वस्य दरिद्रस्य कृच्छ्राप्ते धनेऽनुदिनं स्नेहोऽनुवर्द्धते तथा कुमारपितुः राजर्षेः चित्रकेतोरथापि कृच्छ्रलब्धे तनयेऽनुदिनं स्नेहोऽन्ववर्द्धत ॥ ३६ ॥ मातुरिति ॥ मातुस्तु मोहादज्ञानात् समुद्भवो यस्य स पुत्रे स्नेहोऽतितरामन्ववर्द्धतेत्यनुषङ्गः । कृतद्युतेः सपत्नीनां तु प्रजाकामरूपो ज्वरस्तापोऽभवत् ॥ ३७ ॥

चित्रेति ॥ बालमन्वहं लालयतश्चित्रकेतोः यथा प्रजावति दारे कृतद्युतौ एकत्वमार्षम् अतिप्रीतिः संजज्ञे तथान्येषु प्रजारहितेषु दारेषु न संजज्ञे ॥ ३८ ॥ ता इति ॥ ताः प्रजारहिताः आत्मानं गर्हयन्त्यः अभ्यसूयया सपत्न्यां दोषारोपेण अनपत्येन अपुत्रत्वनिमित्तेन राज्ञः कर्त्तरि षष्ठी । अनादरणेन च पर्यतप्यन् ॥ ३९ ॥ गर्हणं दर्शयति—धिगिति ॥ पत्युरपि अगृहसंमतां न गृहे बहुमतां । यद्वा । अगृहं गृहभिन्नं वनं तत्रैव संमतां पत्युरपि वनवासदानार्हामित्यर्थः । सप्रजाभिः सपत्नीभिः दासीमिव तिरस्कृतां पापामप्रजां स्त्रियं धिक् असिजभाव आर्षः ॥ ४० ॥ दासीनामिति ॥ स्वामिनः परिचर्यया अभीक्ष्णं लब्धो मानः सम्मानो याभिस्तासां दासीनां कोऽनुसंतापो भवेत् न कोऽपीत्यर्थः । दुर्भगाः वयं तु यथा दास्याः दासी भवति तथा नादरपात्राणि । यद्वा । दास्या दासीव कस्याश्च दुर्भगाया दास्या दास्य इव वयं दुर्भगाः ॥ ४१ ॥ एवमिति ॥ एवं सपत्न्याः पुत्रसम्पदा दह्यमानानां राज्ञो न सम्मता वृत्तिर्जीवनं यासां तासां पत्नीनां बलवान् विद्वेषः अभवत् ॥ ४२ ॥ विद्वेषेति ॥ विद्वेषेण नष्टा मतिर्विवेको यासां ताः

चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति ॥ न तथान्येषु संजज्ञे बालं लालयतोऽन्वहम् ॥ ३८ ॥ ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया ॥
आनपत्येन दुःखेन राज्ञोऽनादरणेन च ॥३९॥ धिगप्रजां स्त्रियं पापां पत्युश्चागृहसंमताम् ॥ सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥४०॥
दासीनां को नु संतापः स्वामिनः परिचर्यया ॥ अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥४१॥ एवं संदह्यमानानां सपत्न्याः पुत्रसंपदा ॥
राज्ञोऽसंमतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः ॥ गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥ ४३ ॥
कृतद्युतिरजानन्ती सपत्नीनामघं महत् ॥ सुप्त एवेति संचिन्त्य निरीक्ष्य व्यचरद्गृहे ॥ ४४ ॥ शयानं सुचिरं बालमुपधार्य मनीषिणी ॥ पुत्रमानय
मे भद्रे इति धात्रीमचोदयत् ॥ ४५ ॥ सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् ॥ प्राणेन्द्रियात्मभिस्त्यक्तं हताऽस्मीत्यपतद्भुवि ॥ ४६ ॥
तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि ॥ प्रविश्य राज्ञी त्वरयात्मजान्तिकं ददर्श बालं सहसा मृतं सुतम् ॥ ४७ ॥

दारुणचेतसः नृपतिं प्रति दुर्मर्षाः तदनादरमसहमानाः स्त्रियः कुमाराय विषं ददुः ॥ ४३ ॥ कृतेति ॥ कृतद्युतिश्च सपत्नीनां महत् अघं विषदानरूपमपराधम् अजानन्ती नुमार्षः । बालः सुप्त एवेति संचिन्त्य सुप्तवन्निरीक्ष्य गृहे व्यचरत् ॥ ४४ ॥ शयानमिति ॥ मनीषिणी धीमती कृतद्युतिः बालं सुचिरं शयानम् उपधार्य संचिन्त्य हे भद्रे मे पुत्रमानयेति धात्रीं स्तनदात्रीमचोदयत् ॥ ४५ ॥ सेति ॥ सा धात्री शयानं बालमुपव्रज्य उद्गते तारके कनीनिके ययोस्ते लोचने यस्य तथाभूतं प्राणादिभिस्त्यक्तं रहितं च दृष्ट्वा हतास्मीति ब्रुवाणा भुवि अपतत् ॥ ४६ ॥ तस्या इति ॥ कराभ्यामुरो घ्नन्त्यास्तस्याः नुमार्षः । धात्र्यास्तद्भृशातुरमतिव्याकुलमुच्चकैः स्वरमाकर्ण्य राज्ञी त्वयात्मजान्तिकं प्रविश्य सहसा आकस्मिकेन बालं सुतं मृतं ददर्श ॥ ४७ ॥

पपातेत्यर्द्धम्॥ दृष्ट्वा च भूमौ पपात तथा विभ्रष्टाः विकीर्णाः शिरोरुहा अम्बरे च यस्याः सा परिवृद्धया शुचा शोकेन मुमोह मुमूर्च्छ ॥४८॥ तत इति॥ ततश्च हे नृप अन्तःपुरवर्तिनो नरा नार्यश्च सर्वेऽपि जना रोदनं निशम्य तुल्यं व्यसनं येषां ते तत्रागत्य रुरुदुःतथा कृतमागःविषदानं याभिस्ताश्च सपत्न्योऽपि व्यलीकं मिथ्यैव सुदुःखितास्तत्रागत्य रुरुदुः ॥ ४९ ॥ श्रुत्वेति युग्मम् ॥ अलक्षितोऽन्तको मृत्युहेतुर्यस्य तं पुत्रं मृतं श्रुत्वा विनष्टा दृष्टिर्यस्य सः स्नेहस्य योऽनुबन्धः निरन्तरानुवृत्तिस्तेन एधितया शुचा पथि भृशं प्रपतन् स्खलन् च स चित्रकेतुस्तत्रागत्य विमूर्च्छितः सन् अनुगताः प्रकृतयोऽमात्यादयो यस्य स द्विजैर्वृतश्च विस्रस्तशिरोरुहाम्बरः दीर्घं श्वसंश्च मृतस्य बालस्य पादमूले पपात । अमात्यादयः ब्राह्मणादयश्चापि पेतुरित्यर्थः । ततश्च मूर्च्छागमेऽपि बाष्पकलाभिरश्रुबिन्दुभिरुपरोधतः संवृतत्वेन निरुद्धः कण्ठो यस्य सः किंचिद्भाषितुं न शशाक ॥ ५० ॥ ५१ ॥ पतिमिति ॥ उरुशुचार्पितं बहुशोकेन व्याप्तं पतिं निरीक्ष्य एकमेव सन्ततिरूपं बालं सुतं च मृतं निरीक्ष्य तदा राज्ञी अन्तःपुरजनस्य प्रकृते-

पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा ॥४८॥ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम्॥आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः॥४९॥श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन् स्खलन् पथि॥स्नेहानुबन्धैधितया शुचा भृशं विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः॥ ५०॥ पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः ॥ दीर्घं श्वसन् बाष्पकलोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम् ॥५१॥ पतिं निरीक्ष्योरुशुचार्पितं तदा मृतं च बालं सुतमेकसंततिम्॥ जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा ॥ ५२ ॥ स्तनद्वयं कुङ्कुमगन्धमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः ॥ विकीर्य केशान्विगलत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम् ॥५३॥ अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे॥ परेऽनुजीवत्यपरस्य या मृतिर्विपर्ययश्चेत्त्वमसि ध्रुवः परः॥५४॥न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः॥यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि॥५५॥

श्च, त्यादेर्हृद्रुजं शोकं दधाना पुष्यन्ती सती चित्रधा विललाप । धा आर्षः ॥ ५२ ॥ स्तनेति ॥ विगलन्त्यः स्रजो येभ्यस्तान् केशान् विकीर्य साञ्जनैः बाष्पबिन्दुभिः कुङ्कुमगन्धमण्डितं स्तनद्वयं निषिञ्चती सुस्वरं चित्रं च यथा भवति तथा कुररी पक्षिणीव रुदती च सती सुतं शुशोच ॥ ५३ ॥ अहो इति ॥ हे विधातः नु अहो यस्तु त्वं परे वृद्धे पितरि जीवति सत्यपि अपरस्य बालस्य या मृतिरित्येवरूपमात्मसृष्टेरप्रतिरूपं प्रतिकूलं यथा स्यात्तथा ईहसे चेष्टसे अतः सर्ववृद्धोऽपि अतीव बालिशो महामूर्ख एवासि तदा हि वृद्धस्य सृष्टिसामर्थ्याभावे बाले च मृते तव सृष्टेर्लोप एव स्यात् । यदि च विपर्ययश्चेत् संप्रति स्वसृष्टेर्विपरीतोऽस्मीति मन्यसे चेत्तर्हि त्वमेव ध्रुवो निश्चितः परः शत्रुरसि न तु कृपालुः स्वविरुद्धं कृत्वापि अस्माकं कष्टदानात् ॥ ५४ ॥ ननु जीवकर्मानुसारेण जन्मादि कुर्वतो मम नो दोष इत्याशङ्क्याहुः—न हीति ॥ प्रथमं पुत्रो

जायते ततः पिता म्रियते ततः पुत्रो म्रियते इति क्रमो नास्ति कर्माधीनत्वात् इति चेत्तर्ह्यात्मकर्मभिरेव शरीरिणां तज्जन्मादिकमस्तु त्वया किं कृत्यमस्तीति शेषः । ननु मां विना जडैः कर्मभिः किं सिद्ध्येदिति चेत्सत्यं त्वयैव सिद्ध्यन्तु तथापि निजसर्गवृद्धये त्वया यः स्नेहपाशः कृतस्तमिमं स्वयमेव पुत्रादिमारणेन विवृश्चसि छिनत्सि स्नेहे एतादृशं दुःखं दृष्ट्वा पुत्रादिषु कोऽपि स्नेहं न करिष्यति स्नेहाकरणे पुत्रादयः कथं जीविष्यन्तीति सृष्टिलोपात् त्वं मूर्ख एवासि । यद्वा । लोडर्थे लट् छिन्धीत्यर्थः । स्नेह एव सुख-दुःखयोर्हेतुः स्नेहाभावे पुत्रो जायतां म्रियतां वा सुखदुःखे तु नैव स्याताम् इति भावः । अतस्त्वं मूर्ख एव ॥५५॥ त्वमिति ॥ हे तात कृपणां दीनां त्वच्छोकेन राज्ञि मृते रक्षकहीनां मां त्यक्तुं नार्हसि तव शोकेन तप्तं स्वपितरं च विचक्ष्व पश्येति तमपि त्यक्तुं नार्हसीत्यनुषङ्गः । भवता निमित्तेन अप्रजदुस्तरमप्रजानां । दुस्तरम् असिजभाव आर्षः । यत् ध्वान्तं नरकदुःखं तदञ्जः अनायासेनैव वयं तरेम अतः अकरुणेन निर्दयेन यमेन सह दूरं न याहि मा गच्छ ॥ ५६ ॥ उत्तिष्ठेति ॥ हे तात हे नृपनन्दन त्वं चिरं बहुकालं सुप्त इदानीमुत्तिष्ठते वयस्या इमे शिशवो बालाः त्वां विहर्तुमाह्वयन्ति आकारयन्ति हि यस्माच्चिरं सुप्तोऽतो भवांश्चापि अशनया क्षुधया परीतो व्याप्तःअतोऽन्नं

त्वं तात नार्हसि च मां कृपणामनाथां त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम् ॥ अञ्जस्तरेम भवताऽप्रजदुस्तरं यत् ध्वान्तं न याह्यकरुणेन यमेन दूरम् ॥५६॥ उत्तिष्ठ तात त इमे शिशवो वयस्यास्त्वामाह्वयन्ति नृपनन्दन संविहर्तुम्॥ सुप्तश्चिरं ह्यशनया च भवान्परीतो भुङ्क्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ॥५७॥ नाहं तनूज ददृशे हतमङ्गला ते मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ॥ किं वा गतोऽस्य पुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि कला गिरस्ते॥५८॥ श्रीशुक उवाच ॥ विलपन्त्या मृतं पुत्रमिति चित्रविलापनैः॥ चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह ॥५९॥ तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः॥ रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ६० ॥

भुङ्क्ष्व स्तनं च पिब स्वकानां त्वत्संबन्धिनां नोऽस्माकं शुचः शोकान् हर अपनय अशनायाशब्दस्थानेऽशनाशब्द आर्षः भावे क्विपि अल्लोपयलोपाभ्यां वा कथंचित्साध्यम् ॥५७॥ नाहमिति ॥ हे तनुज हे पुत्र हतमङ्गला नष्टपूण्याहं प्रथमं त्वत्पार्श्वमागता सती मुग्धमल्पं स्मितं यस्मिंस्तत् मुदितं वीक्षणं यस्मिंस्तत् ते तवाननाब्जं मुखकमलमहं न ददृशे न दृष्टवत्यस्मि । तद्भावः इदानीमपि कलामधुरास्ते गिरो न शृणोमीति अतः अघृणेन निर्दयेन यमेन नीतस्त्वमपुनरन्वयं पुनरागमनं यथा न भवति तथाऽन्यलोकं यमलोकं गतोऽसि किं वा इति पादपूरणे । यद्वा । अहं तवाननाब्जं न ददृशे यत्त्वं न जागर्षि तेन किं वाऽन्यलोकं गतोऽसि तव को दोषः ! यतः अघृणेन यमेन नीतः अत एव ते कला गिरः न शृणोमि ॥५८॥ विलपन्त्या इति ॥ इत्येवं चित्रविलापनैः मृतपुत्रं विलपन्त्यां सत्यां तच्छ्रुत्वा चित्रकेतुर्भृशं ततोऽनो मुक्तकण्ठः सन् रुरोद । यद्वा॥ विलपन्त्या तया सहेति तृतीयान्तम्॥५९॥ तयोरिति॥ तयोर्दम्पत्योरेवं विलपतोः सतोस्तदनुव्रताः अमात्यादयोऽपि सर्वे नरा नार्यश्च रुरुदुः तदा चित्रकेतोर्मृततुल्यत्वात् सर्वमेव नगरमचेतनं नष्टसंज्ञमराजकमिवासीत् ॥ ६० ॥

एवमिति ॥ एवं सर्वमेव जनं कश्मलं मोहमापन्नं प्राप्तमत एव नष्टसंज्ञं देहाद्यनुसन्धानरहितमनायकं प्रतिबोधकरहितं ज्ञात्वा सनारदः नारदेन सहितोऽङ्गिरा नाम मुनिराजगाम ॥ ६१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य व्यधाट्टीकां चतुर्दशे ॥ १४ ॥ पञ्चदशे चित्रकेतोर्नारदेनाङ्गिरो युजा ॥ शोकशान्तिः कृता तत्र श्लोका विंशतिरष्ट च ॥ पञ्चोवाचेति पादोना ऊनत्रिंशदनुष्टुभः ॥ १५ ॥ ऊचतुरिति ॥ शोकेनाभिभूतमचेतनीकृतमत एव मृतकोपमं मृतकस्य शवस्य उपान्ते समीपे पतितं राजानं सदुक्तिभिः यथार्थहितप्रियवाक्यैर्बोधयन्तौ नारदाङ्गिरसावूचतुः ॥ १ ॥ कोऽयमिति ॥ हे राजन् भवान् यमनुशोचति सोऽयं सृष्टौ पुरा पूर्वजन्मनि इदानीमत्र जन्मनि अतः परं भविष्यज्जन्मनि च कः किं संबन्धवान् स्यात् एवं पूर्वजन्मादिषु त्वं चास्य कतमोऽसि ।अयं भावः । यः पुरा जन्मनि पिता सोऽत्र जन्मन्यपि पितैवेति नियमो नास्त्येव अतः कदाचिदयं पिता त्वं पुत्रः कदाचिदन्यथापीति तवायं कस्त्वं चास्य कः इत्यनिश्चितमेव ॥ २ ॥ यथेति ॥ यथा स्रोतसः प्रवाहस्य वेगेन वालुकाः

एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् ॥ ज्ञात्वाङ्गिरा नाम मुनिराजगाम सनारदः ॥ ६१ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ ॥ ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम् ॥ शोकाभिभूतं राजानं बोधयन्तौ सदुक्तिभिः ॥ १ ॥ कोऽयं स्यात्तव राजेन्द्र भवान्यमनुशोचति ॥ त्वं चास्य कतमः सृष्टौ पुरेदानीमतः परम् ॥ २ ॥ यथा प्रयान्ति संयान्ति स्रोतोवेगेन वालुकाः ॥ संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥ ३ ॥ यथा धानासु वै धाना भवन्ति न भवन्ति च ॥ एवं भूतेषु भूतानि चोदितानीशमायया ॥ ४ ॥ वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः ॥ जन्ममृत्योर्यथा पश्चात्प्राङ् नैवमधुनापि भोः ॥ ५ ॥ भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः ॥ आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ॥ ६ ॥

प्रयान्ति वियुज्यन्ते तथैव कालवेगेन देहिनो जीवा अपि संयुज्यन्ते वियुज्यन्ते च ॥ ३ ॥ यथेति ॥ यथा धानासु यवादिबीजेषु धानाः यवादिबीजान्तराणि क्वचित्कदाचिद्भवन्ति क्वचित्कदाचिन्न भवन्ति च नोत्पद्यन्ते च उत्पन्ना अपि नश्यन्ति च नतु भवन्त्येव तिष्ठन्त्येवेति वा नियमः । एवमीशस्य मायया इच्छया चोदितानि प्रेरितानि भूतानि पुत्रादिरूपाणि भूतेषु पित्रादिषु भवन्ति न भवन्ति भूतान्यपि नश्यन्ति अतः शोको न कार्यः । अत्र श्लेषेण यथा धानासु भ्रष्टयवेषु धाना न भवन्ति तथा पुत्रजनकादृष्टरहितेषु त्वादृशेषु भूतान्यपत्यानि न भवन्ति किन्तु ईश हे राजन् मायया प्रेरिता भवन्ति चेत्यहमङ्गिरा एव त्वत्प्रबोधार्थं मायया त्वत्पुत्रोऽभूवमिति भावः ॥ ४ ॥ वयमिति ॥ भो राजन् तुल्यकालाः वर्त्तमानकालभवाः वयं च त्वं च ये चेमेऽन्ये चराचरास्ते यथा जन्मनः प्राक् मृत्योः पश्चाच्च न सन्ति एवमधुना वर्त्तमानकालेऽपि न सन्ति आद्यन्तयोरसत्वात्स्वप्नवत् ॥ ५ ॥ असत्वे कथं प्रतीतिः कथं वाहमस्य जनक इत्यभिमानस्तत्राहतुः—भूतैरिति ॥ अनपेक्षः प्रयोजनरहितोऽपि अजः अनादिः भूतेशः

जगदीश्वरः बालवल्लीलया आत्मसृष्टैरत एवास्वतन्त्रैः स्ववशीभूतैः पित्रादिभिर्भूतानि पुत्रादीन् सृजति राजाद्यैः अवति सर्पाद्यैः हन्ति च ईश्वरेण मायया सृष्टत्वात् प्रतीति-निमित्तमात्रत्वेनैव भूतानामयमभिमानः ईश्वरस्य च सृष्ट्यादेः प्रयोजनाभावेऽपि स्वभावात् बालवल्लीलया स करोति इति भावः ॥ ६ ॥ देहेनेति ॥ हे राजन् पितुर्देहेन संयु-क्तान्मातुर्देहात् देहिनः पुत्रस्य देहोऽभिजायते प्रादुर्भवति । तत्र दृष्टान्तः । यथा बीजादेव बीजान्तरं जायते तथा देही जीवस्तु अर्थ इव भूम्यादिरिव शाश्वत एव अतो जन्मादिव्यवहारोऽपि देहानामेव न त्वात्मनः ॥ ७ ॥ देहेति ॥ अयं देहदेहिनोर्विभागो भेदः पुरा पुरातनः अनादिरित्यर्थः । अविवेककृतोऽज्ञानकल्पितः । तत्र दृष्टान्तमाह । जातिर्गोत्वादि सामान्यं व्यक्तिर्गवादिपिण्डविशेषस्तयोर्विभागो यथा वस्तुनि सन्मात्रे कल्पितः परस्परापेक्षसिद्धत्वेन भेदेन निरूपयितुमशक्यत्वात् ॥ ८ ॥ एवमिति ॥ एवं

देहेन देहिनो राजन्देहाद्देहोभिजायते ॥ बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ॥ ७ ॥ देहदेहिविभागोऽयमविवेककृतः पुरा ॥ जातिव्यक्तिवि-भागोऽयं यथा वस्तुनि कल्पितः ॥ ८ ॥ श्रीशुक उवाच ॥ एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः ॥ प्रमृज्य पाणिना वक्त्रमाधिम्ला-नमभाषत ॥ ९ ॥ राजोवाच ॥ कौ युवां ज्ञानसंपन्नौ महिष्ठौ च महीयसाम् ॥ अवधूतेन वेषेण गूढाविह समागतौ ॥ १० ॥ चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ॥ मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ॥ ११ ॥ कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः ॥ अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ॥ १२ ॥ वसिष्ठो भगवान् रामः कपिलो बादरायणिः ॥ दुर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽरुणिः ॥१३॥ रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः ॥ ऋषिर्वेदशिरा बोध्यो मुनिः पञ्चशिरास्तथा ॥१४ ॥ हिरण्यनाभः कौशल्यः श्रुतदेव ऋतध्वजः ॥ एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ॥ १५ ॥ तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू ॥ अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम् ॥१६॥ अङ्गिरा उवाच ॥ अहं ते पुत्रकामस्य पुत्रदोऽस्म्यङ्गिरा नृप ॥ एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः ॥१७॥ इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे ॥ अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥१८॥ अनुग्रहाय भवतः प्राप्तावावामिह प्रभो ॥ ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥१९॥

द्विजोक्तिभिः आश्वासितो राजा चित्रकेतुः आधिना म्लानं वक्त्रं पाणिना प्रमृज्य अभाषत ॥ ९ ॥ काविति ॥ स्पष्टम् ॥ १० ॥ चरन्तीति ॥ ग्राम्ये विषयसुखे इष्टबुद्धि-र्येषां तेषां मादृशां मूर्खाणां बोधाय भगवत्प्रियाः उन्मत्तस्येव लिङ्गं येषां ते ब्राह्मणाः ब्रह्मविदोऽवनौ पृथिव्यां कामं यथेष्टं चरन्ति ॥ ११ ॥ कुमार इति चतुष्कम् ॥ स्पष्टम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ तस्मादिति ॥ युवां प्रभू प्रबोधे समर्थौ स्तः अतो ग्राम्यपशोरिव मूढधियः अन्धे तमसि महामोहे मग्नस्य मम तत उद्धारार्थं ज्ञानरूपः प्रदीप उदीर्यतां युवाभ्यां प्रवर्त्यताम् ॥ १६ ॥ अहमिति ॥ स्पष्टम् ॥ १७ ॥ इत्थमिति युग्मम् ॥ हे प्रभो इत्थम् अतदर्हं दुःखानुभवायोग्यं महापुरुषगोचरं भगवद्भक्तं पुत्रशोकेन

दुस्तरे तमसि मग्नं त्वामनुस्मृत्य ज्ञात्वा ब्रह्मण्यो भगवद्भक्तः अवसीदितुं दुःखमनुभवितुं सीदभाव आर्षः। नार्हति इति विचार्य भवतोऽनुग्रहाय आवामिह प्राप्तौ ॥१८॥१९॥ तदैवेति ॥ यदाहं पूर्वं तव गृहमागतस्तदैव ते तुभ्यं परमुत्कृष्टं बन्धविमोचकं ज्ञानं ददामि अदास्यं परं तु तदा तवान्याभिनिवेशं पुत्राग्रहं ज्ञात्वा पुत्रमेव ददामि अददाम् उभयत्र कालव्यत्ययाल्लट्। क्वापि ददाम्यहमित्यत्र ददावहमित्यपि पाठः ॥२०॥ अधुनेत्यर्धम् ॥ अधुना भवता एव पुत्रिणां तापः अनुभूयते॥२१॥एवमिति त्रयम् ॥ हे शूरसेनेश एवं दारादयः सर्वेऽपि शोकमोहादिप्रदाः आगमापायित्वेन गन्धर्वनगरप्रख्याः गन्धर्वनगरं ह्यकस्मादेव क्वचिदायाति याति च स्वप्नश्च माया च मनोरथश्च तैस्तुल्याः मिथ्याभूताः अत एव मनोभवाः मनःकल्पिताः अर्थेन परमार्थतया विनापि तथात्वेन दृश्यमानाः अत एव क्षणान्तरे न दृश्यन्ते अतो मिथ्याभूताः ॥ २२ ॥ २३ ॥ २४ ॥ नन्वेते कर्मभिः कृता इति मीमांसका मन्यन्ते तत्राह—कर्मभिरित्यर्धम् ॥ कर्मभिः प्राचीनकर्मवासनाभिः विषयान् ध्यायतः पुंसो मनस एव निमित्तात् नानाकर्माणि अभवन् । कर्म-

तदैव ते परं ज्ञानं ददामि गृहमागतः ॥ ज्ञात्वान्याऽभिनिवेशं ते पुत्रमेव ददावहम्॥२०॥ अधुना पुत्रिणां तापो भवतैवानुभूयते॥२१॥एवं दारा गृहा रायो विविधैश्वर्यसंपदः ॥ शब्दादयश्च विषयाश्चला राजविभूतयः ॥ २२ ॥ मही राज्यं बलं कोशो भृत्यामात्याः सुहृज्जनाः ॥ सर्वेऽपि शूरसेनेश शोकमोहभयार्तिदाः॥२३॥गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः॥२४॥ कर्मभिर्ध्यायतो नानाकर्माणि मनसोऽभवन् ॥ २५ ॥ अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः ॥ देहिनो विविधक्लेशसंतापकृदुदाहृतः ॥ २६ ॥ तस्मात्स्व-स्थेन मनसा विमृश्य गतिमात्मनः ॥ द्वैते ध्रुवार्थविश्रम्भं त्यजोपशममाविश ॥ २७ ॥ नारद उवाच ॥ एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम ॥ यां धारयन्सप्तरात्राद्द्रष्टा सङ्कर्षणं प्रभुम् ॥ २८ ॥

भिर्ध्यायत इति पाठे कर्म ईप्सिततममभिध्यायत इत्यर्थः । कर्मणो मनोभवत्वात्तत्साध्या अर्था अपि तथेति भावः ॥ २५ ॥ अयमिति ॥ हीत्यवधारणे । अयं द्रव्याणि महाभूतानि ज्ञानानि ज्ञानेन्द्रियाणि क्रियाः कर्मेन्द्रियाणि तदात्मकः अधिभूताधिदैवाध्यात्मरूपो देह एव देहिनां देहेऽहमित्यभिमानवतो देहिनो जीवस्य विविधान् क्लेशान् संतापांश्च करोतीति तथा उदाहृतः तत्त्वदर्शिभिर्निरूपितः ॥ २६ ॥ तस्मादिति ॥ तस्मात्स्वच्छेनाव्यग्रेण सावधानेन स्वस्थेनेत्यपि पाठः । मनसा आत्मनो गतिं तत्त्वं विमृश्य द्वैते प्रपञ्चे ध्रुवोऽयमर्थ इति विश्रम्भं विश्वासं प्रणयं वा त्यज ततश्चोपशममुपरतिमाविश आश्रय ॥ २७॥ तत्त्वमुपदिश्य अङ्गिरसि निवृत्ते परमेश्वरप्रसादं विना तत्त्वं न प्राप्यत इति तत्प्रसादाय मन्त्रविद्यां नारदो दिशति—एतामिति ॥ एतां ॐ नमस्तुभ्यमित्यादिपरमपरमेष्ठिन्नित्यन्तां वक्ष्यमाणां मन्त्ररूपामुपनिषदम् उपनिषीदति परं श्रेयोऽस्यां ताम् मे मत्तः प्रयतः मृतकक्रियां समाप्य विशुद्धः सावधानश्च सन् प्रतीच्छ गृहाण यां विद्यां धारयन् भवान् सप्तरात्रात् सङ्कर्षणं प्रभुं द्रष्टा द्रक्ष्यति ॥ २८ ॥

यत्पादेति ॥ हे नरेन्द्र यस्य भगवतः सङ्कर्षणस्य पादमूलमुपसृत्य प्राप्य पूर्वे शर्वादयो महादेवादय इमं द्वितयं द्वैतात्मकं भ्रमं विसृज्य त्यक्त्वा सद्यः अतुलं च तदनधिकं च समानाधिकशून्यमत एव परं सर्वोत्कृष्टं तदीयं महत्त्वं महिमानं प्रापुः । भवानपि परं तत्फलं नचिरात् शीघ्रमेव उपैति उपैष्यति ॥२९॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य टीकां पञ्चदशे व्यधात् ॥ १५ ॥ षोडशे नारदश्चित्रकेतवे शेषतोषिणीम् ॥ महाविद्यामदात्तत्र श्लोकाः सार्द्धास्तु पञ्चषट् ॥ उवाचनवकं सार्द्धाश्चतुःशैलाः" अनुष्टुभः ॥१६॥ अथेति ॥ हे राजन् अथ तदा तत्पुत्रमुखेनैव पितृपुत्रादिसंबन्धो मिथ्येति दर्शयितुं देवऋषिर्नारदः सम्परेतं मृतमपि नृपात्मजमनुशोचतां ज्ञातीनां द्वितीयार्थे षष्ठ्यौ । योगबलेन दर्शयित्वा जीवात्मन्नित्याद्युवाच ॥१॥ जीवेति ॥ हे जीवात्मन् त्वत्कृतया शुचा शोकेन भृशं व्याप्तांस्ते पित्रादीन् पश्य ते भद्रं भवतु ॥ २ ॥ कलेवरमिति ॥ अपमृत्युना मृतत्वाच्छेषमवशिष्टमायुरस्ति चेत्तदा स्वं कलेवरमाविश्य सुहृद्वृतः सन् पित्रा प्रत्तान् दत्तान् भोगान् भुङ्क्ष्व जीवतैव पित्रा प्रत्तं नृपासनं चाधि-

यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ॥ सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिरादुपैति ॥२९॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे पुत्रशोकातुरचित्रकेतोरङ्गिरोज्ञानदानवर्णनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ अथ देवऋषी राजन् संपरेतं नृपात्मजम् ॥ दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम् ॥ १ ॥ नारद उवाच ॥ जीवात्मन्पश्य भद्रं ते मातरं पितरं च ते ॥ सुहृदो बान्धवांस्तप्ताञ्छुचा त्वत्कृतया भृशम् ॥ २ ॥ कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः ॥ भुङ्क्ष्व भोगान्पितृप्रत्तानधितिष्ठ नृपासनम् ॥ ३ ॥ जीव उवाच ॥ कस्मिञ्जन्मन्यमी मह्यं पितरो मातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ॥ ४ ॥ बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ॥ सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः ॥ ५ ॥ यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः ॥ पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु ॥ ६ ॥

तिष्ठ वस्तुतस्तस्यायुर्नास्त्येव मायिकत्वात् ॥ ३ ॥ जीव उवाचेति ॥ तदेव कलेवरं योगबलेन प्रविष्ट ऋषिर्जीवन्निव जीव इत्यर्थः । कस्मिन्निति । स्वकर्मभिर्देवतिर्यङ्नृयोनिषु भ्राम्यमाणस्य मित्त्वेऽपि ह्रस्वाभाव आर्षः । मह्यं मम कस्मिन् जन्मनि अमी पितरो मातरोऽभवन् ॥ ४ ॥ मयि मृते पुत्रदृष्ट्या शोकश्चेत् शत्रुदृष्ट्या हर्षः किं न क्रियते इत्याशयेन संबन्धस्यानि-यतत्वमाह—बन्ध्विति ॥ हि यतः बन्धवो विवाहादिभिः संबन्धिनः ज्ञातयः सपिण्डाः अरयो घातका मित्राणि उपकारकाः मध्यस्था व्यवहारसंबन्धिनोऽपि पक्षपातरहिताः विद्विषः द्रव्यादिहरणेन उत्कर्षासहनेन वा विकृतचित्ताः उदासीना उपेक्षकाः सर्व एव प्राणिनः सर्वेषामेव मिथः परस्परं क्रमशः क्रमेण भवन्ति ॥ ५ ॥ यथेति ॥ पण्यानिक्रयविक्रयाद्यर्हाणि हेमादीनि वस्तूनि यथा ततस्ततः सर्वत्र नरेषु व्यवहर्तृषु पर्यटन्ति एवं जीवोऽपि कर्तृषु पितृषु योनिषु मातृषु भ्रमति ॥ ६ ॥

एकस्मिन्नपि जन्मनि संबन्धस्यानित्यत्वमाह—नित्यस्येति ॥ नित्यस्य अविनष्टस्याप्यर्थस्य वस्तुनः संबन्धो नृषु अनित्यो दृश्यते। हि यस्मात् यावत्कालं यस्य वस्तुनो यस्मिन्पुरुषे संबन्धो भवति तावत्कालमेव तस्य पुरुषस्य तत्र वस्तुनि ममत्वं भवति विक्रयाद्यनन्तरं तत्र ममत्वाभावात्संबन्धोऽपि निवृत्त इति निश्चय इत्यर्थः ॥७॥ एवमिति ॥ एवं योनिगतः पित्रादिसंबन्धं प्राप्तो जीवोऽपि नित्यः निरहङ्कृतः देहादिष्वहंभावायोग्यश्च स यावत्कालं यत्र पित्रादौ संबन्धिन्युपलभ्येत कर्मवशेन वर्तेत तावदेव तस्य पित्रादेस्तत्तस्मिन् पुत्रादौ स्वत्वं न तु मरणादुत्तरकालमपि तथा चेदानीं संबन्धस्य निवृत्तत्वादनुचित एव मदर्थोऽयं शोकः ॥८॥ एष इति ॥ एष आत्मा नित्यः अव्ययः अपक्षयशून्यः सूक्ष्मः अव्यक्तः एष च सर्वस्य देहादेराश्रयः स्वदृक् स्वप्रकाशः प्रभुः आत्मनो मायाया गुणैः सत्वादिभिरात्मानमेव विश्वात्मकं सृजते सृजति। तङार्षः। "तदात्मानं स्वयमकुरुत" इति श्रुतेः। उपादानं कारणत्वात्सर्वाश्रयः जीवस्य वस्तुतो ब्रह्मत्वात् ब्रह्मण एव चिच्छक्तिविशिष्टस्येश्वरत्वेन स्रष्टृत्वात् जीवः सृजतीत्युक्तं। यद्वा। स्वकर्मद्वारा सृष्टिनिमि-

**नित्यस्यार्थस्य संबन्धो ह्यनित्यो दृश्यते नृषु ॥ यावद्यस्य हि संबन्धो ममत्वं तावदेव हि ॥ ७ ॥ एवं योनिगतो जीवः स नित्यो निरहङ्कृतः ॥ यावद्यत्रोपलभ्येत तावत्स्वत्वं हि तस्य तत् ॥८॥ एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥ ९ ॥ न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः ॥१०॥ नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् ॥ उदासीनवदासीनः परावरदृगीश्वरः॥११॥ श्रीशुक उवाच॥इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा ॥ विस्मिता मुमुचुः शोकं छित्त्वात्मस्नेहशृङ्खलाम् ॥ १२ ॥ निर्हृत्य ज्ञातयो देहं तथा कृत्वोचिताः क्रियाः ॥ तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ॥ १३ ॥**

त्त्वेन स्रष्टृत्वं भोग्यस्य च सर्वभोक्त्राश्रयत्वात् सर्वाश्रयत्वं चोक्तम्॥९॥ सुहृद्वृत इत्युक्तं तत्राह—न हीति ॥ अस्य कश्चिदप्यतिप्रियो न भवति नाप्यस्य कश्चिदप्रियः एवमस्य स्वः स्वीयः परो वा नास्ति अयमेक एव सुहृदादिसङ्गरहितः गुणदोषयोर्धर्माधर्मयोर्हिताहितयोर्वा कर्तॄणां मित्रादीनां याः सर्वा धियः विचित्रा बुद्धयस्तासां द्रष्टा साक्षी ॥१०॥ भुङ्क्ष्व भोगानित्युक्तं तत्राह—नादत्त इति ॥ आत्मा स्वकर्मणापि गुणं दोषं पुण्यं पापं च नादत्ते नच क्रियाफलं सुखदुःखादिकमादत्ते। परावरे कारणकार्ये पश्यति तथाविध ईश्वरः स्वतन्त्रोऽयम् उदासीनवदासीनः स्वरूपस्थ एव भवति। एवंभूतस्य मम युष्माकं च संबन्धाभावाच्छोको न कार्य इति भावः ॥ ११ ॥ इतीति ॥ इत्येवमुदीर्य उक्त्वा जीवो यदा गतस्तदा ते पूर्वोक्ताः चित्रकेत्वादयस्तस्य बालस्य ज्ञातयस्तद्वचनेन विस्मिताः सन्त आत्मनः स्वस्य स्नेहरूपां शृङ्खलां छित्वा शोकं मुमुचुः ॥ १२ ॥ निर्हृत्येति ॥ ज्ञातयः सपिण्डाः चित्रकेत्वादयः ज्ञातेः सपिण्डस्य मृतस्य बालस्य देहं निर्हृत्य दग्ध्वा तदुचिताः क्रियाः श्राद्धतर्पणादिरूपाश्च कृत्वा शोकमोहभयार्तिदं दुस्त्यजमपि स्नेहं

तत्यजुः ॥ १३ ॥ बालेति सार्द्धम् ॥ हे महाराज बालहत्यया हतप्रभाः स्वदुष्टकर्मणा व्रीडिताश्च द्विजेनाङ्गिरसा भाषितं पुत्रादीनां दुःखहेतुत्वं स्मरन्त्यः बालघ्न्यो विषदात्र्योऽपि ब्राह्मणैरङ्गिरआदिभिर्यन्निरूपित्तं निर्णीयोक्तं तद् बालहत्याया व्रतं प्रायश्चित्तं यमुनायां चेरुः कृतवत्यः ॥१४॥ स इति ॥ इत्थं द्विजोक्तिभिः नारदाङ्गिरोवाक्यैः प्रतिबुद्धो ज्ञातः आत्मा येन स अतिधीरः चित्रकेतुर्गृहान्धकूपान्निष्क्रान्तः निर्गतः यथा निबिडतमात् सरःपङ्कात् द्विपो हस्ती निःसरेत्तद्वदिति ॥ १५ ॥ कालिन्द्यामिति ॥ विधिवत् कालिन्द्यां यमुनायां स्नात्वा कृताः पुण्याः दुरितनिवर्त्तिकाः जलक्रियाः देवर्षिपितृतर्पणाद्याः येन स मौनेन सह संयतप्राणो वशीकृतेन्द्रियः चित्रकेतुर्ब्रह्मपुत्रौ नारदाङ्गिरसाववन्दत विद्याग्रहणाय प्रणनाम ॥ १६ ॥ अथेति ॥ अथ प्रीतो भगवान् नारदः प्रपन्नाय भक्ताय प्रयतात्मने वशीकृतचित्ताय तस्मै एतामुच्यमानां विद्यामुवाच ॥ १७ ॥ नम इति ॥ नमो धीमहि नमस्कुर्मो ध्यायेम च वासुदेवादीनां चित्तबुद्धिमनोहङ्कारेषु उपास्यत्वं स्पष्टं शेषम् ॥ १८ ॥ नम इति ॥ निवृत्ता द्वैतदृष्टिर्यस्मात्तस्मै । स्पष्टं

**बालघ्न्यो व्रीडितास्तत्र बालहत्याहतप्रभाः ॥ बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ॥ यमुनायां महाराज स्मरन्त्यो द्विजभाषितम् ॥ १४ ॥ स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ॥ गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः ॥१५॥ कालिन्द्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः॥ मौनेन संयतप्राणो ब्रह्मपुत्राववन्दत ॥ १६ ॥ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ॥ भगवान्नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥ ॐ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ १८ ॥ नमो विज्ञानमात्राय परमानन्दमूर्तये ॥ आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये ॥ १९ ॥ आत्मानन्दानुभूत्यैव न्यस्तशक्त्यूर्मये नमः ॥ हृषीकेशाय महते नमस्ते विश्वमूर्तये ॥ २० ॥ वचस्युपरते प्राप्य य एको मनसा सह ॥ अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ॥ मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥ यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः ॥ अन्तर्बहिश्च विततं व्योमवत्तं नतोऽस्म्यहम् ॥ २३ ॥**

शेषम् ॥ १९ ॥ आत्मेति ॥ आत्मनः स्वस्य स्वरूपभूतानन्दस्यानुभवेनैव न्यस्ताः निरस्ताः शक्त्यूर्मयः मायानिमित्ता रागद्वेषादयो येन तस्मै नमः । स्पष्टं शेषम् ॥ २० ॥ वचसीति ॥ मनसा सह वचसि वचआदीन्द्रियेषु उपरतेषु सत्सु यः अनामरूपः चिन्मात्रः सदसतः कार्यकारणयोः कारणम् एकः यः प्राप्यो भवति स नोऽस्मान् अव्यात् संसारभयाद्रक्षतु ॥ २१ ॥ यस्मिन्निति ॥ इदं कार्यकारणात्मकं विश्वं यतो जायते जातं च यस्मिन् तिष्ठति अप्येति लीयते च मृन्मयेषु घटादिषु मृज्जातिर्मृन्मात्रमिव यत्सर्वानुस्यूतं तस्मै ते ब्रह्मणे नमः ॥ २२ ॥ यदिति ॥ यद्ब्रह्म व्योमवन्निर्लेपतया अन्तर्बहिश्च विततं व्याप्तमपि असवः प्राणाः कर्मेन्द्रियाणि क्रियाशक्त्या न स्पृशन्ति मनोबुद्धिः ज्ञानेन्द्रियाणि च ज्ञानशक्त्या न विदुस्तदहं नतोऽस्मि ॥ २३ ॥

देहेति ॥ अमी देहादयो यदंशविद्धाः यस्य चैतन्यांशेनाविष्टाः सन्तः जाग्रति स्वप्ने च । कर्मसु स्वस्वविषयेषु प्रचरन्ति अन्यदा सुषुप्तिमूर्च्छादौ तु तदंशवेधाभावात्तथा नैव प्रचरन्ति यथा अप्रतप्तं लोहं न दहति अतो यथा लोहमग्निशक्त्यैव दाहकं सदग्निं विना न दहति एवं ब्रह्मगतज्ञानक्रियाशक्तिभ्यां प्रवर्त्तमाना देहादयस्तन्न स्पृशन्ति न विदुश्चेति भावः । जीवस्तर्हि द्रष्टृत्वाज्जानातु नेत्याह । स्थानेषु जाग्रदादिषु द्रष्ट्रपदेशं द्रष्टृसंज्ञां तदेवैति प्राप्नोति । "नान्यो जीवो नामास्ति नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतेः । यद्वा । द्रष्ट्रपदेशं द्रष्टृसंज्ञं जीवमपि तदेव एति जानाति नतु जीवस्तज्जानातीत्यर्थः ॥ २४ ॥ ओमिति ॥ महाविभूतिर्लक्ष्मीः तत्पतये सकलेत्यादिसंबोधनं सकलाः ये सात्वतपरिवृढाः भक्तश्रेष्ठास्तेषां निकरस्य समूहस्य करकमलानां कुड्मलैर्मुकुलैरुपलालितं सेवितं चरणारविन्दयुगलं यस्येति परमश्रेष्ठ परमेष्ठिन् सर्वेश्वर स्पष्टं शेषम् ॥ २५ ॥ भक्तायेति ॥ हे प्रभो भगवद्भक्ताय प्रपन्नाय स्वशरणागताय चित्रकेतव एतां पूर्वदर्शितां विद्यामादिश्य नारदोऽङ्गिरसा साकं स्वायंभुवं धाम ब्रह्मलोकं ययौ । पूर्वं सनारदोऽङ्गिरा आजगामेति

देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु ॥ नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति ॥ २४ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविन्दयुगल परमपरमेष्ठिन्नमस्ते ॥२५॥ ॥ श्रीशुक उवाच ॥ भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः ॥ ययावङ्गिरसा साकं धाम स्वायंभुवं प्रभो ॥२६॥ चित्रकेतुस्तु विद्यां तां तथा नारदभाषिताम् ॥ धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥२७॥ ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया ॥ विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ॥ २८ ॥ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ॥ जगाम देवदेवस्य शेषस्य चरणान्तिकम् ॥ २९ ॥ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकङ्कणम् ॥ प्रसन्नवक्त्रारुणलोचनं तं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥

अङ्गिरसः प्राधान्यं तदा पुत्रेच्छो राज्ञः पुत्रप्रदत्वात् अधुना तु नारदोऽङ्गिरसा साकमिति नारदस्य प्राधान्यम् । ज्ञानेच्छोरुपदेशकत्वात् ॥ २६ ॥ चित्रेति ॥ चित्रकेतुस्तु अब्भक्षः सुसमाहितः सावधानचित्तश्च संस्तां नारदभाषितां विद्यां यथा यथावत्स्वरवर्णादिविपर्ययराहित्येन सप्ताहं धारयामास जजाप ॥ २७ ॥ तत इति ॥ हे नृप ततश्च धार्यमाणया अभ्यस्यमानया विद्ययैव हेतुभूतया सप्तरात्रान्ते अप्रतिहतमनुल्लङ्घितशासनं विद्याधराणामाधिपत्यमवान्तरफलं लेभे ॥२८॥ तत इति ॥ कतिपयैरहोभिः विद्यया इद्धेन दीप्तेन मनसा गतिर्यस्य सः । स्पष्टं शेषम् ॥ २९ ॥ मृणालेति ॥ मृणालं कमलकन्दस्तद्वद्गौरं शितिवाससं नीलाम्बरं स्फुरन्ति किरीटादीनि यस्य तं किरीटं शिरोभूषणं केयूरं बाहुभूषणं कटित्रं कटिसूत्रं कङ्कणं हस्तभूषणं प्रसन्नानि वक्त्राणि यस्य अरुणानि लोचनानि यस्य तं च तं च सिद्धेश्वराः सनत्कुमारादयस्तेषां मण्डलैर्वृतं प्रभुं

सङ्कर्षणं ददर्श ॥ ३० ॥ तदिति ॥ तस्य दर्शनेन ध्वस्तं समस्तं किल्बिषं यस्य सः अत एव स्वच्छममलं चान्तःकरणं यस्य सः मुनिः गृहीतमौनः प्रणयेन प्रेम्णाश्रुयुक्ते लोचने यस्य सः प्रहृष्टानि रोमाणि यस्य सः प्रवृद्धया भक्त्या आदिपुरुषं सङ्कर्षणमभ्ययात् अभिमुखमगच्छत् अभ्येत्य चानमत् ननाम ॥ ३१ ॥ स इति ॥ प्रेमाश्रुलेशैः उत्तमश्लोकस्य शेषस्य पादाब्जयोर्विष्टरमासनं मुहुरुपमेहयन् अभिषिञ्चन् प्रेम्णा उपरुद्धः अखिलानां वर्णानां निगम उच्चारणं यस्य सः चित्रकेतुः तं सङ्कर्षणं प्रसमीडितुं स्तोतुं चिरं नैवाशकत् न शशाक ॥ ३२ ॥ तत इति ॥ ततो मनीषया बुद्ध्या मनः समाधाय वशीकृत्य तथा सर्वेन्द्रियाणां बाह्यवर्तनं विषयाभिमुखधावनं नियम्य निरुध्य प्रतिलब्धा वाग्येन सोऽसौ चित्रकेतुः सात्वतशास्त्रं भक्तिप्रतिपादकं पञ्चरात्रादि तदुक्तः सच्चिदानन्दात्मको विग्रहो यस्य तं जगद्गुरुं सर्वपूज्यं प्रति एतद्वक्ष्यमाणं बभाषे तं तुष्टाव ॥ ३३ ॥ अजितेति ॥ हे अजित भवान् शूरैर्देवादिभिश्चाजितोऽपि सममतिभिर्जितचित्तैः साधुभिस्तु जितः स्वाधीनीकृत एवासितेऽपि निष्कामाः प्रबलैरिन्द्रियादिभिरजिता एव यतो यो

तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छामलान्तःकरणोऽभ्ययान्मुनिः ॥ प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमाऽनमदादिपूरुषम् ॥ ३१ ॥ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम् ॥ ३२ ॥ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ ॥ नियम्य सर्वेन्द्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥ चित्रकेतुरुवाच ॥ अजित जितः सममतिभिर्भवाञ्जितात्मभिर्भवता ॥ विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥ तव विभवः खलु भगवञ्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्र मृषा स्पर्धन्ति पृथगभिमत्या ॥ ३५ ॥ परमाणुपरममहतोस्त्वमाद्यन्तान्तर-वर्तीत्रयविधुरः ॥ आदावन्तेऽपि च सत्त्वानां यद्ध्रुवं तदेवान्तरालेऽपि ॥ ३६ ॥ क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैराण्डकोशः ॥ यत्र पतत्यणुकल्पः सहाण्डकोटिकोटिभिस्तदनन्तः ॥ ३७ ॥

भवान् तेषामकामात्मनामपि भजतामात्मदोऽतिकरुणश्चासि आर्याचतुर्दशकम् । तत्रस्थूलं लक्षणमपि न सङ्गच्छते नितरां सूक्ष्मं तच्चार्षत्वात्सोढव्यम् ॥ ३४ ॥ तवेति ॥ हे भगवन् जगतः उदयस्थितिलयप्रवेशनियमनादीनि तवैव विभवः लीलास्ति विश्वसृजो ब्रह्मादयस्तु तवांशस्य पुरुषस्याप्यंशा एव तत्र लोके वयं पृथगीश्वरा इत्यभि मत्याभिमानेन ते मृषैव स्पर्धन्ते इत्यन्वयः ॥ ३५ ॥ परमेति ॥ परमाणुः सूक्ष्मं मूलं कारणं परममहत् अन्तिमं कार्यं तयोस्त्वमेवाद्यन्तान्तरवर्ती आदावन्ते च अन्तरे मध्ये च वर्तितुं शीलं यस्य सः अत एव त्रयविधुरः आद्यन्तमध्यशून्यो नित्यः ते च त्वया सृज्यन्त इति न नित्याः तत्र हेतुमाह । सत्वानां सत्वेन प्रतीयमानानां कार्याणामादावन्ते च यद् ध्रुवं स्थिरमन्तरालेऽपि तदेव ध्रुवं सुवर्णादिवत् ॥ ३६ ॥ कालतः परिच्छेदाभावमुक्त्वा देशतोऽप्याह—क्षितीति ॥ पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरैरधिकैः क्षित्यादिभिः सप्तभिर्बहि-

रावृत एषोऽण्डकोशः ब्रह्माण्डः अन्यैर्ब्रह्माण्डकोटिभिः सह यत्र त्वयि अणुकल्पः अणुतुल्यः पतति परिभ्रमति तस्माद्भवाननन्त इति शास्त्रे प्रसिद्धः ॥ ३७ ॥ विषयेति ॥ हे ईश विषयेषु तृट् तृष्णा येषां ते अविवेकित्वान्नराकाराः पशव एव अतो विषयकामनया ते विभूतीः तव विभूतिरूपानिन्द्रादीनुपासते नतु परं सर्वोत्तमं त्वामुपासते तेषामुपासकानामाशिषस्तद्दत्तभोगास्तदनु उपास्यदेवनाशानन्तरमेव विनश्यन्ति। यथा राजकुलनाशानन्तरमेव तद्दत्तास्तत्सेवकानां भोगा विनश्यन्ति तद्वदित्यर्थः। अयं च परमोऽवधिर्मध्येऽपि पुण्यक्षये स्वर्गादिभोगनाशस्य प्रसिद्धत्वात् ॥ ३८ ॥ कामेति ॥ हे परम कामाः राज्याद्या विषयास्तदर्थमपि धियो मतयः ज्ञानात्मनि अगुणमये निर्गुणे त्वयि रचिताः कृताश्चेत्तर्हि न रोहन्ति देहान्तरोत्पत्तये न भवन्ति यथा करम्भबीजानि भर्जितबीजानि अङ्कुरोत्पत्तये न भवन्ति तद्वदित्यर्थः। यतोऽस्य जीवस्य गुणगणत एव द्वन्द्वजालानि संसारकारणानि अहन्ताममतादीनि भवन्ति अतः कामेनापि तव भजनाच्छनैर्नैर्गुण्यं भवतीत्यर्थः ॥३९॥ जितमिति ॥ हे अजित यदा भवान् भागवतं स्वप्राप्ति-साधनभूतमनवद्यं निर्दोषं धर्ममाह तदैव भवता जितं सर्वोत्कर्षेण स्थितं निष्किञ्चनाः लोकैषणावित्तैषणासुतैषणारहिताः यतो मुनयः मननशीलाः आत्मारामाः आत्मज्ञतया

विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ॥ तेषामाशिष ईश तदनु विनश्यन्ति यथा राजकुलम् ॥ ३८ ॥
कामधियस्त्वयि रचिता न परम रोहन्ति यथा करम्भबीजानि ॥ ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ॥ ३९ ॥
जितमजित तदा भवता यदाह भागवतं धर्ममनवद्यम् ॥ निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ ४० ॥
विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र ॥ विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥
कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ॥ स्वद्रोहात्तव कोपः परसंपीडया च तथाऽधर्मः ॥ ४२ ॥

तन्निष्ठा ये तेऽपि अपवर्गाय संसारविमोकेन त्वत्प्राप्तये यं धर्ममुपासते यं भवन्तमिति वा ॥ ४० ॥ विषमेति ॥ यत्र भागवते धर्मे नृणामुपासकानां त्वमहमिति मम तवेति च विषममतिर्नास्ति तत्र वैधर्म्यदृष्टान्तमाह। यदन्यत्रेति। यत् यथान्यत्र काम्यधर्मे विषममतिर्भवति तथा यत्र नास्तीत्यर्थः। ननु सोऽपि वेदोक्त इत्यत आह। विषमधिया शत्रुमरणस्वर्गप्राप्त्यादिकामनया रचितो विहितो यः धर्मः स ह्यविशुद्धो रागद्वेषादिप्रयुक्तत्वात् क्षयिष्णुश्च नश्वरफलकत्वात् अधर्मबहुलश्च हिंसादिबाहुल्यात् ॥ ४१ ॥ क इति ॥ स्वपरद्रुहा स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेन धर्मेण निजपरयोरहन्तास्पदस्य आत्मनः ममतास्पदस्य पुत्रादेश्च कः क्षेमः किं कुशलं कियान् अर्थो लाभश्च न किंचिदित्यन्वयः। यतः स्वद्रोहात् अत्यन्तकायक्लेशात्तव कोपः। यथोक्तं गीतासु। "कर्षयन्तः शरीरस्थं भूतग्राममचेतसः। मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान्॥" इति। तथा परस्य पश्वादेः सम्पीडया अधर्मः चकारात्तव कोपश्च अतस्त्वया रागान्धमपि कथंचित् वेदमार्गे प्रवर्त्तयितुं काम्यधर्मोऽभिहितो न तत्वदृष्ट्या ॥ ४२ ॥

नेति ॥ यया ईक्षया भवता भागवतो धर्मोऽभिहितः निरूपितः सा तवेक्षा मद्भक्त्या जीवाः कृतार्थाः भवन्त्विति परामर्शो न व्यभिचरति काम्यधर्मवद्वैगुण्याभावात् अत एव स्थिरचरसत्वकदम्बेषु स्थावरजङ्गमप्राणिसमूहेषु अपृथग्धियः एकं त्वामेव पश्यन्तः आर्याः श्रेष्ठाः यं धर्ममुपासते॥४३॥न हीति॥हे भगवन् त्वद्दर्शनान्नृणामखिलपापक्षयो भवतीति इदमघटितमसंभावितं न भवति । हि यस्मात् यस्य तव नाम्नः एकस्यापि सकृदपि श्रवणादेव पुल्कसकोऽत्यन्तनिकृष्टोऽपि संसाराद् विमुच्यते॥४४॥ अथेति ॥ अथ तस्माद्धेतोर्हे भगवन् त्वदवलोकनेन परिमृष्टा निरस्ता आशयमला अन्तःकरणदोषाः पापानि तत्कार्यभूता रागलोभादयश्च येषां ते तथाभूता वयमधुना जाता इति शेषः। यतः तावकेन त्वद्भक्तेन सुरऋषिणा नारदेन यत् उदितं तदन्यथा कथं भवति ॥ ४५ ॥ विदितमिति ॥ हे अनन्त इह संसारे जनैर्यदाचरितं तत्सर्वं जगदात्मनस्तव विदितमेव अतः परमगुरोः सर्वप्रकाशकस्य तवाग्रे निर्विसर्गपाठे सम्बोधनम् । अन्येन विशेषतो ज्ञाप्यं प्रकाशनीयं कियदिव न किमपीत्यर्थः । यथा सवितुरग्रे खद्योतैर्न किंचित्प्रकाशनीयमस्ति तद्वदि-

न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ॥ स्थिरचरसत्वकदम्बेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥ न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नामसकृच्छ्रवणात्पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥ अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥ विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम् ॥ विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः ॥ ४६ ॥ नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय ॥ ४७ ॥ यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनुचित्तय उच्चकन्ति ॥ भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥४८॥ श्रीशुक उवाच ॥ संस्तुतो भगवानेवमनन्तस्तमभाषत ॥ विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥ श्रीभगवानुवाच ॥ यन्नारदाङ्गिरोभ्यां ते व्याहृतं मेऽनुशासनम् ॥ संसिद्धोऽसि तया राजन्विद्यया दर्शनाच्च मे ॥ ५० ॥

त्यर्थः ॥ ४६ ॥ नम इति ॥ सकलस्य जगतः स्थित्यादीनामीशाय कर्त्रे तथापि भिदा भेददर्शननिमित्तेन कुयोगिनां विषयाविष्टचित्तानां दुरवसिता अविज्ञाता आत्मगतिर्निजं तत्वं यस्य तस्मै परमहंसाय भगवते तुभ्यं नमः ॥ ४७ ॥ यमिति ॥ यं श्वसन्तं चेष्टमानमनु विश्वसृजो ब्रह्मादयो देवास्तदधीनानि कर्मेन्द्रियाणि च श्वसन्ति चेष्टन्ते यं चेकितानं पश्यन्तं प्रकाशयन्तं कितधातोर्यङ्लुकि ताच्छील्ये चानश्। अनु पश्चात् चित्तयः सूर्यादयो देवाः ज्ञानेन्द्रियाणि च उच्चकन्ति स्वस्वविषयं प्रकाशयन्तीत्यर्थः। उत्पूर्वाच्चकतेर्लट् तङभाव आर्षः । यस्य मूर्ध्नि भूमण्डलं सर्षपायति सर्षपवदतिलघुत्वेनानुसन्धेयतया वर्त्तते।तङभाव आर्षः। तस्मै सहस्रमूर्ध्ने भगवते तुभ्यं नमः ॥४८॥ संस्तुत इति॥ हे कुरूद्वह भगवाननन्तः संकर्षण एवं संस्तुतोऽत एव प्रीतः सन् तं विद्याधरपतिं चित्रकेतुमभाषत ॥४९॥ यदिति ॥ हे राजन् यन्मेऽनुशासनं मद्विषय उपदेशः कोऽयं स्यात्तव राजेन्द्रे-

त्यादिना ते तव नारदाङ्गिरोभ्यां व्याहृतं निरूपितं तेन तया नारदोपदिष्टया स्तोत्रमन्त्रात्मिकया विद्यया मे मम दर्शनाच्च त्वं सम्यक् सिद्धः कृतार्थोऽसि ॥५०॥ तद्बोधदार्ढ्याय स्वयमप्युपदिशति—अहमिति ॥ सर्वभूतानि स्थावरजङ्गमात्मकान्यहमेव तथाभूतानामात्मा भोक्ताऽप्यहमेव भोक्तृभोग्यात्मकं विश्वं मद्व्यतिरिक्तं नास्तीत्यर्थः । यतोऽहमेव भूतभावनः भूतानां भावनः प्रकाशकः नियन्ता कारणं च ननु शब्दब्रह्म प्रकाशकं परं ब्रह्म कारणं प्रकाश्यं प्रसिद्धं तत्राह। शब्दब्रह्म परं ब्रह्म च इत्युभे ममैव शाश्वती शाश्वत्यौ पूर्वसवर्णदीर्घ आर्षः। तनू मूर्त्ती स्तः ॥५१॥ लोक इति ॥ लोके भोग्यात्मके प्रपञ्चे भोक्तृत्वेन विततमनुगतमात्मानं जीवं तथा लोकं चात्मनि जीवे सन्ततं भोग्यत्वेन व्याप्तं तदुभयं च मया कारणात्मना व्याप्तं यतस्तदुभयमपि मय्येवाधिष्ठाने कृतं रचितमिति पश्येदिति शेषः ॥ ५२ ॥ यथेति ॥ यथा सुषुप्तः पुरुषः स्वप्ने विश्वं गवाश्वव्याघ्राद्यनेकरूपं देशान्तरस्थमपि आत्मनि एव पश्यति स्वप्नमध्ये सुषुप्तिं स्वप्नं च पश्यतीत्यर्थः । ननु स तद्रूपो भवति तथा स्वप्न एवं पुनरुत्थितः सन्नात्मानं मनुष्यमेकदेशस्थं गृहे शयनदेशे स्थितं मन्यते जाग्रदवस्थामनुभवति ॥५३॥ एवमिति ॥ एवं जागरणादीनि जीवस्थानानि जीवोपाधेर्बुद्धेरवस्थाभूतानि आत्मनो मायामात्राणि मायया कल्पितानीति

**अहं वै सर्वभूतानि भूतात्मा भूतभावनः ॥ शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू॥५१॥ लोके विततमात्मानं लोकं चात्मनि संततम् ॥ उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥५२॥ यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ॥ आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥५३ ॥ एवं जागरणादीनि जीवस्थानानि चात्मनः ॥ मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥ येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ॥ सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ॥ अन्वेति व्यतिरिच्येत यज्ज्ञानं ब्रह्म तत्परम् ॥ ५६ ॥ यदेतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ॥ ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः ॥ ५७ ॥**

विज्ञाय तेषां द्रष्टारमत एव परं तदवस्थारहितमात्मानं स्मरेत् ॥ ५४ ॥ ननु स्वापे दृश्याभावेन द्रष्टृत्वाभावात् कथं तद् द्रष्टारं स्मरेत् तत्राह—येनेति ॥ प्रसुप्तः पुरुषो जीवो येन ब्रह्मणैकीभूतेन रूपेण तदा प्रस्वापकाल आत्मनः स्वापं निर्गुणं विषयसंबन्धाजन्यमतीन्द्रियं सुखं च वेद तमात्मानं ब्रह्म व्यापकं मामवेहि । तथा च तदा स्वापसुखयोः संवेदनाभावे "सुखमहमस्वाप्सं न किंचिदवेदिषम्" इति स्मरणासंभवात्स्वापादिसाक्षितया आत्मसिद्धिः ॥ ५५ ॥ ननु स्वापसाक्षिणा दृष्टं जाग्रदवस्थः कथं स्मरेत् न ह्यन्येन दृष्टमन्यः स्मरति तत्राह—उभयमिति ॥ उभयं प्रस्वापं प्रतिबोधं च स्मरतोऽनुसंदधतः पुंसस्तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेन यदन्वेति ताभ्यां व्यतिरिच्येत एकैकापायेऽप्यनपायात् तज्ज्ञानं परं ब्रह्मैव न ततो भिन्नम् अतो बाल्ये दृष्टस्य यौवने स्मृतिवत् अवस्थान्तरत्वेऽपि स्वापानन्दयोः स्मरणं घटत इति भावः । तदेवंभूतं ब्रह्म आत्मानमवेहीत्यनुषङ्गः ॥ ५६ ॥ यदिति ॥ यत् यदि एतत् पूर्वोक्तं मद्भावं मत्स्वरूपं ब्रह्म पुंसो विस्मृतं भवति तदात्मनः सकाशाद्भिन्नं भवति ततश्च भेददर्शनादेतस्य

जीवस्य संसारो भवति तत्स्वरूपमाह । देहादिति । भेददर्शनेन देहपुत्रादावहंममाध्यासपूर्वककृतकर्मानुसारेण देहाद्देहो देवमनुष्यादिजन्मानन्तरं पुनर्जन्म मृतेरनन्तरं पुनर्मृतिश्चेत्यर्थः ॥ ५७ ॥ भोगो योन्यन्तरेऽपि सुलभः ज्ञानं मनुष्यजन्मन्येवेत्यतोऽत्रैव तदर्थं यतितव्यमित्याह—लब्ध्वेति ॥ ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं तयोः संभवः उत्पत्तिः संभावना यस्यां तां मानुषीं योनिमिह पुण्यक्षेत्रे भारतवर्षे लब्ध्वा य आत्मानं न बुद्धयेत स कचिद्देवादियोनिं गत्वापि क्षेमं नाप्नुयात् ॥ ५८ ॥ स्मृत्वेति ॥ ईहायां लौकिके वैदिके च द्विविधेऽपि प्रवृत्तिमार्गे परिक्लेशं ततः ईहात एव फलविपर्ययं च स्मृत्वा अनीहायां निवृत्तिमार्गे तु अभयं मोक्षं च स्मृत्वा कविर्विवेकी नानाफलसंकल्पाद्विरमेत् । नोभयमिति पाठे परिक्लेशः फलविपर्ययश्च नास्तीत्येवं स्मृत्वेत्यर्थः ॥ ५९ ॥ विपर्ययमेव स्पष्टयति—सुखायेति ॥ दम्पती स्त्रीपुंसौ सुखाय दुःखमोक्षाय दुःखनिवृत्तये च क्रियाः नानाविधकर्माणि कुर्वतः कुरुतः। अडार्षः। ततः कर्मभ्यो दुःखस्यानिवृत्तिः सुखस्याप्राप्तिश्चकारात्प्रत्युत ततः कर्मण एवं भूयो दुःखप्राप्तिश्च भवतीति ज्ञेयम् ॥ ६० ॥ एवमिति

लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसंभवाम् ॥ आत्मानं यो न बुध्येत न क्वचिच्छममाप्नुयात् ॥५८॥ स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम्॥ अभयं चाप्यनीहायां संकल्पाद्विरमेत्कविः ॥ ५९ ॥ सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः ॥ ततो निवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥ ६० ॥ एवं विपर्ययं बुद्ध्वा नृणां विज्ञाभिमानिनाम् ॥ आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥६१॥ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ॥ ज्ञानविज्ञानसंतुष्टो मद्भक्तः पुरुषो भवेत् ॥६२॥ एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः ॥ स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥६३॥त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम॥ ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि॥६४॥ श्रीशुक उवाच॥ आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः॥ पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥ ६५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ छ ॥

युग्मम् ॥ विज्ञाभिमानिनां विज्ञाः उद्यमे प्रवीणाः वयमित्यभिमानवतां नृणामेवं फलविपर्ययं बुध्वा आत्मनश्च गतिं तत्वं सूक्ष्मामतिदुर्ज्ञेयां स्थानत्रयविलक्षणां जागरणाद्यवस्थात्रयरहितां बुध्वा स्वेन तेजसा विवेकबलेन दृष्टश्रुताभिः मात्राभिः ऐहिकामुष्मिकैर्विषयैर्निर्मुक्तः तदभिलाषरहितः ज्ञानविज्ञानाभ्यां संतुष्टोऽपि पुरुषः मद्भक्तः मद्भजनपरो भवेत् अन्यथा पुनः प्रमादेन भ्रश्येत् ॥ ६१ ॥ ६२ ॥ एतावानिति ॥ यत् परस्यात्मन एकं दर्शनं तदेतावानेव योगेन नैपुण्यं यस्याः सा बुद्धिः येषां तैर्मनुजैः सर्वात्मना सर्वप्रयत्नसाध्यः स्वार्थः पुरुषार्थो ज्ञेयो नातः परं कृत्यमस्ति ॥ ६३ ॥ त्वमिति ॥ हे राजन् त्वमप्रमत्तः विषयानासक्तः श्रद्धया विश्वासेनैतन्मम वचो धारयन् ज्ञानविज्ञानसम्पन्नश्च सन्नाशु सिद्ध्यसि मां प्राप्स्यसीत्यर्थः ॥ ६४ ॥ आश्वास्येति ॥ भगवान् जगद्गुरुः विश्वात्मा हरिः इत्थं चित्रकेतुमाश्वास्य आश्वासनपूर्वकं तत्वमुपदिश्य तस्य पश्यत एव ततश्च तत्रैवान्तर्दधे ॥ ६५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकायाम् ॥ गङ्गासहायः षष्ठस्य षोडशे निरमादिमाम् ॥ १६ ॥

सप्तदशे चित्रकेतुर्विमानस्थः शिवं हसन् ॥ गौरीशापादसूद्वृत्रस्तत्र श्लोकाः कुर्वीर्द्वयः ॥ अनुष्टुभो वह्निर्वेदा उवाचनवकं तथा ॥१७॥ यत इति ॥ यतः यस्यां दिशि अनन्तः अन्तर्हितस्तस्यै दिशे नमस्कृत्य गगनेचरः विद्याधरः चित्रकेतुश्चचार ॥१॥ स इति युग्मम्॥ मुन्यादिभिः स्तूयमानः महायोगी वर्षलक्षाणां लक्षमव्याहतं बलं शारीरमिन्द्रियमिन्द्रियपाटवं च यस्य स चित्रकेतुर्विद्याधरस्त्रीभिः ईश्वरं हरिं गापयन् नानाविधसंकल्पानां सिद्धयो यासु तासु कुलाचलेन्द्रः पर्वतराजः सुमेरुस्तस्य द्रोणीषु पर्वतद्वयमध्ये समप्रदेशेषु रेमे ॥२॥३॥ एकदेति ॥ एकदा विष्णुदत्तेन भास्वता विमानेन गच्छन् सः सिद्धचारणैः परीतं गिरिशं ददर्श। तङ्गर्षः ॥४॥ आलिङ्ग्येति॥अङ्कीकृतामुत्सङ्गेनैकीकृतां देवीं बाहुनालिङ्ग्य मुनिसंसदि स्थितं शिवं दृष्ट्वा देव्याः शृण्वन्त्याः सत्याः नुमार्षः। तदन्तिके स्थितः सन्नुच्चैर्जहास उवाच च ॥ ५ ॥ एष इति ॥ एष साक्षाल्लोकगुरुः वेदप्रवर्तक ईश्वरः साक्षादपि शरीरिणां धर्मं वक्ता वदति एतस्यां मुनिसिद्धादिसभायां मुख्यश्च सभायामेव भार्यया मिथुनीभूयास्ते ॥६॥ जटेति ॥ जटाधरः तीव्रतपाः ब्रह्मवादी सभापतिः

॥ श्रीशुक उवाच ॥ यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः॥ विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥१॥ स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः ॥ स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥२॥ कुलाचलेन्द्रद्रोणीषु नानासंकल्पसिद्धिषु ॥ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ॥३॥ एकदा स विमानेन विष्णुदत्तेन भास्वता ॥ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥४॥ आलिङ्ग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि॥ उवाच देव्याः शृण्वन्त्या जहासोच्चैस्तदन्तिके ॥ ५॥ चित्रकेतुरुवाच ॥ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम् ॥ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥ जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः ॥ अङ्कीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥ प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ॥ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप ॥ तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥ श्रीशुक उवाच ॥ इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ॥ रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥

एष स्त्रियमङ्कीकृत्य यथा प्राकृतोऽतिनिकृष्टो जनो गतह्रीर्निर्लज्जः सन्नास्ते तथायमीश्वरोऽप्यास्ते ॥७॥ प्रायश इति ॥ स्पष्टम् ॥८॥ भगवानिति ॥ हे नृप चित्रकेतोरभिप्रायज्ञानात् अगाधा गम्भीरा धीर्यस्य स भगवान् शिवोऽपि तस्य वचनं श्रुत्वा सदसि प्रहस्य तूष्णीं बभूव नतु कोपं चकार। न वा किञ्चिदुवाच तस्य शिवस्यानुव्रताः सभ्याश्च तूष्णीं बभूवुः ॥९॥ इतीति ॥ न तद्वीर्यं स्वातन्त्र्यं वेत्तीत्यतद्वीर्यं विद्वांस्तस्मिन् न हि स्वतन्त्र एवं शिक्षार्ह इति भावः। इति बह्वशोभनमीश्वरशिक्षालक्षणमनुचितं ब्रुवाणे सति। निर्जितः आत्मा मनोमयेत्यभिमानवते धृष्टाय निःशङ्काय तस्मै देवी रुषा आह स्म। अत्र चित्रकेतोरयमभिप्रायः अयं खलु ईश्वर एव नास्य दुराचारत्वेऽपि क्षतिः यः खलु अस्येदृशमाचारं दृष्ट्वा इमं निन्दिष्यति तस्य पापोत्पत्त्या नाशो भविष्यत्येव। यथा दक्षस्य तस्मादद्यारभ्य मद्वचोभिरयं स्वस्य दुराचारमुत्सृजेत्तदा लोकस्य भद्रं स्यात्। श्रीशिवस्य

च यशः स्यादिति श्रीशिवेन चास्याभिप्रायो ज्ञात एव तत्सभ्यैरपि तत्कृपया ज्ञात एवेति सर्वेऽपि क्रोधं न चक्रुः सर्वज्ञाया देव्या अपि क्रोधो नाभूदेव किंतु शिक्षार्थमेव उपालम्भः शापश्च अत एव पुत्रेति सानुकम्प संबोधनम् ॥ १० ॥ अयमिति ॥ दण्डधरः प्रभुः समर्थः दुष्टानां निर्लज्जानां च अस्मद्विधानां शास्ता शिक्षकः विप्रकृत् विरुद्धं प्रकर्षेण करोतीति तथा दण्डेन हितकर्त्ताधुना लोके किमयमेव ॥ ११ ॥ नेति ॥ पद्मयोनिर्ब्रह्मा धर्मं न वेद किल न च ब्रह्मपुत्राद्याः मनुपर्यन्ताः धर्मं विदुः । ये ब्रह्माद्याः अतिवर्त्तिनं शास्त्रमतिक्रम्य वर्त्तनशीलं हरं नो निषेधन्ति न निवारयन्ति॥१२॥ एषामिति ॥ यः क्षत्रबन्धुः क्षत्रियाधमश्चित्रकेतुः सूरीन् ब्रह्मादीन् परिभूय तिरस्कृत्य अज्ञान् मत्वा एषां ब्रह्मादीनाम नु निरन्तरं ध्येयं पदाब्जयुग्मं यस्य तमत एव जगद्गुरुं सर्वपूज्यं मङ्गलमङ्गलं परमधर्ममूर्त्तिं शिवं स्वयं धृष्टः सन् शास्ति तस्मादयमेव दण्डयः ॥ १३ ॥ नेति ॥ संभाविता अहमुत्तम इति कृता मतिर्येन सः अत एव स्तब्धः अनम्रः अयं साधुभिः पर्युपासितं वैकुण्ठपादमूलोपसर्पणमस्मिन् जन्मनि नार्हति ॥ १४ ॥ अत इति ॥

पार्वत्युवाच ॥ अयं किमधुना लोके शास्ता दण्डधरः प्रभुः ॥ अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥११॥ न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा न तु नारदाद्याः ॥ न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥ एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम्॥ यः क्षत्रबन्धुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ॥१३॥ नायमर्हति वैकुण्ठपादमूलोपसर्पणम् ॥ संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥ अतः पापीयसीं योनिमासुरीं याहि दुर्मते ॥ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥१५॥ श्रीशुक उवाच ॥ एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः ॥ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाऽम्बिके ॥ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥ संसारचक्र एतस्मिञ्जन्तुरज्ञानमोहितः ॥ भ्राम्यन्सुखं च दुःखं च भुङ्क्ते सर्वत्र सर्वदा ॥ १८ ॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ॥ कर्तारं मन्यते प्राज्ञ आत्मानं परमेव च ॥ १९ ॥

अतः हे दुर्मते हे पुत्र यथेह संसारे भूयो महतां किल्बिषमपराधं भवान् न कर्त्ता न करिष्यति तथा पापीयसीमासुरीं योनिं याहि पुत्रेऽतिदोषेऽपि स्वस्य हितकारित्वं द्योतयति ॥ १५ ॥ एवमिति ॥ स्पष्टम् ॥ १६ ॥ प्रतिगृह्णामीति ॥ हे अम्बिके ते तव शापमहमात्मनोऽञ्जलिना प्रतिगृह्णामि । हि यस्मात् देवैर्मर्त्याय यत्सुखं दुःखं वा प्रोक्तं तत्तस्य पूर्वदिष्टं प्राचीनकर्म प्राप्तमेव ॥ १७ ॥ संसारेति ॥ अज्ञानमोहितो जन्तुर्जीव एतस्मिन् संसारचक्रे भ्राम्यन् सर्वदा सर्वकाले सर्वत्र देशे च सुखं च दुःखं च भुङ्क्त एव अतोऽत्रेमम तव च दोषो नास्ति ॥ १८ ॥ नेति ॥ अत्र संसारे सुखःदुखयोः कर्त्ता आत्मा स्वयं न स्यात् तथा परः मित्रशत्रुप्रभृतिरपि न स्यात् । अप्राज्ञः अतिमूर्ख एव जनः आत्मानं परं च सुखदुःखयोः कर्त्तारं मन्यते ॥ १९ ॥

गुणेति ॥ वस्तुतः मायागुणानां प्रवाहरूपेऽत्र संसारे कः शापानुग्रहादिः॥२०॥एक इति ॥ निष्कलः शुद्धः एकः असहाय एव भगवान् आत्ममायया निजशक्तिरूपया भूतानि प्राणिनः सृजति एषां प्राणिनां बन्धमोक्षादिकं च सृजति । तत्र मायांशभूतया अविद्यया बन्धः विद्यया च मोक्षः सत्वेन सुखं तमसा च दुःखमिति विवेकः ॥२१॥ नेति ॥ सर्वत्र समस्य निरञ्जनस्य अविद्यारहितस्य भगवतः कश्चिदितिपदद्वयस्य सर्वत्रान्वयः । दयितः प्रियो नास्ति प्रतीपोऽप्रियः शत्रुर्नास्ति ज्ञातिः सपिण्डो नास्ति बन्धुर्विवाहादिना संबन्धी नास्ति परः परकीयो नास्ति स्वः स्वकीयो नास्ति अत एव तन्निमित्ते सुखे रागो नास्ति । रोषस्य तु रागपूर्वकत्वनियमात्तदभावे स कुतः स्यात्॥२२॥ तथापीति ॥ यद्यप्येवं तथापि तस्य शक्त्या मायया यो विसर्गः पुण्यपापादिलक्षणं कर्म स एषां शरीरिणां सुखादिजन्मान्तार्थमवकल्पते समर्थो भवति। मृत्युजन्मनोरिति चतुर्थ्यर्थे षष्ठी ।

गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः॥ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा॥२०॥एकः सृजति भूतानि भगवानात्ममायया॥ एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः॥ २१ ॥ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः ॥ समस्य सर्वत्र निरञ्जनस्य सुखेन रागः कुत एव रोषः ॥ २२ ॥ तथापि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ॥ बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते ॥ २३ ॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि ॥ यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥ श्रीशुक उवाच ॥ इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम ॥ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥ ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥ २६ ॥ श्रीशुक उवाच ॥ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः ॥ माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ २७ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया ॥ सुखं दुःखं स्मृतिर्जन्म शापोऽनुग्रह एव च ॥ २९ ॥

मृत्यवे जन्मने च ॥ २३ ॥ अथेति ॥ हे भामिनि कोपने हे सति अथ तस्मात् सुखदुःखयोः स्वकर्माधीनत्वात् त्वां केवलं प्रसादये न तु शापमोक्षाय लोकमर्यादारक्षणहेतुत्वान्ममोक्तं साध्वपि यत्त्वमसाधु मन्यसे तत्त्वया क्षम्यताम् ॥ २४ ॥ इतीति ॥ हे अरिन्दम चित्रकेतुः गिरिशौ एकशेषेण भवानीशङ्करौ प्रसाद्य तयोः स्मयतोः विस्मयं कुर्वतोः सतोः शता आर्षः । स्वविमानेन जगाम ॥ २५ ॥ तत इति ॥ स्पष्टम् ॥ २६ ॥ दृष्टवतीति ॥ हे सुश्रोणि निस्पृहाणां महात्मनाम् अद्भुतकर्मणः हरेर्भक्तानां नारदादीनां ये भृत्याः सेवकाः चित्रकेतुप्रभृतयस्तेषां माहात्म्यं त्वं दृष्टवत्यसि ॥ २७ ॥ नारायणेति ॥ स्वर्गादिष्वपि तुल्योऽर्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते नारायणपराः सर्वे कुतश्चन न बिभ्यति ॥ २८ ॥ देहिनामिति ॥ देहिनामीश्वरस्य लीलया मायया देहसंयोगात् सुखं दुःखमित्यादीनि द्वन्द्वानि भवन्ति ॥ २९ ॥

अविवेकेति ॥ तेषु सुखदुःखादिषु यः गुणदोषविकल्पः सुखादौ गुणदृष्टिः दुःखादौ दोषदृष्टिः स पुंसोऽविवेकेन कृतः मिथ्यैव तत्र दृष्टान्तौ स्वप्न आत्मन्यर्थभेदः राजरङ्कादिभेद इव क्षीरभोजनपुत्रमरणादिरिव जागरे च स्रजिभिद्वदेव मालायां सर्पादिभेदवदेव कृतो न तु परमार्थत इत्यर्थः । वत्शब्द इवार्थेऽव्ययमपि । "इववद्वा यथा शब्दा" इत्युक्तेः । स्वामिपादास्तु स्रग्वदिति वक्तव्ये स्रजिवदित्यार्षमित्याहुः । तत्कृत इति पाठे तु स्रजि तद् ततो हेतोः भिदा भेद इव कृतः यद्वा स्रजि भिदा इव तत्कृतः जागरे च अविवेककृत इत्यर्थः । प्रथमपाठे भित् इति क्विबन्तः। द्वितीयपाठे भिदा इति टाबन्तः ॥ ३० ॥ वासुदेव इति ॥ वासुदेवे भगवति भक्तिमुद्वहतां ज्ञानं वैराग्यं च वीर्यं येषां तेषां नृणामिह संसारे कश्चिदप्यर्थो विशेषेणाहंममतयाश्रय आश्रयणीयो नास्ति ज्ञानेन तन्मूलाविद्याया निवृत्तत्वादिति भावः ॥ ३१ ॥ नाहमिति ॥ अहं रुद्रः विरिञ्च्यादयश्च यस्यांशकांशका अपि वयं पृथगीशमानिनः सन्तो यस्येहितमभिप्रायं लीलां वा तस्य रूपं च न विदाम न विद्मः। आर्षः प्रयोगः। अत्र नेति नञां प्रत्येकम् अहं न वेद्मीत्या-

अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ॥ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥ ३० ॥ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ॥ ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥ नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ॥ विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥ ३३ ॥ तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः ॥ सर्वत्र समदृक् शान्तो ह्यहं चैवाच्युतप्रियः ॥ ३४ ॥ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु ॥ महापुरुषभक्तेषु शान्तेषु समदर्शिषु ॥ ३५ ॥ श्रीशुक उवाच ॥ इति श्रुत्वा भगवतः शिवस्योमाभिभाषितम् ॥ बभूव शान्तधी राजन् देवी विगतविस्मया ॥ ३६ ॥ इति भागवतो देव्याः प्रतिशप्तुमलंतमः ॥ मूर्ध्ना संजगृहे शापमेतावत्साधुलक्षणम् ॥ ३७ ॥

दिरीत्यान्वये कृते ततः न विदामेति युगपदन्वयः । दशमस्कन्धे "नेमं विरिञ्चो न भवः" इत्यत्र तथा "न क्रोधो न च मात्सर्यम्" इत्यादौ चैवम् विस्तरो नेमं विरञ्च इत्यत्र शेषः ॥ ३२ ॥ न हीति ॥ सर्वभूतानामात्मत्वाद्धेतोः हरिः सर्वभूतानां प्रियः अस्य भगवतस्तु समत्वात् कश्चित्प्रियो नास्ति एवमप्रियः स्वः परोऽपि कश्चिन्नास्ति ॥ ३३ ॥ तस्येति ॥ अयं महाभागश्चित्रकेतुः तस्य भगवतः प्रियः अनुगः सेवकः सर्वत्र समदृक् शान्तः रागादिरहितः अहं चाच्युतस्य प्रियः तस्मादस्मिन् मम क्रोधो नाभूदिति भावः ॥ ३४ ॥तस्मादिति ॥ तस्मात् महापुरुषभक्तेषु शान्तेषु समदर्शिषु महात्मसु पुरुषेषु विस्मयः शापहेतुर्गर्वः तन्माहात्म्यं दृष्ट्वा विस्मयो वा न कार्यः ॥ ३५ ॥ इतीति ॥ हे राजन् इति भगवतः शिवस्याभिभाषितं श्रुत्वा देवी उमा विगतविस्मया गर्वरहिता अत एव शान्ता क्रोधरहिता धीर्यस्यास्तथाभूता बभूव ॥ ३६ ॥ इतीति ॥ भागवतश्चित्रकेतुः प्रतिशप्तुमलन्तमः अतिसमर्थोऽपि देव्याः शापमित्येवं मूर्ध्ना संजगृहे एतावदेव परापकारवर्जनमेव साधु लक्षणम् ॥ ३७ ॥

जज्ञ इति ॥ स एव भवानीशापवशाद् दानवीं योनिमाश्रितो वृत्र इत्यभिविख्यातः प्रसिद्धः त्वष्टुर्दक्षिणाग्नौ जज्ञे तत्रापि भगवत्प्रभावात् ज्ञानविज्ञानसंयुत एव जातः ॥ ३८ ॥ एतदिति ॥ यत्त्वं मां परिपृच्छसि तदेतत् वृत्रस्यासुरजातेः कारणं तत्रापि भगवति मतेश्च कारणमन्यच्च तत्प्रासङ्गिकं सर्वं ते तव मयाऽऽख्यातम् ॥ ३९ ॥ इतिहासमिति ॥ स्पष्टम् ॥ ४० ॥ य इति ॥ य एतत् इतिहासवर्णनं नियमेन पठेत् सोऽन्ते हरिं स्मृत्वा तमेव परमां गतिं याति शेषं स्पष्टम् ॥ ४१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्य टीकां सप्तदशे व्यधात् ॥ १७ ॥ अष्टादशे दितेर्गर्भं चिच्छेदेन्द्रो मुहुस्ततः ॥ बभूवुर्मरुतो देवाः श्लोकास्तत्राष्टसप्ततिः ॥ एकादशोवाचसार्द्धाष्टसप्तति-रनुष्टुभः ॥ १८ ॥ दक्षकन्यावंशकथने अदित्या द्वादश पुत्राः प्रोक्ताः विवस्वानर्यमा पूषा इत्याद्याः मित्रः शक्र उरुक्रम इत्यन्ताः तत्र अष्टाध्यायान्तरमारभ्य विश्वरूपवृत्र-

जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ॥ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥ ३९ ॥ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ॥ माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते ॥ ४० ॥ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ॥ इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥ इति श्रीभागवते षष्ठस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुक उवाच ॥ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम् ॥ अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥ सिद्धिर्भगस्य भार्याङ्ग महिमानं विभुं प्रभुम् ॥ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २ ॥ धातुः कुहूः सिनीवाली राका चानुमतिस्तथा ॥ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥ अग्नीन्पुरीष्यानाधत्त क्रियायां समनन्तरः ॥ ४ ॥ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ॥ ५ ॥

चित्रकेतूपाख्यानैस्त्वष्टुर्वंशमनुवर्ण्य सवितुर्वंशमाह—पृश्निस्त्विति ॥ सवितुः पत्नी पृश्निस्तु सावित्र्यादीन् तत्तदभिमानिदेवान् प्रासूतेत्युत्तरस्यापकर्षः । अग्निहोत्रादयो यागविशेषाः महामखान् पञ्चयज्ञान् ॥ १ ॥ सिद्धिरिति ॥ अङ्ग हे राजन् भगस्य भार्या सिद्धिर्नाम्नी महिमादीन् पुत्रान् सुव्रतां कन्यां च प्रासूत ॥ २ ॥ धातुरिति ॥ धातुः कुह्वाद्याश्चतस्रः भार्याः सायमादींश्चतुरः पुत्रान् अनुक्रमात् प्रासुवत । तत्र कुहूः सायं पुत्रं सिनिवाली दर्शं पुत्रं प्रासूतेत्यादिरन्वयः । तत्रामावास्याभिमानिनी कुहूः कृष्णपक्षचतुर्दश्यभिमानिनी सिनीवाली पूर्णमास्यभिमानिनी राका शुक्लपक्षचतुर्दश्यभिमानिनी अनुमतिः चतुर्थस्कन्धेऽङ्गिरसः पत्न्यां श्रद्धायां सिनीवाल्यादीनामुत्पत्तिरुक्ता ॥ ३ ॥ अग्नीनिति अर्द्धम् ॥ समनन्तरो विधाता क्रियायां स्वभार्यायां पुरीष्यसंज्ञान् पञ्चचित्तानादत्त "पुरीष्यासो अग्नय" इति "पञ्च वा एतेऽग्नयो यच्चितय" इति श्रुतेः ॥ ४ ॥ चर्षणीति ॥ चर्षणी वरुणस्य भार्यासीत् । पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः वरुणस्यैव महायोगी वाल्मीकिर्वल्मीकादभवत् । एतौ च भृगुवाल्मीकी वरुणस्यासाधारणपुत्रौ ॥ ५ ॥

अगस्त्यश्चेति ॥ अगस्त्यश्च वसिष्ठश्च एतौ ऋषी मित्रावरुणयोरेवासाधारणपुत्रौ तत्र हेतुः उर्वश्याः सन्निधौ द्रुतं स्कन्नं रेतो यतो मित्रावरुणावुभावपि कुम्भे सिषिचतुरतः कुम्भाज्जातावगस्त्यवसिष्ठावुभयोः पुत्रावित्यर्थः । रेवत्यामित्यर्द्धम् । रेवत्यां भार्यायां मित्र उत्सर्गादीन् पुत्रान् व्यधादिति ते मित्रस्यैवासाधारणाः पुत्रा इत्यर्थः ॥ ६ ॥ पौलोम्यामिति ॥ पौलोम्यां भार्यायां प्रभुः स्वर्गस्वामी इन्द्रो जयन्तादींस्त्रीन् पुत्रान् आधत्तेति नोऽस्माभिः श्रुतम् ॥ ७ ॥ उरुक्रमस्येति ॥ उरुक्रमस्य देवस्य भगवदवतारस्य मायया वामनरूपिणः कीर्तिसंज्ञायां पत्न्यां बृहच्छ्लोकसंज्ञकः पुत्रो जातः तस्य च सौभगादय आसन् ॥ ८ ॥ तत्कर्मेति ॥ महात्मनः काश्यपस्य वामनस्य तत्प्रसिद्धं कर्म तथा गुणवीर्याणि च यथा चादित्यामवततार तत्सर्वं पश्चादष्टमस्कन्ध एव वक्ष्यामहे ॥ ९ ॥ अथेति ॥ अथ कश्यपस्य दायादान् पुत्रान् दैतेयान् दित्यां जातान् ते तुभ्यं

अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥ रेतः सिषिचतुः कुम्भ उर्वश्याः सन्निधौ द्रुतम् ॥ रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥
पौलोम्यामिन्द्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ॥ जयन्तमृषभं तात तृतीयं मीढुषं प्रभुः ॥ ७॥ उरुक्रमस्य देवस्य मायावामनरूपिणः ॥
कीर्तौपत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः ॥ ८॥ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ॥९॥
अथ कश्यपदायादान्दैतेयान्कीर्तयामि ते ॥ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च ॥१०॥ दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ ॥ हिरण्यक-
शिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ॥ जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥१२॥ संह्लादं
प्रागनुह्लादं ह्लादं प्रह्लादमेव च ॥ तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥ शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ॥ संह्लादस्य
कृतिर्भार्याऽसूत पञ्चजनं ततः ॥१४॥ ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ॥ योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलम् ॥१५॥

कीर्त्तयामि । यत्र श्रीमान् बलिः प्रह्लादश्च भागवतो जातः ॥ १० ॥ दितेरिति ॥ दितेः दैत्यादिवन्दितौ हिरण्यकशिपुर्हिरण्याक्षश्चेति द्वावेव दायादौ पुत्रौ प्रथमं जातौ । तौ च तृतीयस्कन्धे कीर्तितौ ॥ ११ ॥ हिरण्येति युग्मम् ॥ जम्भस्य तनया दत्ता जम्भेन हिरण्यकशिपवे दत्ता अतः हिरण्यकशिपोर्भार्या दानवी दनुवंशजा कयाधुर्नामाभूत् । सा संह्लादादीन् चतुरः सुतान् सुषुवे । तत्स्वसा प्रह्लादभगिनी सिंहिका विप्रचितोदानवात् स्वभर्तुः सकाशात् राहुं पुत्रमग्रहीत् अजीजनत् ॥ १२ ॥ १३ ॥ शिर इति ॥ यस्यामृतं पिबतो राहोः हरिश्चक्रेण शिरः अहरत् । संह्लादस्य भार्या कृतिर्नाम्नी ततः संह्लादात् पञ्चजनसंज्ञकं पुत्रमसूत ॥ १४ ॥ ह्लादस्येति ॥ ह्लादस्य धमनिर्भार्या वातापिमिल्वलं चासूत । अतिथये अगस्त्याय अगस्त्यं भोजयितुं यस्तु मेषरूपधरं वातापिं पेचे तमिल्वलं यं च पेचे तं वातापिं चासूत ॥ १५ ॥

अन्विति ॥ अनुह्लादस्य सूर्म्यायां भार्यायां बाष्कलो महिषश्चेति द्वौ पुत्रौ जाताविति शेषः । प्राह्लादिः प्रह्लादपुत्रो विरोचनोऽभूत् तस्य विरोचनस्य देव्यां भार्यायां बलिः पुत्रोऽभवत् ॥ १६ ॥ बाणेति ॥ ततो बलेः सकाशात् अशनायां भार्यायां बाणो ज्येष्ठो यस्मिंस्तत् पुत्रशतमभवत् । सुश्लोक्यः तस्य बलेरप्यनुभावः पश्चादष्टमस्कन्ध एवाभिधास्यते ॥ १७ ॥ बाण इति ॥ बाणो गिरिशमाराध्य तस्य गणेषु पार्षदादिषु मुख्यतां प्राधान्यं लेभे तस्मिंस्तत् कृपाधिक्यं किं वक्तव्यं पुरपालकः सन् भगवान् शिवोऽद्यापि यस्य पार्श्वे आस्ते ॥ १८ ॥ मरुत इति ॥ दितेः पुत्रा मरुतः नवाधिकाः चत्वारिंशत्पुत्रा आसन् ते अप्रजाः अप्रजसः आसन् । असिजभाव आर्षः । इन्द्रेण सात्मतां समानस्वभावतां देवत्वं नीताश्चासन् ॥ १९ ॥ कथमिति ॥ हे गुरो ते मरुतः औत्पत्तिकं स्वभावसिद्धम् आसुरं भावं क्रौर्यवैरादिकम् अपोह्य त्यक्त्वा कथं स्थिताः तत्तस्येन्द्रस्य च तैः किं साधु कृतमुपकारः कृतः । हि यस्मात्साधुकरणादिन्द्रेण ते सात्म्यं प्रापिताः॥२०॥ इम इति ॥ हे ब्रह्मन् हे भगवन् मया सह इमे समस्ता ऋषयोऽपि

अनुह्लादस्य सूर्म्यायां बाष्कलो महिषस्तथा ॥ विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ॥ १६ ॥ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ॥ तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥ बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम् ॥ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ॥ त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥ राजोवाच ॥ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ॥ इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः ॥ २० ॥ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ॥ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥ सूत उवाच ॥ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्याहृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः ॥ २२॥ श्रीशुक उवाच ॥ हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥२३॥ कदा नु भ्रातृहन्तारमिन्द्रियाराममुल्बणम् ॥ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥ २४ ॥

एतस्य पृष्टस्य परिज्ञानाय श्रद्दधते इच्छन्ति । "श्रद्धास्तिक्येऽभिलाषे च" इति हैमः । तत्तस्मान्नोऽस्माकमेतद्व्याख्यातुमर्हसि ॥ २१ ॥ तदिति ॥ सत्रमयनमाश्रयो यस्येति तथा तत्सम्बोधनं हे सत्रायण शौनक आदृतं सादरम् अल्पं मिताक्षरम् अर्थवत्सर्वोपकारकं विष्णुरातस्यतद्वचो निशम्य सर्वदर्शनः सर्वज्ञो बादरायणिः श्रीशुकः निभृतेन आनन्दपूर्णेन चेतसा तं सभाजयन् सत्कुर्वन् जगाद उत्तरं दत्तवान् । सभाजनं तु ग्रन्थाद्बहिरेव ॥ २२ ॥ हतेति ॥ शक्रस्य पार्ष्णिग्राहेण पृष्ठतः सहायेन विष्णुना हतौ पुत्रौ हिरण्यकशिपुहिरण्याक्षौ यस्याः सा दितिः शोकेन दीप्तेन प्रज्वलितेन मन्युना ज्वलन्ती पर्यचिन्तयत् ॥ २३ ॥ कदा न्विति ॥ इन्द्रियारामं पापाचारं भ्रातरौ हिरण्यकशिपुहिरण्याक्षौ तयोर्विष्णुद्वारा हन्तारमत एव उल्बणं निर्दयहृदयम् इन्द्रं घातयित्वा मारयित्वाहं कदा नु सुखं शये सुखेन निद्रां कुर्यामित्यचिन्तयदित्यनुषङ्गः॥ २४ ॥

कृमीति ॥ ईशः प्रभुरित्यभिहितस्यापि यस्य पूर्वेषां राज्ञां देहस्य मरणानन्तरं बहुदिनावस्थितस्य कृमय इति श्वादिभिर्भक्षितस्य तु विडिति दग्धस्य तु भस्मेति संज्ञासीत् तत्कृते तस्य देहस्यार्थे यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद न वेदैव यतो भूतद्रोहात्तस्यैव निरयः नरकपातो भवति ॥ २५ ॥ आशासानस्येति ॥ इदं देहादिकं ध्रुवं नित्यमाशासानस्य मन्यमानस्य अत एवोन्नद्धमुच्छृङ्खलं चेतो यस्य तस्येन्द्रस्य यो मदस्त्रिलोकेशाभिमानस्तस्य शोषकः सुतो येन हेतुना मे मम भूयात् भवेत् स हेतुः क इत्यचिन्तयत् ॥ २६ ॥ इतीति अर्द्धम् ॥ इति भावेन इन्द्रमारकपुत्रलाभाभिप्रायेण सा दितिरसकृत् निरन्तरं भर्तुः कश्यपस्य प्रियं चचार ॥२७॥ शुश्रूषयेति सार्द्धम् ॥ हे राजन् भावज्ञा अभिप्रायज्ञा सा शुश्रूषया सेवया अनुरागेण प्रेम्णा प्रश्रयेण नम्रीभावेन दमेन स्वेन्द्रियनिग्रहेण च परमया भक्त्या आराध्यत्वबुद्ध्या मनोज्ञैर्मनोहरैः वल्गुभाषितैः मधुरवचनैश्च सुस्मितेन सहितैरपाङ्गवीक्षणैः कटाक्षनिरीक्षणैश्च भर्तुर्मनो जग्राह वशीचकार ॥ २८ ॥ एवमिति ॥ विद्वानपि कश्यपः विदग्धया कपटाचारनिपुणया स्त्रिया

कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥२५॥ आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ॥ मदशोषक इन्द्रस्य भूयाद्येन सुतो हि मे ॥ २६ ॥ इति भावेन सा भर्तुराचचारासकृत्प्रियम् ॥ २७ ॥ शुश्रूषयानुरागेण प्रश्रयेण दमेन च ॥ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनो जग्राह भावज्ञा सुस्मितापाङ्गवीक्षणैः ॥ २८ ॥ एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ॥ बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥२९॥ विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः ॥ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता ॥३०॥ एवं शुश्रूषितस्तात भगवान्कश्यपः स्त्रिया ॥ प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥३१॥ कश्यप उवाच ॥ वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते ॥ स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥ पतिरेव हि नारीणां दैवतं परमं स्मृतम् ॥ ३३ ॥ मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ स एव देवतालिङ्गैर्नामरूपविकल्पितैः ॥ इज्यते भगवान्पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥

एवं शुश्रूषादिभिः जडीभूतो मोहितोऽत एव विवशः स्त्रीपरतन्त्रश्च सन् बाढं तव मनोरथं पूरयिष्यामीति यदाह तत् योषिति चित्रमाश्चर्यं न भवति ॥ २९ ॥ विलोक्येति ॥ आदौ सृष्टिप्रारम्भसमये भूतानि प्राणिनः एकान्तभूतानि निःसङ्गानि विलोक्य तेषां मोहार्थं प्रजापतिः मैथुनेन सृष्टिवृद्ध्यर्थं स्वदेहार्द्धं स्त्रियं चक्रे । यया स्त्रिया पुंसां मतिर्हृता स्नेहपाशेन सृष्ट्युन्मुखी कृता ॥३०॥ एवमिति ॥ हे तात भगवान् कश्यपः स्त्रिया एवं शुश्रूषितः सन् परमप्रीतो जातोऽतः प्रहस्य दितिमभिनन्द्य संश्लाघ्य चाह स्म ॥ ३१ ॥ वरमिति ॥ हे वामोरु हे अनिन्दिते अहं ते तव प्रीतः अतस्त्वं वरं वरय भर्त्तरि सुप्रीते सति स्त्रियाः कः काम इह चकारात्परत्र च अगमः दुर्लभः ॥३२॥ पतिरिति अर्द्धम् ॥ नारीणां पतिरेव परमं दैवतं स्मृतम् ॥३३॥ मानस इति सार्द्धम् ॥ यः सर्वभूतानां मानसः मनसि स्थितो वासुदेवो नियमनादिक्रीडापरः श्रियः पतिरस्ति नाम इन्द्रादिरूपं वज्र-

हस्तादि ताभ्यां विविधं कल्पितैर्देवतानां लिङ्गैर्मूर्तिभिर्यथा स एव भगवान् पुंभिः कर्मभिरिज्यते तथा स्त्रीभिश्च पतिरूपधृक् स एवेज्यते । धृजेः क्विप् ॥ ३४ ॥ तस्मादिति ॥ हे सुमध्यमे यस्मात्पतिरूपेण भगवानेव वर्त्तते तस्मात् श्रेयस्कामा विवेकवत्यो नार्यः पतिव्रतास्तदेकश्रवणचित्ताः सत्योऽनन्यभावेन परमया भक्त्या आत्मानं सर्वात्मानमीश्वरं पतिं पतिरूपं यजन्ते पूजयन्ति ॥ ३५॥ सोऽहमिति ॥ हे भद्रे शुभाचारे यस्मात् ईदृग्भावेन अलौकिकप्रकारेण भक्तितः प्रेम्णा त्वयाहं पतिरूपो भगवानर्चितस्तत्तस्मादसतीनां पतिभक्तिरहितानां सुदुर्लभमपि ते कामं मनोरथं सम्पादये ॥ ३६ ॥ वरद इति ॥ हे ब्रह्मन् यदि त्वं मे वरदोऽसि वरं ददासि तदा अपुत्रा मृतपुत्रा अहम् इन्द्रहणमिन्द्रहन्तारममृत्युं स्वयं मृत्युशून्यं पुत्रं वृणे । तत्रेन्द्रापराधमाह । येनेन्द्रेण विष्णुना सहायभूतेन मे सुतौ घातितौ अतोऽहं मृतपुत्रेति ॥ ३७ ॥ निशम्येति ॥ तस्यादितेर्वचो निशम्य श्रुत्वा तन्मनोरथपूर्तेरिन्द्रमरणाधीनत्वं ज्ञात्वा विप्रः कश्यपो विमनाः खिन्नमनाः सन् पर्यतप्यत । अहो अद्य मे सुमहानधर्मः इन्द्रहत्यारूपः समुपस्थितः ॥ ३८ ॥

तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे ॥यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥३५॥ सोऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः॥ तत्ते संपादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥ दितिरुवाच ॥ वरदो यदि मे ब्रह्मन्पुत्रमिन्द्रहणं वृणे ॥ अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥ निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ॥ अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥३८॥ अहो अद्येन्द्रियारामो योषिन्मय्येह मायया ॥ गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥ कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः ॥ धिङ् मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः ॥४०॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ॥ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥ न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ॥ पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥ ४२ ॥

अहो इति ॥ ध्रुवं निश्चितमद्यैव शीघ्रमेव इन्द्रियारामः विषयभोगपरः योषिन्मय्या भगवन्मायया इहास्मिन्नवसरे गृहीतचेताः वशीकृतचित्तः कृपणः धैर्यादिरहितः अहं नरके पतिष्ये । तङार्षः ॥ ३९ ॥ क इति ॥ स्वभावं मोहकत्वमनुवर्त्तन्त्या शता आर्षः । योषितः इह मद्विषये कोऽतिक्रमः कोऽपराधः । बत निश्चितं स्वार्थे अबुधमनभिज्ञं मामेव धिक् त्ववधारणे । यस्मादहमेवाजितेन्द्रिय इत्यर्थः ॥ ४०॥ शरदिति ॥ वक्त्रं शरत्पद्मस्येवोत्सवो विकासो यस्मिंस्तथाभूतं वचश्च श्रवणयोरमृतमिव हर्षजनकं हृदयं चित्तं तु क्षुरधाराभं परविघातेऽतितीक्ष्णम् अतः स्त्रीणां चेष्टितं को वेद ॥ ४१ ॥ न हीति ॥ स्वस्याशिषा कामनया आत्मनाम् आत्मवत्प्रेष्ठत्वेन प्रतीयमानानां ।यद्वा । स्वस्य आशिषैवात्मा यत्नो यासां ताः नतु पत्यादिसुखापेक्षयेति भावः । अलुक् समासः । आशिषाशब्दष्टाबन्तो वा । तासां स्त्रीणामञ्जसा साक्षात् स्वप्रयोजनरूपमुपाधिं विना कश्चिदपि प्रियो न भवति अत एवार्थे निमित्ते सति पत्यादीन् घ्नन्ति घातयन्ति च ॥ ४२ ॥

प्रतीति ॥ वरं ददामीति यन्मया प्रतिश्रुतं तन्मम वचो मृषा न भवेत् । इन्द्रोऽपि त्रिलोकेशत्वाद्देवत्वात् पुत्रत्वाच्च वधं नार्हतीति तद्वधश्च न भवेदिति द्वयमपेक्षितम् । तत्रेदमुपक-ल्पते योग्यं भवति । इदमिति मानसिको विचारस्तथा हि वैष्णवं व्रतं तावदुपदेक्ष्यामि तेनैवास्याश्चित्तशुद्धौ सत्यामिन्द्रे क्रोधो निवर्तिष्यते तत्प्रभावेण पुत्रश्चामर्त्यो भविष्यति दुष्फलदानानर्हत्वेन पुत्रश्चेन्द्रघाती न भविष्यति किंतु वरप्रार्थनप्रदानवाक्ययोर्हन्तिधातुप्रयोगात्तस्य गत्यर्थत्वेनापि निर्वाहादिन्द्रानुगो भविष्यति ॥४३॥ इतीति ॥ हे कुरुनन्दन इत्येवं सञ्चिन्त्य भगवान् मारीचः कश्यपस्तस्याः दुर्भावानुसन्धानेन किञ्चित्कुपितः स्वस्य मोहेन तत्तारवश्यानुसन्धानेनात्मानं विगर्हयंस्तामुवाच ॥४४॥ पुत्र इति ॥ हे भद्रे वस्तुतस्तु हे अभद्रे दुःसंकल्पे संवत्सरपर्यन्तमिदं व्रतं यद्यज्ञः यथावत् धारयिष्यसि तर्हि ते पुत्र इन्द्रहा इन्द्रस्य हन्ता अदेवानां बान्धवश्च भविता इति दितेः बोधयितुमिष्टोऽर्थः । किञ्चिद्वैगुण्ये च व्रतस्य वैष्णवत्वेन सर्वथा वैफल्यासंभवात् इन्द्रानुगः देवानां बान्धवः इन्द्रपक्षपाती भविष्यति ॥ ४५ ॥ धारयिष्य इति ॥ हे ब्रह्मन् व्रतमहं धारयिष्ये

प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ॥ वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥ इति संचिन्त्य भगवान्मारीचः कुरुनन्दन ॥ उवाच किंचित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥ कश्यप उवाच ॥ पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः ॥ संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥ दितिरुवाच ॥ धारयिष्ये व्रतं ब्रह्मन्ब्रूहि कार्याणि यानि मे ॥ यानि चेह निषिद्धानि न व्रतं घ्नन्ति यानि तु ॥ ४६ ॥ कश्यप उवाच ॥ न हिंस्याद्भूतजातानि न शपेन्नानृतं वदेत् ॥ न च्छिन्द्यान्नखरोमाणि न स्पृशेद्यदमङ्गलम् ॥ ४७ ॥ नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ॥ न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥४८ ॥ नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् ॥ भुञ्जीतोदक्यया दृष्टं पिबेदञ्जलिना त्वपः ॥ ४९ ॥ नोच्छिष्टाऽस्पृष्टसलिला संध्यायां मुक्तमूर्धजा ॥ अनर्चिता संयतवागसंवीता बहिश्चरेत् ॥ ५० ॥

तत्र यानि कार्याण्यावश्यकानि यानि चेह व्रते निषिद्धानि उत अपि यानि व्रतं न घ्नन्ति नावश्यकानि न निषिद्धानि किन्त्वभ्यनुज्ञातानि तानि सर्वाण्यपि मे ब्रूहि ॥ ४६ ॥ नेति ॥ भूतजातानि प्राणिसमूहाः तेषु कञ्चिदपि न हिंस्यात् इति प्रथम एवेन्द्रवधाशङ्का निषिद्धा । न शपेन्नाक्रोशेत् अनृतं न वदेत् नखलोमानि च न च्छिन्द्यात् यदमङ्गलं कपालास्थ्यादिकं तन्न स्पृशेत् ॥४७॥ नेति॥ अप्सु प्रविश्य न स्नायात् न कुप्येत दुर्जनैः साकं न संभाषेत अधौतं वासो न वसीत न परिदध्यात् विधृतां पूर्वधृतां स्रजं पुनर्न धारयेत्॥४८॥नोच्छिष्टमिति ॥ उच्छिष्टं न भुञ्जीत । चण्डिकान्नं भद्रकाल्यादिनिवेदितमन्नं पिपीलिकादिदूषितमन्नं वा न भुञ्जीत । "चण्डिका स्यात्पिपीलिका" इत्यभिधा-नात् । सामिषं मांससहितं वृषलाहृतं शूद्रानीतमन्नं न भुञ्जीत। उदक्यया रजस्वलया दृष्टमन्नं न भुञ्जीत। अञ्जलिना त्वपो न पिबेत् ॥४९॥ नोच्छिष्टेति ॥ उच्छिष्टा उच्छिष्ट-

चरेत् ॥ ५० ॥ नाधौतेति ॥ न शयीतेत्यष्टस्वप्यन्वेति । अप्रयता अशुचिः अपराक् पश्चिमशिराः अन्यैः स्त्रीजनैरपि सह । स्पष्टं शेषम्॥५१॥धौतेति ॥ धौतवासाः शुचिः सर्वमङ्गलसंयुता गृहीतपूजोपकरणाप्रातराशात् प्रथमभोजनात् प्राङ् नित्यं गोविप्रादीन् पूजयेत् ॥ ५२ ॥ स्त्रिय इति ॥ वीरवतीः जीवद्भर्तृकाः स्त्रियः स्रग्गन्धाद्यैरर्चेत् । पतिं च आर्च्य आ सर्वप्रकारैः संपूज्य उपतिष्ठेत स्तुवीत । कोष्ठगतं कुक्ष्यन्तरगतं च तं पतिं ध्यायेत्॥५३॥सांवत्सरमिति॥सांवत्सरम् संवत्सरेऽनुष्ठेयं पुंसवनं पुत्रोत्पत्तिकरम् इदं व्रतम् अविप्लुतं निर्विघ्नं धारयिष्यसि तदा तुभ्यं तव इन्द्रहा सुतो भविता अन्यथा त्विन्द्रबान्धवो भविष्यतीति सूचितम् ॥ ५४ ॥ बाढमिति ॥ हे राजन् सा दितिः बाढमेवं धारयिष्यामीत्यभिप्रेत्य अङ्गीकृत्य महामनाः हृष्टमनाः सती काश्यपं गर्भं वीर्यमाधत्त अञ्जो यथावत्प्रयत्नेन व्रतं च दधार ॥ ५५ ॥ मातृष्वसुरिति ॥ हे मानद

नाधौतपादाऽप्रयता नार्द्रपान्नी उदक्शिराः ॥ शयीत नापराङ् नान्यैर्न नग्ना न च संध्ययोः ॥ ५१ ॥ धौतवासाः शुचिर्नित्यं सर्वमङ्गलसंयुता ॥
पूजयेत्प्रातराशात्प्राग्गोविप्राञ्छ्रियमच्युतम् ॥ ५२ ॥ स्त्रियो वीरवतीश्चार्चेत्स्रग्गन्धबलिमण्डनैः ॥ पतिं चार्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम्
॥ ५३ ॥ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ॥ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥५४॥ बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः॥
काश्यपं गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥ मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ॥ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ॥५६॥
नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ॥ पत्राङ्कुरमृदापश्च काले काल उपाहरत् ॥ ५७॥ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ॥ प्रेप्सुः
पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥५८॥ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ॥ चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥५९॥
एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ॥ अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥

राजन् कविः कार्यसाधनकुशलः इन्द्रः स्वमातृष्वसुर्दित्या अभिप्रायमाज्ञाय व्रते विघ्नेन स्वकार्यसिद्ध्यर्थं तामाश्रमस्थां व्रतस्थामदितिं शुश्रूषणेन सेवया सह नित्यं पर्यचरन् तदपेक्षितं सर्वं सम्पादितवान् ॥ ५६ ॥ नित्यमिति ॥ सुमनसः पुष्पाणि । स्पष्टमन्यत् ॥ ५७ ॥ एवमिति ॥ हे नृप हरिरिन्द्रः व्रतस्थायाः तस्या व्रतच्छिद्रं व्रतविघ्नस्यावसरं प्रेप्सुः प्राप्तुमिच्छुः जिह्मः अन्तःकुटिलोऽप्युपरि साधुवेषश्च संस्तामेवं पर्यचरदित्यन्वयः । जिह्मत्वे दृष्टान्तः । यथा मृगहा लुब्धको मृगवञ्चनाय मृगाकृतिर्भवति तथा परिचारकवेषो बभूव ॥५८॥ नेति ॥ हे नृप एवं तत्परः छिद्रान्वेषणपरोऽपि शक्रः यदा व्रतच्छिद्रं नाध्यगच्छत् न प्राप तदा इहास्मिन् समये मे शिवं कार्यं केन हेतुना स्यादिति तीव्रां चिन्तां गतः ॥५९॥ एकदेति ॥ व्रतेन कर्शिता उच्छिष्टा सती विधिना प्रारब्धेन मोहिता चेति अतः अस्पृष्टवारिश्चासावधौताङ्घ्रिश्च सा सन्ध्यायां सुष्वाप ॥६०॥

लब्ध्वेति ॥ योगेशः अणिमादिसिद्धिमान् शक्रः तदन्तरमवसरं लब्ध्वा निद्रयापहृतं चेतो यस्यास्तस्या दितेरुदरं योगमायया परकायप्रवेशाख्यसिद्ध्या प्रविष्टः ॥ ६१ ॥ चकर्तेति ॥ उदरं प्रविष्टः इन्द्रः कनकवत्प्रभा कान्तिर्यस्य तं गर्भं वज्रेण सप्तधा चकर्त्त चिच्छेद । एवं छेदने कृतेऽपि रुदन्तं गर्भं मा रोदीरित्युपलालयन्निव पुनस्तानेकैकं सप्तधा चकर्त्त ॥ ६२ ॥ ते इति ॥ हे नृप ते सर्वे गर्भाः पीड्यमाना अतः प्राञ्जलयः सन्तस्तमिन्द्रमूचुः । हे इन्द्र वयं तु मरुतस्तव भ्रातरः अतो नोऽस्मान् त्वं किं जिघांससि हन्तुमिच्छसि ॥ ६३ ॥ मा भैष्टेति ॥ एवं तैरुक्तः कौशिक इन्द्रोऽपि तान् मरुतां गणान् अनन्यभावान् अतिस्नेहवतः आत्मनः स्वस्य पार्षदान् आज्ञाकारिणो निश्चित्य यदि यूयं मह्यं मम भ्रातरस्तदा मा भैष्ट भयं मा कुरुतेत्याह स्म ॥ ६४ ॥ नेति ॥ बहुधा कुलिशेन क्षुण्णः छिन्नः अपि दितेर्गर्भः श्रीनिवासस्य विष्णोः अनुकम्पया कृपया न ममार द्रौण्यस्त्रेण दग्धोऽपि भवान् यथा न ममार तथेत्यर्थः । अत्र यथा यथेन्द्रेण गर्भश्छिन्नस्तथा तथा तत्र भगवदिच्छया जीवाः प्रविष्टाः । यद्वैकस्य

लब्ध्वा तदन्तरं शक्रो निद्राऽपहृतचेतसः ॥ दितेः प्रविष्ट उदरं योगेशो योगमायया ॥६१॥ चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥ रुदन्तं सप्तधैकैकं मा रोदीरिति तान्पुनः ॥ ६२ ॥ ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप ॥ नो जिघांससि किं इन्द्र भ्रातरो मरुतस्तव ॥६३॥ मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ॥ अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥ न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ॥ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥ सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यताम् ॥ संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥ सजूरिन्द्रेण पञ्चाशद्देवास्ते मरुतोऽभवन् ॥ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७ ॥ दितिरुत्थाय ददृशे कुमाराननलप्रभान् ॥ इन्द्रेण सहितान् देवी पर्यतुष्यदनिन्दिता ॥६८॥ अथेन्द्रमाह ताताहमादित्यानां भयावहम् ॥ अपत्यमिच्छन्त्यचरं व्रतमेतत्सुदुष्करम् ॥६९॥

जीवस्य योगिवत्सर्वत्र प्रवेशो ज्ञेयः । भगवता सर्वं कर्त्तुं शक्यत्वात् ॥ ६५ ॥ सकृदिति युग्मम् ॥ यमादिपुरुषं भगवन्तं सकृदपि इष्ट्वा पुरुषस्तत्साम्यतां समतां स्वार्थे ष्यञन्तात्समशब्दात्तल । सात्मतामिति वा पाठः । याति स हरिर्यस्माद्दित्या किञ्चिदूनं संवत्सरपर्यन्तमर्चितस्तस्मात्ते मरुतः इन्द्रेण सजूः सह पञ्चाशद्देवा अभवन् । हरिणा कृपया तेषां मातृप्रयुक्तं दोषं दैत्यत्वमपोह्य दूरीकृत्य सोमपा अमृतपातारः कृता इति न चित्रम् ॥ ६६ ॥ ६७ ॥ दितिरिति ॥ अनिन्दिता भगवद्व्रतधारणेन शुद्धान्तःकरणा देवी दितिः उत्थाय अनलप्रभान् अतितेजस्विन इन्द्रेण सहितान् इन्द्रेण सह कृतमैत्रान् कुमारान् ददृशे । तङार्षः । ततः पर्यतुष्यच्च ॥ ६८ ॥ अथेति ॥ अथ दितिरिन्द्रमाह स्म हे तात आदित्यानां युष्माकं भयावहं भयङ्करमपत्यमिच्छन्त्येतत्सुदुष्करं व्रतमहमचरं कृतवती ॥ ६९ ॥

एक इति ॥ तत्र एकः पुत्रः संकल्पितः सप्त सप्त एकोनपञ्चाशत् पुत्राः कथमभवन् । हे पुत्र यदि ते तवैतद्विदितं तदा सत्यं यत्तत्कथय मृषा मा कथय ॥ ७० ॥ दित्या निष्कपटमुक्ते इन्द्रोऽपि निष्कपटमाह स्म । अम्बेति हे अम्ब अर्थे बुद्धिर्यस्य सः न धर्मं वेत्ति अनुसन्धत्ते तथाभूतः अहं ते तव व्यवसितं निश्चितमुपधार्य ज्ञात्वा तवान्तिकमागतः लब्धमन्तरमवसरो येन सः तेऽन्तः प्रविश्य गर्भमच्छिदम् ॥ ७१ ॥ कृत्त इति ॥ प्रथमं मे मया गर्भः सप्तधा कृत्तः तदा सप्त कुमारका आसन् । ते सप्तापि चैकैकशः सप्तधा वृक्णाः छिन्नास्तथापि न मम्रिरे । तद्गार्षः ॥ ७२ ॥ तत इति ॥ तत्तेषां जीवने परमाश्चर्यं वीक्ष्य ततोऽनन्तरं महापुरुषस्य पूजायाः अनुषङ्गिणी अवान्त-

एकः सङ्कल्पितः पुत्रः सप्तसप्ताभवन्कथम् ॥ यदि ते विदितं पुत्र सत्यं कथय मा मृषा ॥ ७० ॥ इन्द्र उवाच ॥ अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ॥ लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥ ७१ ॥ कृत्तो मे सप्तधा गर्भ आसन्सप्त कुमारकाः ॥ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥ ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ॥ महापुरुषपूजायाः सिद्धिः काप्यनुषङ्गिणी ॥७३ ॥ आराधनं भगवत ईहमाना निराशिषः ॥ ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् ॥ को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५॥ तदिदं मम दौर्जन्यं बालिशस्य महीयसि ॥ क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥ श्रीशुक उवाच ॥ इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ॥ मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ मङ्गलं मरुतां जन्म किं भूयः कथयामि ते ॥ ७८ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे मरुद्गणजन्मकथनं नाम अष्टादशोऽध्यायः ॥ १८ ॥

रफलभूता कापि सिद्धिरियमिति मयाध्यवसितं निश्चितम् ॥७३॥ आराधनमिति ॥ ये तु निराशिषः निष्कामाः सन्तो भगवत आराधनमीहमानाः कुर्वन्तस्ततः परं मोक्षमपि फलं नेच्छन्ति त एव स्वार्थकुशलाः निपुणाः शास्त्रे स्मृताः ॥ ७४ ॥ आराध्येति ॥ स्वात्मानं जगदीश्वरमात्मप्रदं देवं भगवन्तमाराध्य गुणस्पर्शं विषयभोगं को बुधो वृणीते । यत् यः विषयभोगो नरके श्वशूकरादिजन्मन्यपि स्यात् ॥ ७५ ॥ तदिति ॥ हे महीयसि महत्तमे हे मातः बालिशस्य अज्ञस्य मम यत्तु दौर्जन्यमपराधस्तत्त्वं क्षन्तुमर्हसि गर्भः मृतः सन् उत्थित एतदपि दिष्ट्या भद्रमेव जातम् ॥ ७६ ॥ इन्द्र इति द्वयम् ॥ स्पष्टम् ॥ ७७ ॥ ७८ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठस्याष्टादशे निरमादिमाम् ॥ १८ ॥

ऊनविंशे मरुज्जन्महेतुव्रतविधिं मुनिः ॥ जगद्धितायाकथयत्तत्र श्लोकाः [31] कुंवह्वयः ॥ उवाचद्वयमङ्क्यूनाः [36] पञ्चत्रिंशदनुष्टुभः ॥१९॥ व्रतमिति ॥ हे ब्रह्मन् भवता यत् पुंसवनं व्रतमुदीरितं निरूपितं तस्य प्रकारविशेषं वेदितुं तत्वतो ज्ञातुमिच्छामि येन साङ्गेन व्रतेन विष्णुः प्रसीदति ॥ १ ॥ शुक्ले इति सार्द्धद्वयम् ॥ भर्तुरनुज्ञया आज्ञया मरुतां जन्म व्रतारम्भात्पूर्वं निशम्य श्रुत्वा ब्राह्मणाननुमन्त्र्य पृष्ट्वा च । योषित् मार्गशिरे मासे" पिण्डं दद्याद्गयाशिरे।" इत्यादावदन्तोऽपि शिरशब्दः आर्षो वा । शुक्ले पक्षे आदितः प्रतिपदि सार्वकामिकं सर्वकामप्रदमिदं व्रतमारभेत ॥ २ ॥ स्नात्वेति ॥ शुक्लाः धौताः दन्ताः यस्याः सा शुक्लदती स्नात्वा शुक्ले अम्बरे वस्त्रे वसीत तथाऽलंकृता सती प्रातराशात् प्रथमभोजनात् प्राक् श्रिया सह भगवन्तं पूजयेत् ॥ ३ ॥ पूजानन्तरं नमस्कुर्यात्तन्मन्त्रानाह—अलमिति ॥ हे पूर्णकाम ते तुभ्यमलं पर्याप्तं नान्यैः किंचित्कार्यमस्ति अतः निरपेक्षाय ते तुभ्यं नमोऽस्तु । महाविभूतिर्लक्ष्मीस्तत्पतये सकलाः सिद्धयः अणिमाद्या यस्मिंस्तस्मै नमः ॥ ४ ॥ यथेति ॥ हे ईश यतस्त्वं यथा यथावत्साकल्येन कृपया

राजोवाच ॥ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम् ॥ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥ श्रीशुक उवाच ॥ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ॥ आरभेत व्रतमिदं सार्वकामिकमादितः ॥ निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ॥ २ ॥ स्नात्वा शुक्लदती शुक्ले वसीताऽलंकृताऽम्बरे ॥ पूजयेत्प्रातराशात्प्राग्भगवन्तं श्रिया सह ॥ ३ ॥ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ॥ महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥ यथा त्वं कृपया भूत्या तेजसा महिनौजसा ॥ जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान्प्रभुः ॥ ५ ॥ विष्णुपत्नि महामाये महापुरुषलक्षणे ॥ प्रीयतां मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपाहराणीनि ॥ ७ ॥ अनेनाहरहर्मन्त्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगन्धपुष्पधूपदीपोपहाराद्युपचारांश्च समाहिता उपाचरेत् ॥ ८ ॥

भूत्या श्रिया तेजसा ऐश्वर्येण महिना महिम्ना असङ्गत्वादिना ओजसा वीर्येण अन्यैश्च सत्यत्वानन्दत्वादिभिः सर्वैर्गुणैर्जुष्टः सेवितः परिपूर्णस्ततो हेतोर्भगवान् प्रभुः सर्वथा समर्थः सर्वपूज्यश्चासि ॥५॥ लक्ष्मीं नमस्यति—विष्ण्विति ॥ हे विष्णोः पत्नि हे महामाये महापुरुषस्य पुरुषोत्तमस्य भगवत इव लक्षणानि निरपेक्षत्वादीनि यस्याः हे महाभागे मे मम प्रीयेथाः । हे लोकमातस्ते नमोऽस्तु॥६॥पूजामन्त्रमाह—ॐ नम इति ॥ भगवते ऐश्वर्यादिगुणपूर्णाय अत एव महापुरुषाय पुरुषोत्तमाय अत एव महान् अनुभावः प्रभावो यस्य तस्मै अत एव महाविभूतिर्लक्ष्मीस्तस्याः पतये नमः । महाविभूतिभिरिति बहुवचनं । विष्वक्सेनादिपार्षदानामुपलक्षणार्थं लक्ष्म्यादिसहिताय तुभ्यं बलिमुपहराणि समर्पयाणि । इतीति मन्त्रसमाप्तिद्योतकः ॥७॥ अनेनेति ॥ समाहिता एकाग्रचित्ता सती अनेन मन्त्रेण विष्णोरावाहनादि अहरहः प्रतिदिनम् उपाहरेत् समर्पयेत्॥८॥

हविरिति अर्द्धम् ॥ हविःशेषमुपहारावशिष्टमनले द्वादशाहुतीर्जुहुयात् ॥ ९ ॥ होममन्त्रमाह—ॐ इति ॥ १० ॥ श्रियमिति ॥ प्रभवौ उत्पादनसमर्थौ। स्पष्टमन्यत् ॥ ११ ॥ प्रणमेदिति ॥ स्पष्टम् ॥ १२ ॥ युवामिति॥युवां विश्वस्य सर्वस्य जगतः विभू स्वामिनौ परं मुख्यं कारणं च युवामेव इयं लक्ष्मीरेव सूक्ष्मा दुर्ज्ञेया प्रकृतिः इयमेव दुरत्यया अनुल्लङ्घ्या मायारूपा शक्तिः ॥ १३ ॥ तस्या इति ॥ तस्या प्रकृतेरधीश्वरः नियन्ता परः पुरुषः साक्षात्त्वमेव त्वं सर्वयज्ञमूर्तिः इयं लक्ष्मीः इज्या यज्ञनिवर्त्तकः पुरुषव्यापारो भावनाख्यः इयं लौकिकी क्रिया भवान् फलभुग् जीवः ॥ १४ ॥ गुणेति ॥ इयं देवी गुणानां व्यक्तिः भवांश्च गुणानां व्यञ्जकः कालः गुणभुक् विराट् त्वं हि सर्वशरीरी सर्वजीवरूपः आत्मा श्रीश्च शरीरेन्द्रियाशयरूपा स्त्रीत्वमार्षम् ॥१५॥ नामेति अर्द्धम् ॥ नामरूपे भगवती लक्ष्मीः प्रत्ययो नामरूपयोः प्रकाशः अपाश्रयः तयोराधारश्च त्वम्

हविःशेषं तु जुहुयादनले द्वादशाहुतीः ॥९॥ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥ १० ॥ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ॥ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसंपदः ॥११॥ प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा ॥ दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥१२॥ युवां तु विश्वस्य विभू जगतः कारणं परम् ॥ इयं हि प्रकृतिः सूक्ष्मा माया शक्तिर्दुरत्यया ॥१३॥ तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः ॥ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥१४॥ गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् ॥ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशया ॥ १५ ॥ नामरूपे भगवति प्रत्ययस्त्वमपाश्रयः ॥ १६ ॥ यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ॥ तथा म उत्तमश्लोक सन्तु सत्या महाशिषः ॥१७॥ इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ॥ तन्निःसार्योपहरणं दत्त्वाऽऽचमनमर्चयेत् ॥ १८ ॥ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ॥१९॥ यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ पतिं च परया भक्त्या महापुरुषचेतसा ॥ २० ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः ॥ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ २१ ॥

॥ १६ ॥ यथेति ॥ यथा युवां त्रिलोकस्य वरप्रदौ परमेष्ठिनौ परमेश्वरौ च तथा हे उत्तमश्लोक मे मम महाशिषः महान्तोऽपि मनोरथाः सत्याः सन्तु ॥ १७ ॥ इतीति ॥ वरदं श्रीनिवासं हरिं श्रिया सह इत्यभिष्टूय दैर्घ्यमार्षं ततः तुगभावः । तदुपहरणं नैवेद्यनिर्माल्यादि निःसार्य अपसारणं कृत्वाऽऽचमनं दत्त्वा पुनरर्चयेत् ॥ १८ ॥ तत इत्यर्द्धम् ॥ स्तुवीत पुनः स्तुवीत स्पष्टम् ॥ १९ ॥ यज्ञेति ॥ पूर्वार्द्धं स्पष्टम् । पतिं महापुरुषचेतसा परमेश्वरबुद्ध्या अभ्यर्चयेदित्यनुषङ्गः ॥ २० ॥ प्रियैरिति ॥ प्रीतैस्तैः प्रियैः सह तत्प्रियसम्पादनपूर्वकं पतिमुपनमेत् पतिश्च प्रेमशीलः सन् पत्न्याः उच्चावचानि सर्वाणि कर्माणि स्वयं बिभृयात्तदनुकूलतया पूजादिषु साहाय्यं कुर्यात् ॥ २१ ॥

कृतमिति ॥ यतो दम्पत्योर्मध्य एकतरेणापि कृतमुभयोरपि फलकारणं भवति तस्मात्तत्पत्न्यामनर्हायां पतिः स्वयं समाहितः सन्नेतत्कुर्यात् ॥२२॥ विष्णोरिति ॥ इदं विष्णोर्व्रतं विभ्रत्कथंचन कामक्रोधादिवशादपि न विहन्यात् । पूर्वाध्यायोक्तानां निषेधानामुपलक्षणमिदं विप्रादीन् स्रगादिभिर्भक्त्या अर्चेदित्यपकर्षः ॥ २३ ॥ अर्चेदित्यर्द्धम् ॥ एवं नियममास्थितः सन् देवं भक्त्या अहरहरर्चेत् ॥ २४ ॥ उद्वास्येति ॥ देवं भगवन्तं स्वे धाम्नि उद्वास्य संहारमुद्रया विसर्ज्य तन्निवेदितमग्रत इति ल्यब्लोपे पञ्चमी । अग्रभागं यथोचितं विभज्य तत आत्मविशुद्ध्यर्थं तथा सर्वकामानामृद्धये स्वयमद्यात् ॥२५॥ एतेनेति॥ साध्वी एतेन पूजाविधिना द्वादशमासात्मकं हायनं संवत्सरं यस्मिन् वर्षे व्रतारम्भात्समप्यन्तमधिमासो न पतति तमित्यर्थः॥ नीत्वा अथो कार्तिके चरमेऽहनि पूर्णमास्यामुपचरेत् उपवसेत्॥२६॥ श्वोभूत इति सार्द्धम्॥श्वोभूते कृष्णप्रतिपदि अप उपस्पृश्य पूर्ववत् कृष्णमभ्यर्च्य पाकयज्ञविधानेन गृह्यसूत्रोक्तेन पयःशृतेन घृतपक्वेन सह सर्पिषा सघृतेन चरुणा पति रेव द्वादशाहुतीर्जुहुयात् । एवकारः स्त्रिया होमेऽनधिकारं

**कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः ॥ २२ ॥ विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथंचन ॥ विप्रान् स्त्रियो वीरवतीः स्रग्गन्धबलिमण्डनैः ॥ २३॥ अर्चेदहरहर्भक्त्या देवं नियममास्थितः ॥ २४ ॥ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ॥ अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा॥२५॥एतेन पूजाविधिना मासान्द्वादशहायनम् ॥ नीत्वाऽथोपचरेत्साध्वी कार्तिके चरमेऽहनि ॥२६॥ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ॥ पयः शृतेन जुहुयाच्चरुणा सह सर्पिषा ॥ पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २७ ॥ आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ॥ प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥ २८ ॥ आचार्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः ॥ दद्यात्पत्न्यै चरोः शेषं सुप्रजस्त्वं सुसौभगम् ॥ २९ ॥ एतच्चरित्वा विधिवद्व्रतं विभोर भीप्सितार्थं लभते पुमानिह ॥ स्त्री त्वेतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥ ३० ॥**

सूचयति ॥ २७ ॥ आशिष इति ॥ स्पष्टम् । प्रीतैरित्यनेन प्रथमतस्तेषां भोजनादिकं सूचितम् । क्वचित्पुस्तके तु " ब्राह्मणान् भोजयेद्भक्त्या स्वन्नाद्यैर्द्वादशाभिधुः । तेभ्यो दद्यात्तिलान् गाश्च सोदपात्रसमन्वितान् ॥ " इत्येकः श्लोकोऽधिकोऽस्ति ॥ २८ ॥ आचार्यमिति ॥ बन्धुभिः सहितः वाग्यतः धृतमौनः आचार्यम् अग्रतः कृत्वा आचार्याज्ञापुरःसरं यथा भवति तथेत्यर्थः । सुप्रजस्त्वं सत्पुत्रकरं सुसौभगं सौभाग्यकरम् इति चरुविशेषणम् । चरोः शेषं पत्न्यै दद्यात् । यद्वा । तस्य सुप्रजस्त्वं सुसौभगं च स्यात् इति वाक्यान्तरम् ॥ २९ ॥ एतदिति ॥ एतद्व्रतं विधिवच्चरित्वा कृत्वा विभोर्भगवतः सकाशादिहैव जन्मनि पुमान् अभीप्सितार्थं लभते । स्त्रीतु एतदास्थाय कृत्वा सौभगं सौभाग्यं श्रियं प्रजां जीवतीति जीवः स चासौ पतिश्च तं जीवपतिं दीर्घजीविनं पतिं यशो गृहं च लभेत ॥ ३० ॥

कन्या चेति सार्द्धम् ॥ एतच्चरित्वा कन्या समग्राणि लक्षणानि सद्गुणा यस्मिंस्तथाभूतं वरं पतिं लभेत अवीरा पुत्रहीना विधवा च हतकिल्बिषा दोषवर्जिता वैकुण्ठादिप्राप्तिलक्षणां गतिं लभेत । हतकिल्बिषेति प्रथमान्तपाठो वा । मृतप्रजा या सा जीवसुता धनेश्वरी च भवति सुदुर्भगा सुभगा भवति विरूपा अग्र्यं श्रेष्ठं रूपं विन्देत् । आमयावी रोगी विरुजा विशिष्टया रुजा विमुच्यते । इन्द्रियैः सहितं कल्पं देहं च विन्देदिति शेषः ॥ ३१ ॥ एतदिति ॥ पठन्निति श्रवणादेरप्युपलक्षणम् । अभ्युदये यज्ञदानादिपितृदेवादिकर्मणि य एतत् पाठादिपरो भवेत्तस्य पित्रादीनामनन्ता तृप्तिर्भवति । ते च तथैव हुतभुगादयः सन्तुष्टाः सन्तः होमावसाने कर्मसमाप्तौ तस्मै समस्तकामान् प्रयच्छन्ति ॥ ३२ ॥ राजन्निति अर्द्धम् ॥ स्पष्टम् ॥ ३३ ॥ लुभ्यन् भवन्मधुरिमानुभवाय कृष्ण न प्राप्नुवंस्तमहमेव न वञ्चितोऽस्मि ॥ शुच्याशमप्यशुचि मे नवनीतबुद्ध्या चेतो हरंस्त्वमपि वञ्चकवञ्चितोऽसि ॥ १ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ षष्ठस्कन्धस्योनविंशे व्यधाद्गङ्गासहायकः ॥ १९ ॥

कन्या च विन्देत समग्रलक्षणं वरं त्ववीरा हतकिल्बिषा गतिम्॥मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम्॥विन्देद्विरूपा विरुजा विमुच्यते य आमयावीन्द्रियकल्पदेहम् ॥३१॥ एतत्पठन्नभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ तुष्टाः प्रयच्छन्तिसमस्त कामान्होमावसाने हुतभुक् श्रीर्हरिश्च ॥ ३२ ॥ राजन् महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ ३३ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥

॥ संपूर्णोऽयं षष्ठः स्कन्धः ॥ ६ ॥

---

अयं श्रीमद्भागवतस्य षष्ठः स्कन्धः बून्दीनगरनिवासिपण्डितगङ्गासहायविरचितान्वितार्थप्रकाशिकाख्यव्याख्यासहितः कल्याणनगर्यां श्रीकृष्णदासात्मजेन गङ्गाविष्णुना स्वीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणागारे मुद्रयित्वा प्रकाशितः । फाल्गुनशुक्ला ७ शकाब्दाः १८२२, संवत् १९५७ ॥

इति अन्वितार्थप्रकाशिकाख्यव्याख्यासहिते

## ॥ श्रीमद्भागवते षष्ठः स्कन्धः ॥

समाप्तः ।

॥ श्रीकृष्णाय नमः ॥ आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि ॥ यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥ यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् ॥ तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥ प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या ॥ गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयं लिखति सम्प्रति सप्तमेऽस्मिन् ॥ ३ ॥ प्रथमे तु विप्रशापाज्जन्मत्रयकथादिकम् ॥ भगवद्वाःस्थयोस्तत्र श्लोकाः सार्द्धा नवांङ्घयः ॥ उवाचाष्टकमङ्घ्रयूनाः स्युः पञ्चाशदनुष्टुभः ॥ १॥ तत्र पूर्वस्कन्धान्ते " हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥ " इति यदुक्तं तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति—सम इति ॥ हे ब्रह्मन् भगवान् विष्णुः स्वयं भूतानां समः प्रियः सुहृच्च स इन्द्रस्यार्थे दैत्यान् कथमवधीत् । यथा समस्य कथं वैषम्यं प्रियस्य कथमसुरेषु प्रीत्यभावः सुहृदः कथं तेष्वसौहृदं विषमभेददर्शी जीवः पुत्रादिपक्षपातेन तच्छत्रून् हन्ति । न हि समस्य सुहृदश्च वैषम्यं भवति न च प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः ॥ १ ॥ न हीति ॥ हि यतः साक्षान्निश्रेयसं परमानन्द आत्मा स्वरूपं यस्य तस्यात्मकामस्य

**श्रीगणेशाय नमः ॥ ॥ राजोवाच ॥ समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ॥ इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥ न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥ इति नः सुमहाभाग नारायणगुणान् प्रति ॥ संशयः सुमहान् जातस्तद्भवान् छेत्तुमर्हति ॥ ३ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ॥ यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥ गीयते परमं पुण्यमृषिभिर्नारदादिभिः ॥ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥**

अस्य भगवतः सुरगणैः साध्यः अर्थः प्रयोजनं नास्ति अतः कथं तत्पक्षपाती भवति तथा अगुणस्य गुणकार्याध्यासरहितस्यास्य असुरेभ्यो विद्वेष उद्वेगश्च नैवास्ति अतः कथं तान् द्वेष्टि । अगुणस्येति गुणाधीनौ प्रीतिद्वेषावित्यर्थः ॥ २ ॥ इतीति ॥ हे सुमहाभाग नारायणस्य गुणान् अनुग्रहनिग्रहादीन् प्रति नोऽस्माकं सर्वेषां श्रोतॄणामित्येवं सुमहान् संशयो जातस्तत् तं भवानेव छेत्तुमुपपत्त्या निवारयितुमर्हति ॥ ३ ॥ साध्विति युग्मम् ॥ हे महाराज त्वया साधु सम्यक् पृष्टं यतः अद्भुतं श्रोतृजनाह्लादकं संसारदुःखनिवर्त्तकं च हरेश्चरितं पृष्टं यत्र यस्मिन् दुष्टनिग्रहपूर्वकभक्तरक्षारूपे चरिते परमं पुण्यं सर्वपापनिवर्त्तकमर्थाद्वक्तृश्रोतृजनानामत एव भगवद्भक्तिवर्धनं भागवतस्य प्रह्लादस्य माहात्म्यं नारदादिभिर्ऋषिभिरपि गीयते । कृष्णायेति चतुर्थी द्वितीयार्थे । कृष्णं मुनिं वेदव्यासं नत्वा हरेः कथां कथयिष्ये ॥ ४ ॥ ५ ॥ निर्गुण इति ॥ अजः अव्यक्तः रागद्वेषादिहेतुभूतशरीरेन्द्रियादिभिरपि रहितः प्रकृतेः परः निर्गुणोऽपि चेत्येवंभूतोऽपि भगवान् स्वमायया गुणं सत्त्वादिकमाविश्य बाध्यान् प्रतिबाधकतां गतः ।

यद्वा । देवासुराणां या परस्परं बाध्यबाधकता तां गतः तत्र हेतुर्जातः न तु द्वेषस्नेहाद्यैः अतस्तस्य दोषो नास्ति ॥ ६ ॥ तस्माद् भगवतो वैषम्यं यत्प्रतीयते तद् गुणवैषम्य-मूलकमेव । वैषम्यं च न्यूनत्वमाधिक्यं च तदपि न युगपत्किंतु क्रमेणैवेत्याह—सत्त्वमिति ॥ हे राजन् प्रकृतेर्गुणाः सत्वादय आत्मनो भगवतः पारतन्त्र्यसम्पादका नैव भव-न्ति । यद्वा । सत्वादयः प्रकृतेरेव गुणा न त्वात्मनः भगवतः तत्र तस्याध्यासाभावात् तेषां गुणानां ह्रासो न्यूनत्वं बाध्यत्वहेतुः समुल्लासो वृद्धिर्बाधकत्वहेतुः युगपदेव न भवतः किन्तु कालक्रमेणैव अतः स्वेच्छया गुणाधिष्ठानेनापि पक्षपातवैषम्यं नास्ति ॥ ७ ॥ जयेति ॥ सत्वस्य जयकाले आधिक्यस्य काले सात्विकान् देवानृषींश्च अभजत् तदा सत्वगुणं यथाऽधिकं भवति तथा तत्राधिष्ठानमपि तस्याधिकं भवति ततः सः देवादिदेहं प्रविश्य तद्बलमधिकं कुर्वन् असुरादीन् बाधत इत्यर्थः । रजसो जयकाले राजसानभजत् तमसो जयकाले तामसान् यक्षादीन् अभजत् एवं तत्तत्कालस्यानुगुणोऽनुरूपो भवति गुणाधिक्यस्यापि कारणं काल एव न तु सः इत्यर्थः ॥ ८ ॥ ज्योति-रिति ॥ ज्योतिः अग्निः यथा काष्ठादिषु जलं यथा पात्रादिषु आकाशो यथा घटादिषु अधिकेष्वधिकरूपं न्यूनेषु न्यूनरूपं तिष्ठदपि न विषममुच्यते तथैव देवनिष्ठे सत्वगुणे-ऽधिके सति सोऽपि देवेष्वधिकरूपः तथैवासुरनिष्ठे रजसि न्यूनरूपे न्यूनरूप इत्यसुराणां देवबाध्यत्वे देवानामसुरबाधकत्वे सति सोऽपि देवपक्षपाती असुरबाधक इत्युच्यते ।

**सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः॥ न तेषां युगपद् राजन् ह्रास उल्लास एव वा॥ ७ ॥ जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान्॥ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥ ८ ॥ ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते ॥ विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥**

एवमसुरनिष्ठरजस्यधिके सोऽप्यसुरपक्षपाती देवबाधक इति प्रतीत्या विषमोऽप्यविषम एवेत्यर्थः । नन्वेवं काष्ठादौ वह्निरिव देवादिदेहेषु भगवान् किं न प्रतीयते तत्राह । सङ्घातात् देवादिदेहात् न विविच्यते पृथक्तया न प्रतीयते तथापि कवयो निपुणाः मथित्वा देहादिसङ्घातस्य जडत्वेन स्वतः प्रवृत्त्यसम्भवात् जीवस्य चेतनत्वेऽपि पारत-न्त्र्यानुभवावृतत्वात्प्रेरकोऽन्यः कश्चिदस्तीति विचार्य तत्राप्यन्ततः स्वभावकर्मादिवादनिरासेन आत्मस्थं देहादिसङ्घाते स्थितमात्मानं भगवन्तं विदन्ति जानन्ति । विन्दन्तीति पाठे लाभोऽपि ज्ञानमेव अत्रापि ज्योतिरादिरिवेति द्रष्टव्यम् । यथा सूर्यकान्तादौ दाहदर्शनात् ज्योतिर्ज्ञायते यथा च गन्धदर्शनाद्वायुरित्यादि । नन्विन्द्रादिपक्षपाती भगवान् कदाचित्सर्वैः प्रत्यक्षीभूत एवासुरान् हन्ति तथैव रजस्तमसोरपि वृद्धौ सत्यां कदाचिदसुरादीनामपि पक्षपाती भवन् देवादीन् हिंस्यात् तदैवोक्तयुक्त्या तस्य साम्यं सिद्ध्ये-दित्यत आह । ज्योतिरादिरिवेति । तमेव श्लोकं तन्त्रेणार्थान्तराभिधायकं ज्योतिरादिरिव ज्योतिरादिगतं रूपरसगन्धस्पर्शं यथा सङ्घाते तद्वति वस्तुनि आभाति स्पष्टतया भासते किञ्चित् तथा किञ्चित् सङ्घातवशान्न विविच्यते न पृथक् स्पष्टमाभाति च किंतु तदन्तर्गततयैव भाति । एवमेव जगत्यस्मिन् देवासुरादिषु मध्ये भगवान् क्वचित् स्पष्टं भासते क्वचित्तदन्तर्गतं तिष्ठतीत्यर्थः । तत्र ज्योतिषः सत्वप्राधान्यादनावरकत्वात् तद्गतरूपं यथा किञ्चिद्दूरेऽपि शुक्लमिदं क्षीरमिति सुदूरे लक्षद्वयेऽपि चन्द्रोऽयं शुक्ल इति

नयनेन्द्रियेण गृहीतं स्पष्टमाभाति तथैव देवादेः सत्वप्राधान्यात् सत्वेन अनावरणात्तद्गतो भगवांस्तत्पक्षपाती स्पष्टमेवोपेन्द्रादिस्वरूप आभाति । यथा च जलादेस्तमोरजः-प्राधान्यात्तेनावरणात्तद्गतरसगन्धस्पर्शं न स्पष्टमाभाति किंतु तद्गतः पदार्थस्य योगे एवेन्द्रियगोलकेषु तथा हि रसनायां रसवतो योगे एव रसः श्रोत्रे शब्दवत आकाशस्य योगे सत्येव शब्दः त्वचि शैत्यादिमद्वस्तुयोग एव स्पर्शः नासायां गन्धवतो वायोर्योग एव गन्ध इति तथैवासुरराक्षसादे रजस्तमःप्राधान्यात्तेनावरणात्तद्गतो भगवांस्तत्पक्षपाती न स्पष्टमाभाति । अत्र मेघातपाभ्यामावरणानावरणे सूर्यस्य यथा तथैव तमःसत्वाभ्यां भगवतो ज्ञेये । ननु तर्हि स्पष्टभानाभावे असुरादिपक्षपातित्वं तस्य कथं प्रतीमस्तत्राह । विदन्तीति । देवपराभवादिकार्यदर्शनलिङ्गेन जानन्तीत्यर्थः ॥ ९ ॥ एवं मायागुणैरेतद्वैषम्यं न स्वाभाविकमिति चेद् गुणपारतन्त्र्यादनीश्वरत्वं स्यात्तत्राह—यदेति ॥ यदा पर एष परमेश्वरः आत्मनः जीवस्य भोगाय पुरः क्रीडासाधनभूतानि स्थावरजङ्गमात्मकानि शरीराणि सिसृक्षुर्भवति तदा स्वमायया साम्येन स्थितं रजः पृथक् सृजति पृथक् कृत्वाङ्गीकरोति । यदा च विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्भवति तदा सत्वं पृथक् सृजति । यदा तु क्रीडामुपसंहृत्य शयिष्यमाणो भवति तदासौ विश्वोपसंहाराय

यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया ॥ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥
कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् ॥ य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यजः ॥
तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ ११ ॥ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ॥ प्रीत्या महाक्रतौ
राजन् पृच्छतेऽजातशत्रवे ॥ १२ ॥

तमः पृथगीरयति अधिकतां नयति ॥ १० ॥ यदा सिसृक्षुरित्यादिना प्रतीतं कालपारतन्त्र्यं वारयन् प्रधानपुरुषपारतन्त्र्यमपि वारयति—कालमिति सार्द्धम् ॥ हे नरदेव प्रधानपुंभ्यां निमित्तभूताभ्यां सत्यकृत् अमोघजगत्कर्ता ईशः चरन्तं वर्तमानं कालमाश्रयं सृजति प्रकृतिपुंसोः सहकारिणं करोति स्वचेष्टारूपत्वात् कालस्य न तत् पारतन्त्र्यम् । हे राजन् य एष सहकारित्वेनाधिकृतः कालः स यदा स्थितिसमये सत्वं गुणमेधयति वर्द्धयति तदा तदीशिता नियन्ता अजः भगवानपि सत्वप्रधानं सुरानीकं देवसमूहमेव एधयति वर्द्धयति इव ततश्च उरुश्रवाः महायशा भगवान् सुराः प्रिया यस्य स तथाभूतः सन् तत्प्रत्यनीकान् सुरप्रतिपक्षान् रजस्तमस्कान् तद्गुणप्रधानान् असुरान् प्रमिणोति हिनस्ति कालशक्तिक्षुभितगुणगतं वैषम्यमिह सन्निधिमात्रेण तदधिष्ठातरि स्फुरतीति प्रकरणार्थः ॥ ११ ॥ अत्रेति ॥ हे राजन् अत्र द्वेषादिराहित्येन समस्यापि दैत्यवधो महाक्रतौ राजसूये पृच्छते अजातशत्रवे युधिष्ठिराय सुरर्षिणा नारदेन प्रीत्या इतिहासः पूर्वमेवोदाहृतो वर्णितोऽस्ति तदानीं तयोर्वधो न सुरपक्षपातेन अपि तु शापेन आसुरीं योनिं गतयोः अनुग्रहार्थ एवेति ॥ १२ ॥

दृष्ट्वेति युग्मम् ॥ पाण्डुसुतो राजा युधिष्ठिरो महाक्रतौ राजसूये चेदिभूभुजः चेदिदेशराजस्य शिशुपालस्य भगवति वासुदेवे महाद्भुतं योगिजनातिदुर्लभं सायुज्यं दृष्ट्वा विस्मितमनाः सन् मुनीनां शृण्वतां तत्रासीनं सुरऋषिं नारदं पप्रच्छ । " ऋत्यकः " इति सन्ध्यभावः ॥ १३ ॥ १४ ॥ अहो इति ॥ एकान्तिनामेकस्मिन् भगवत्येवान्तः पर्यवसानं विद्यते येषां तेषां भक्तानामपि या दुर्लभा परे तत्त्वे वासुदेवे श्रीकृष्णे प्राप्तिःसायुज्यं सा अस्य विद्विषः चैद्यस्य शिशुपालस्य जातेत्येतत् हि यस्मादत्यद्भुतमत्याश्चर्यं जातम् ॥१५॥ एतदिति ॥ हे मुने एतद्विद्विषोऽपि तत्प्राप्तौ कारणं सर्वे एव वेदितुमिच्छामः यतः भगवन्निन्दया वेनः द्विजैर्हि तमसि नरके पातितः अतः चैद्यस्यापि नरकपात एव योग्यः। अत्र वेनस्य नरकपातः ब्राह्मणशापेन मृतत्वात् निश्चितवत् कथितः। वस्तुतो " ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः ।" इत्यादिना नरकपाताभाव एव ॥१६॥ दमघोषेति ॥ दमघोषसुतः शिशुपालः पापः पापीयान् अत एव कलभाषणात् बाल्ये मधुरभाषणमारभ्य सम्प्रत्यधुनापि गोविन्दे अमर्षी मत्सरी तथैव दुर्मतिर्दन्तवक्त्रोऽपि

दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ॥ वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १३ ॥ तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ ॥ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १४ ॥ युधिष्ठिर उवाच ॥ अहो अत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि ॥ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १५ ॥ एतद् वेदितुमिच्छामः सर्वे एव वयं मुने ॥ भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १६ ॥ दमघोषसुतः पाप आरभ्य कलभाषणात् ॥ संप्रत्यमर्षी गोविन्दे दन्तवक्त्रश्च दुर्मतिः ॥ १७॥ शपतोरसकृद् विष्णुं यद् ब्रह्म परमव्ययम् ॥ श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥ १८ ॥ कथं तस्मिन् भगवति दुरवग्राह्यधामनि ॥ पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥ १९ ॥ एतत् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ॥ ब्रूह्येतदद्भुततमं भगवांस्तत्र कारणम् ॥ २० ॥ श्रीशुक उवाच ॥ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः ॥ तुष्टः प्राह तमाभाष्य शृण्वन्त्यास्तत्सदः कथा ॥ २१ ॥

॥ १७ ॥ शपतोरिति ॥ यदव्ययम् अपक्षयशून्यं परमं ब्रह्म तं विष्णुं श्रीकृष्णमसकृत् वारं वारं शपतोर्द्वयोर्जिह्वायां श्वित्रः श्वेतकुष्ठो न जातो न तत्रान्धंतमो नरकं तौ विविशतुः ॥ १८ ॥ कथमिति ॥ दुरवग्राह्यं दुर्लभं धाम स्वरूपं स्थानं वा यस्य तस्मिन् भगवति अञ्जसा साक्षात् साधनायासमन्तरेणैव वा सर्वलोकानां पश्यतां लयमीयतुः सायुज्यं प्रापतुः । अत्र भाविनोऽपि दन्तवक्त्रलयस्य तज्जातकप्रामाण्येन सिद्धवत् कृत्वा भूतनिर्देश इति ज्ञेयम् ॥ १८ ॥ एतदिति ॥ यतः एतत् भगवति लयात्मकं फलमद्भुततममसंभावितं जातमत एतत्प्रति मे बुद्धिर्भ्राम्यति । वायुना यथा दीपस्यार्चिर्ज्वाला भ्राम्यति तद्वत्। अतः भगवान् सर्वज्ञस्त्वं तत्र कारणं ब्रूहि ॥२०॥ राज्ञ इति ॥ भगवान् सर्वज्ञो नारदर्षिः राज्ञो युधिष्ठिरस्य तत् माहात्म्योद्बोधकत्वेन तत्कथाप्रवृत्त्यङ्गभूतं प्रश्नात्मकं वच आकर्ण्य श्रुत्वा तुष्टः सन् तं राजानमाभाष्य सम्बोध्य सीदन्ति

निषीदन्त्यस्यामिति सद् तस्याः सदः सभायाः शृण्वन्त्याः सत्याः । नृमार्षः । कथाः प्राह स्म ॥ २१ ॥ ननु भगवन्निन्दकस्य नरकपातं कथयतस्तव कोऽभिप्रायः भगवत्पीडाकरत्वेन वा निन्दकस्य पापोक्त्या वा तत्र न तावत् भगवतः पीडास्ति पीडाया देहाभिमानहेतुकत्वाद् भगवतश्च देहाभिमानाभावादित्याह—निन्दनेति ॥ हे राजन् निन्दनं दोषकीर्त्तनं न्यक्कारस्तिरस्कारः तत्र निन्दनन्यक्काराभ्यां दुःखं स्तवसत्काराभ्यां सुखं तथा च निन्दनस्तवाद्यर्थं निन्दास्तुत्यादिना सुखदुःखसाक्षात्कारार्थं जीवानां कलेवरं प्रधानपरयोः प्रकृतिपुरुषयोः अविवेकेन परस्पराध्यासेन कल्पितं रचितम् ॥ २२ ॥ हिंसेति सार्द्धम् ॥ हे पार्थिव यथा तदभिमानेन प्रकृतिपुरुषयोरैक्याध्यासेन भूतानाम् इह देहादौ ममाहमिति वैषम्यं भ्रमः भवति । यथा च तेन वैषम्येण दण्डस्ताडनं पारुष्यं निन्दा तयोः सतोः हिंसा पीडा च भवति अयमहंममात्मकोऽभिमानो यन्निबद्धः यस्मिन् देहे निबद्धस्तस्य देहस्य वधादेव प्राणिनां वध इति व्यवह्रियते । यद्वा । तदभिमानेन देहाभिमानेन सुखदुःखे इव हिंसापि भवति कयोः सतोः दण्डपारुष्ययोस्ताडनतर्जनयोः एवं भूतानामिह संसारे मम अहमिति वैषम्यं भवति शेषं प्राग्वत् ॥ २३ ॥ तथेति ॥ देहादावात्माभिमानेन भूतानां यथा ममाहमिति वैषम्यं

**नारद उवाच ॥ निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ॥ प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥ २२ ॥ हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा ॥ वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ यन्निबद्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ २३ ॥ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ॥ परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २४ ॥ तस्माद् वैरानुबन्धेन निर्वैरेण भयेन च ॥ स्नेहात् कामेन वा युञ्ज्यात् कथंचिन्नेक्षते पृथक् ॥ २५ ॥ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ॥ न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २६ ॥**

तथा हिंसादिकं च भवति अखिलात्मनः परस्य दमकर्तुर्धर्मादिमर्यादामनुसृत्य दैत्यादिषु दण्डं विधातुः यस्य श्रीकृष्णस्य कैवल्यात् अद्वितीयत्वाद्धेतोः तथा जीववत् देहादावभिमानो नास्ति तस्यास्य हिंसा पीडादिकं केन हेतुना कल्प्यते तत्कारणाध्यासाभावादित्यर्थः । अखिलात्मत्वान्न वैषम्यमद्वितीयत्वादभिमन्तव्याभावः तेन चाभिमानाभावः ततः हिंसाद्यभावः दैत्यादिदण्डनमपि धर्ममर्यादामनुसृत्य तेषां हितार्थमेवेति ॥ २४ ॥ तस्मादिति ॥ तस्मात् भगवतो यः कश्चित् वैरानुबन्धेन निर्वैरेण नास्ति वैरं केनापि यस्मिन् तेन भक्तियोगेनेत्यर्थः । वैरभिन्नेन बन्धुत्वादिना वा वैषम्याभावात् भयेन स्नेहात् सेव्यबुद्धिं विनापि केवलस्नेहात् कामेन तत्तद्भोगेच्छया वा तस्मिन्मनो युञ्ज्यात् स वस्तुमहिम्नैव सर्वत्र तमेव पश्यन् पुनः कथञ्चिदपि ततः पृथगन्यद्वस्तु नेक्षते नैव पश्यति अतो भगवतो निन्दादिकृतवैषम्याभावात् यथाकथञ्चिन्मनोयोगाद् ध्योनन निन्दादिकृतपापस्यापि नाशात्सायुज्यं भवतीति भावः ॥ २५ ॥ यथेति ॥यथा वैरानुबन्धेन भगवन्तं चिन्तयन्मर्त्यः मरणधर्मा दैत्यमनुष्यादिः प्राणी यथा शीघ्रं तन्मयतां तत्समानतां तत्सायुज्यं वा इयात् प्राप्नुयात्तथा भक्तियोगेन चिन्तयन् न प्राप्नुयात् इति मे निश्चिता मतिः संहिताविवक्षाभावान्न सन्धिः ॥ २६ ॥

कीट इति ॥ यथा कीटः पेशस्कृता भ्रमरेण कुड्यायां भित्तिछिद्रे रुद्धः संरम्भो द्वेषः भयं च स एव योगः हेतुस्तेन तं भ्रमरमनुस्मरन् ध्यायन् तस्य सरूपतां विन्दते ॥ २७॥ एवमिति ॥ एवं भगवति मायामनुजे ईश्वरे कृष्णे वैरेण या अनुचिन्ता ध्यानं तयैव पूतो निवृत्तः पाप्मा येषां ते तमीयुः प्रापुः ॥ २८ ॥ कामादिति ॥ कामादिभ्यो हेतुभ्यो यथा भक्त्या ईश्वरे श्रीकृष्णे मन आवेश्य तदघं द्वेषादिजनितं पापं हित्वा बहवस्तद्गतिं तदीयां गतिं सायुज्यादिलक्षणां गतास्तथा शृण्विति शेषः ॥ २९ ॥ गोप्य इति ॥ हे विभो गोप्यः कामादीश्वरे मन आवेश्य तद्गतिं गता इति सर्वत्र स्पष्टोऽन्वयः । पाण्डवादेः साविन्या अपि प्राप्तेः निश्चयाद्भूतनिर्देशः ॥ ३० ॥ कतमोऽपि इति ॥ पञ्चानां पूर्वोक्तस्नेहादिमतां मध्ये पुरुषं भगवन्तं प्रति वेनः कतमः एकतमोऽपि न स्यात् न भवति तस्य केवलं स्वभोगपरत्वेन ध्यानेन भगवदावेशाभावान्निन्दादिना पापमेव फलितमतः स नरकाधिकार्येव । तस्मादित्यादि स्पष्टम् ॥ ३१ ॥ मात्विति ॥ हे पाण्डव चैद्यः दन्तवक्त्रश्च वः मातृष्वसेयौ तौ विष्णोः पार्षदप्रवरावपि विप्रशापाद्वैकुण्ठात् पदाद्वै-

कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् ॥ संरम्भभययोगेन विन्दते तत्सरूपताम् ॥२७॥ एवं कृष्णे भगवति मायामनुज ईश्वरे ॥ वैरेण पूतपाप्मानस्तमीयुरनुचिन्तया ॥२८॥ कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः ॥ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २९॥ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ॥ संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥३० ॥ कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति ॥ तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१ ॥ मातृष्वसेयो वश्चैद्यो दन्तवक्त्रश्च पाण्डव ॥ पार्षदप्रवरौ विष्णोर्विप्रशापात् पदाच्च्युतौ ॥३२॥ युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः॥ अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः॥३३॥ देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ॥ देहसंबन्धसंबद्धमेतदाख्यातुमर्हसि ॥ ३४ ॥ नारद उवाच ॥ एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ॥ सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥३५॥ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः॥ दिग्वाससः शिशून् मत्वा द्वास्थौ तान् प्रत्यषेधताम् ॥३६॥

कुण्ठाच्च्युतौ ॥ ३२ ॥ कीदृश इति ॥ हरिदासौ अभिमृशति अभिभवतीति तथाभूतः शापः कीदृगिति शापस्वरूपप्रश्नः कस्येति शापदातुः प्रश्नः मम तु हरेरेकान्तिनां पार्षदप्रवराणां भवः जन्ममरणादिसंसारः अश्रद्धेयः मिथ्या इव आभाति ॥ ३३ ॥ देहेति ॥ अतः देहेन्द्रियप्राणैः हीनानां शुद्धसत्वमयदेहादीनां वैकुण्ठवासिनां प्राकृतदेहसंबन्धेन एतत्संबद्धं बन्धनं त्वमाख्यातुमर्हसि ॥ ३४ ॥ एकदेति ॥ ब्रह्मणः पुत्राः सनन्दनादयो भुवनत्रयं चरन्तो यदृच्छया भगवदिच्छया एकदा विष्णोर्लोकं वैकुण्ठं जग्मुः॥ ३५॥ पञ्चेति ॥ ते यद्यपि पूर्वेषां मरीच्यादीनामपि पूर्वजास्तथापि पञ्च वा षड् वा हायनानि संवत्सरा येषां तेषामर्भाणां बालानामिवाभा येषां ते पञ्च षडित्यत्र डजभाव आर्षः । तथा दिग्वाससः नग्नाश्चेति तान् शिशून् मत्वा द्वाःस्थौ द्वारपालौ जयविजयौ प्रत्यषेधतामन्तःप्रवेशनान्निवारितवन्तौ ॥ ३६ ॥

अशपन्निति सार्द्धम् ॥ एवं प्रतिषेधेन ते कुपिताः सन्तस्तावशपन् शापमेव दर्शयति । हे बालिशौ रजस्तमोभ्यां रहिते मधुद्विषः भगवतः पादमूले चरणसमीपे स्थाने वैकुण्ठे युवां विषमदृष्टिमन्तौ वासमेव नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः । अतः कारणात् आशु शीघ्रमेव पापिष्ठामासुरीं योनिं यातं गच्छतम् ॥ ३७ ॥ एवमिति ॥ एवं शप्तौ अतः स्वभवनात् वैकुण्ठात् पतन्तौ तौ तैः कृपालुभिः सनकादिभिः वां युवयोः त्रिभिर्जन्मभिः लोकाय स्वस्थानप्राप्तये शापः कल्पतां तावता अयं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः ॥ ३८ ॥ जज्ञाते इति ॥ स्पष्टम् ॥ ३९ ॥ हत इति ॥ सिंहरूपिणा नरसिंहरूपेण हरिणा हिरण्यकशिपुर्हतः । धरोद्धारे निमित्ते सति सौकरं वपुर्बिभ्रता हरिणा तत्प्रतिघाती हिरण्याक्षो हतः ॥ ४० ॥ हिरण्येति ॥ हिरण्यं कशिपुः केशवप्रियं स्वपुत्रं प्रह्लादं जिघांसुः सन् तन्मृत्युहेतवे नाना यातनाः अकरोत् ॥ ४१ ॥

अशपन् कुपिता एवं युवां वासं न चार्हथः ॥ रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ॥ पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७ ॥ एवं शप्तौ स्वभवनात् पतन्तौ तैः कृपालुभिः ॥ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ३८ ॥ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ॥ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ३९ ॥ हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ॥ हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४० ॥ हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् ॥ जिघांसुरकरोन्नाना यातना मृत्युहेतवे ॥ ४१ ॥ सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम् ॥ भगवत्तेजसा स्पृष्टं नाशक्नोत् हन्तुमुद्यमैः ॥ ४२ ॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ ॥ रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ ॥ ४३ ॥ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ॥ रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो ॥ ४४ ॥ तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ॥ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४५ ॥ वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् ॥ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४६ ॥

सर्वेति ॥ सर्वभूतानाम् आत्मभूतं प्रशान्तं द्वेषादिरहितं समदर्शनं सममनुस्यूतं ब्रह्मैव पश्यति तथा तं भगवत्तेजसा स्पृष्टं व्याप्तं तं प्रह्लादम् उद्यमैः शस्त्रास्त्रादिभिः हन्तुं नाशक्नोत् ॥ ४२ ॥ तत इति ॥ ततः तौ केशिन्यां विश्रवसः सुतौ सर्वलोकोपतापनौ तौ रावणः कुम्भकर्णश्च इति राक्षसौ जातौ ॥ ४३ ॥ तत्रेति ॥ न्यहनत् हतवान् शबलुगार्षः । शेषं स्पष्टम् ॥ ४४ ॥ ताविति ॥ पूर्वार्द्धं स्पष्टम् । अधुना कृष्णचक्रेण हतमंहो ययोस्तौ तयोः पापमेव हतं न तु तावित्यर्थः । यथा वह्निना स्वर्णस्य मलमेव नाश्यते न स्वर्णमितिवत् अधुना सनकाद्युक्तजन्मत्रयस्य व्यतीतत्वादधुना शापनिर्मुक्तौ जातौ ॥ ४५ ॥ वैरेति ॥ वैरानुबन्धेन तीव्रं ध्यानं तेन प्रथममच्युतसात्मतां तत्र लयं नीतौ प्राप्तावपि पुनस्ततो निःसृत्य विष्णुपार्षदौ सन्तौ हरेः पार्श्वं जग्मतुः स्वाधिकारे स्थितौ ॥ ४६ ॥

विद्वेष इति ॥ हे भगवन् दयिते स्वभावात् प्रीतिविषये महात्मनि पुत्रे प्रह्लादे पितुर्विद्वेषः कथमासीत्तद्ब्रूहि तथा समदर्शनादेरुक्तत्वात् येन कारणेन प्रह्लादस्याच्युतात्मता भगवदेकचित्तत्वं तदपि ब्रूहि ॥ ४७ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः प्रथमे सप्तमस्य व्यधादिमाम् ॥ १ ॥ द्वितीये भ्रातृशोकार्तो दैत्यो लोकान् विनाशयन् ॥ असान्त्वयत्स्वमात्रादीन् श्लोकाः सार्द्धा द्विषष्टिताः ॥ उवाचपश्चैकं श्लोकमर्द्धषष्टिरनुष्टुभः ॥ २ ॥ भ्रातरीति॥ हे राजन् क्रोडमूर्तिना हरिणा एवं भ्रातरि विनिहते सति हिरण्यकशिपुः रुषा भगवद्विषयकरोषेण शुचा भ्रातृविषयकशोकेन च पर्यतप्यत् ॥ १ ॥ आहेति ॥ रुषा घूर्णः प्रकम्पितगात्रः संदष्टः दशनच्छदः ओष्ठः येन सः कोपेन उत् अतिशयेन ज्वलद्भ्यां चक्षुर्भ्यां कोपाग्निधूमेनैव धूम्रमम्बरमाकाशं निरीक्षन् । शता आर्षः । स इदमाह स्म च ॥ २ ॥ करालेति ॥ करालाभिः दंष्ट्राभिर्युक्तया उग्रया दृष्ट्या दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः स्वशूरत्वं ख्यापयन् सदसि शूलमुद्यम्य दानवानिदमब्रवीत् आह चेदमिति पौनरुक्त्यं क्रोधख्यापनाय ॥ ३ ॥ भो भो

युधिष्ठिर उवाच ॥ विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ॥ ब्रूहि मे भगवन् येन प्रह्लादस्याच्युतात्मता ॥ ४७ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे जयविजयत्रिजन्मवर्णनं नाम प्रथमोऽध्यायः ॥१॥ नारद उवाच ॥ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ॥ हिरण्यकशिपू राजन् पर्यतप्यद् रुषा शुचा ॥ १ ॥ आह चेदं रुपा घूर्णः संदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥ २ ॥ करालदंष्ट्रोऽग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥ भो भो दानवदैतेया द्विमूर्धन् त्र्यक्ष शम्बर ॥ शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥ विप्रचित्ते मम वचः पुलोमन् शकुनादयः ॥ शृणुतानन्तरं सर्वे क्रियतामाशु मा चिरम् ॥ ५ ॥ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ॥ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥ भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ॥ रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥

इति युग्मम् ॥ भो भो दानवदैतेयाः इत्यादयः शकुनादयश्च यूयं सर्वे मम वचः शृणुत ततः अनन्तरमाशु शीघ्रमेव कुरुत चिरं विलम्बं मा कुरुत ॥ ४ ॥ ५ ॥ सपत्नैरिति॥ क्षुद्रैः तुच्छैः स्वयमकिञ्चित्करैः सपत्नैः शत्रुभिर्देवैः कर्तृभिः समेनापि हरिणा उपधावनैः सेवनैर्निमित्तभूतैः स्वपार्ष्णिग्राहेण तत्सहायीभूतेन हरिणा प्रयोज्यकर्त्रा दयितः सुहृत् आज्ञानुसारी मे मम भ्राता घातितः ॥ ६ ॥ तस्येति युग्मम् ॥ त्यक्तः स्वभावः समत्वं येन तस्य घृणेः शोच्यस्य मायया वनौकसः पशुरूपस्य भजन्तं भजमानस्य अत एव बालस्य इव अस्थिरात्मनः अव्यवस्थितचित्तस्य अतः मम शूलेन भिन्ना ग्रीवा यस्य तस्य विष्णोर्भूरिणा रुधिरेण रुधिरप्रियं मे भ्रातरं तर्पयिष्ये तर्पयिष्यामि तेन च गतव्यथो भविष्यामि । वस्तुतः घृणेः शुद्धतेजोरूपस्यापि मायया वराहरूपस्य भक्तवात्सल्यात्यक्तस्वभावस्येत्यादिमच्छूलाच्छिन्ना पृथग्भूता ग्रीवा यस्य शूलस्य तत्र प्रवेशासम्भवात्

रुधिरेण भगवदङ्गरागकुङ्कुमेन निर्माल्यभूतेन भ्रातरं भगवद्भक्तं तर्पयिष्ये। "रुधिरं कुङ्कुमं प्रोक्तम्" इति कोशः ॥ ७ ॥८॥ तस्मिन्निति ॥ कूटं दुर्ज्ञानं समीहितं चरितं यस्य तस्मिन् महामायाविनि कूटे कपटवति अहिते शत्राविति वा तस्मिन्नष्टे विष्णुरेव प्राणा जीवनं येषां ते दिवौकसो देवाः शुष्यन्ति स्वयमेव नाशं यास्यन्ति। यथा वनस्पतौ कृत्तमूले सति विटपाः स्वयमेव शुष्यन्ति तथेति। वस्तुतः कूटेषु कपटिष्वपि ईहितं कृपायुक्तं चेष्टितं यस्य तस्मिन् विष्णौ नष्टे अदृश्ये सति इत्यादि ॥ ९ ॥ तावदिति ॥ यावदहमेतत्कुर्यां तावद्यूयं विप्रक्षत्रसमेधितां भुवं यात तत्र च तपोयज्ञादियुक्तान् जनान् सूदयध्वं घातयत ॥ १० ॥ विष्णुरिति ॥ विष्णुः पुमान् द्विजानां क्रियायागाद्यनुष्ठानमेवं मूलं यस्य स तथाभूतोऽस्ति यतोऽसौ यज्ञः धर्ममयश्च यस्मात् देवादीनां परायणं परम आश्रयश्च अतो यज्ञरूपस्य विष्णोर्मूलत्वान्मामनादृत्य तदाश्रयणाच्च ते वध्याः ॥ ११ ॥ यत्रेति ॥ यत्र यत्र द्विजादयः सन्ति तं तं जनपदं देशं यात तं तं च सन्दीपयत दहत वृश्चत छेदं कुरुत। यज्ञोपयोगिवृक्षानिति शेषः ॥ १२ ॥

तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ॥ विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥ तावद् यात भुवं यूयं विप्रक्षत्रसमेधिताम् ॥ सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥ विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ॥ देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥११॥ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ॥ तं तं जनपदं यात संदीपयत वृश्चत ॥ १२ ॥ इति ते भर्तृनिर्देशमादाय शिरसादृताः ॥ तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥ १४ ॥ केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः ॥ प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥ एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ॥ दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥

इतीति ॥ कदनप्रियाः हिंसाविहारास्ते दानवाः आदृताः सादरा इत्येवंभूतं स्वभर्तृनिर्देशं स्वाम्याज्ञां शिरसा आदाय अङ्गीकृत्य तथा तदाज्ञानुसारेणैव प्रजानां कदनं हिंसनं विदधुः चक्रुः ॥ १३ ॥ पुरेति ॥ पुरं हट्टादिमत् ग्रामस्तद्रहितः व्रजो गवां वासः उद्यानं पुष्पप्रधानं वनं क्षेत्रं व्रीह्यादेरुत्पत्तिस्थानम् आरामः फलप्रधानं वनम् आश्रम ऋषीणां स्थानम् आकरो रत्नादिस्थानं खेटः कृषीवलानां वासः खर्वटो गिरिद्रोण्याश्रयो ग्रामः घोष आभीराणां वासः पत्तनं राजधानी एतानि ददहुः दाहादिभिर्नाशयांचक्रुः। एत्वाद्यभाव आर्षः ॥ १४ ॥ केचिदिति सार्द्धम् ॥ केचित् खनित्रैः खननसाधनैः सेत्वादीन्बिभिदुः। केचित्परशुपाणयः आजीव्यान् उपजीव्यान् आम्रपनसादीन् वृक्षान् चिच्छिदुः। प्रादहन्नित्यर्द्धम्। अन्ये तु ज्वालितोल्मुकैः प्रज्वलितकाष्ठैः प्रजानां शरणानि गृहान् प्रादहन् ॥ १५ ॥ एवमिति ॥ एवं दैत्येन्द्रस्यानुचरैः लोके मुहुर्विप्रकृते उपद्रुते सति दिवं परित्यज्य देवा अलक्षिताः सन्तो भुवि चेरुः यज्ञभागाभावात् ॥ १६ ॥

हिरण्येति ॥ भ्रातृमरणदुःखितो हिरण्यकशिपुः सम्परेतस्य मृतस्य भ्रातुः कटोदकं प्रेताय प्रदेयमुदकम् आदिपदाच्छ्राद्धादिकं च कृत्वा भ्रातृपुत्रानसान्त्वयत् । अल्कुक्षमा- साभाव आर्षः । लोकेऽपि प्रजावती भ्रातृजायेत्यादौ प्रयुज्यते ॥ १७ ॥ शकुनिमिति युग्मम् ॥ रुषा युक्तः देशकालज्ञः जनेश्वरः हिरण्यकशिपुः हे जनेश्वरेति संबुद्ध्यन्तं वा । श्लक्ष्णया मधुरया गिरा शकुन्यादीन् भ्रातृपुत्रान् भानुं तन्नाम्नीं तेषां मातरं स्वजननीं दितिं च इदमाह स्म॥१८॥१९॥अम्बेति ॥ हे अम्बाम्ब हे मातः हे वधूर्भ्रातृभार्ये ह्रस्वाभाव आर्षः । हे पुत्राः वीरं हिरण्याक्षं शोचितुं मार्हथ यतो रिपोरभिमुखे शूराणां यो वधः स श्लाघ्यः अतः ईप्सितः इष्ट एव ॥ २० ॥ भूतानामिति ॥ हे सुव्रते मातः प्रपायां पानीयशालायां भूतानां यथा संवासः अध्रुवस्तथा इह संसारे स्वकर्मभिर्द्वारभूतैः कृत्वा दैवेनेश्वरेण एकत्र नीतानां संयोजितानां पुनश्च उन्नीतानां वियोजितानां मातृपु- त्रादीनामपि सहवासः अध्रुव एव ॥ २१ ॥ नित्य इति ॥ आत्मा नित्यः मृत्युशून्यः अव्ययः अपक्षयशून्यः शुद्धः निर्मलः रागादिविडादिमलरहितः सर्वगः सर्ववित् परः

हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः ॥ कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥ शकुनिं शम्बरं धृष्टं भूतसंतापनं वृकम् ॥ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम् ॥ १८ ॥ तन्मातरं रुषा भानुं दितिं च जननीं गिरा॥ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वरः॥१९॥ हिरण्यकशिपुरुवाच ॥ अम्बाम्ब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ॥ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥ भूतानामिह संवासः प्रपायामिव सुव्रते ॥ दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः ॥ २१ ॥ नित्य आत्माऽव्ययः शुद्धः सर्वगः सर्ववित् परः ॥ धत्तेऽसावा- त्मनो लिङ्गं मायया विसृजन् गुणान् ॥ २२ ॥ यथाम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥ २३ ॥ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ॥ याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥

देहादिभ्यः अन्यः अतः मृत इति कृश इति मलिन इति वियुक्त इति अज्ञ इति च मत्वा शोको न कार्यः । कथं तर्हि तस्य संसारस्तत्राह । धत्ते इति असौ आत्मनो मायया अविद्यया शक्त्या मोहितः गुणान् तत्तद्विषयान् सुखादीन् वा विसृजन् सम्पादयन् लिङ्गं मूर्तीः धत्ते । देहेन्द्रियान्तःकरणेषु ममाहमित्यध्यासं करोति । लिङ्गशरीरोपाधिः संसार इत्यर्थः ॥ २२॥ यथेति ॥ उपाधिधर्मा उपहिते भवन्तीति रीत्या यथाम्भसा प्रचलता हेतुभूतेन तत्र प्रतिबिम्बितास्तरवोऽपि चला इव लक्ष्यन्ते वस्तुतस्तरूणां तीरस्थ- त्वेनाध्यासमन्तरेण जलसंबन्धाभावात् यथा च ग्राहकधर्मा ग्राह्ये भवन्तीति रीत्या भ्राम्यमाणेन चक्षुषा हेतुना भित्त्वे ह्रस्वाभाव आर्षः । एवमभिप्रपद्येऽपि भूश्चलतीव भ्रमतीव दृश्यते ॥ २३ ॥ एवमिति ॥ हे भद्रे गुणैः सत्वादिभिः मनसि भ्राम्यमाणे सति पुमान् जीवो वस्तुतः अविकल्पः शोकादिविकाररहितोऽपि तत्साम्यतां मनःसमानतां शोकादिमत्तां याति समशब्दात्स्वार्थे ष्यञ् ततस्तल् । अतः वस्तुतः अलिङ्गोऽपि अध्यासमन्तरेण देहादिसङ्गरहितोऽपि लिङ्गवानिव देहादिमानिव प्रतीयते॥ २४ ॥

एष इति युग्मम्॥यः अलिङ्गे लिङ्गादिव्यतिरेकेऽपि लिङ्गभावना देहादावहंममाध्यासःस एष एवात्मनो जीवस्य विपर्यासः अन्यथाभावः एवं विपर्यासादेष एव प्रियैर्योगो भवति सर्वत्र शेषः । अप्रियैर्वियोगश्च चकारादप्रियैर्योगः प्रियैर्वियोगश्च नानाविधं कर्म च संसृतिः स्वर्गनरकादिगमनं सम्भवो जन्मविनाशो मरणं विविधः शोकश्च तत्वज्ञैः स्मृतः अविवेकः देहादिव्यतिरिक्तात्मा ज्ञानं चिन्ता तत्तत्पदार्थानुध्यानं कदाचिद्विवेके जातेऽपि पुनस्तस्याऽस्मृतिः अननुसन्धानं चेति ॥ २५ ॥ २६॥ अत्रेति ॥ अत्र विषये शोकहेतुं विना वृथैवायं शोक इत्यस्मिन्नर्थेऽपि यमस्य प्रेतस्य मृतस्य बन्धवः तेषां च संवादरूपमिमं पुरातनमितिहासं पुराविद उदाहरन्ति वर्णयन्ति तं मया उच्यमानं निबोध ॥ २७ ॥ उशीनरेष्विति ॥ उशीनरेषु देशेषु सुयज्ञ इति नाम्ना विश्रुतः प्रसिद्धः राजा अभूत् । स च युद्धे सपत्नैः शत्रुभिः निहतस्तं च ज्ञातयः सपिण्डा उपासत तत्समीपे आवृत्य स्थिताः॥ २८ ॥ विशीर्णेति युग्मम् ॥ विशीर्णं रत्नमयं कवचं यस्य तं विभ्रष्टानि आभरणानि स्रजश्च यस्य तं शरेण निर्भिन्नं हृदयं यस्य तं मृधे युद्धभूमौ शयान-

एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ॥ एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥ २५ ॥ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ॥
अविवेकश्च चिन्ता च विवेकस्मृतिरेव च ॥ २६ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥ २७ ॥
उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः ॥ सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥२८॥ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ॥ शरनिर्भिन्नहृ-
दयं शयानमसृगाविलम् ॥ २९ ॥ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम् ॥ रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥ ३० ॥ उशीनरेन्द्रं
विधिना तथा कृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ॥ हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपापतन् ॥३१॥रुदन्त्य उच्चैर्द-
यिताङ्घ्रिपङ्कजं सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः ॥ विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे ॥ ३२ ॥

मसृजा रुधिरेणाविलं व्याप्तं प्रकीर्णाः केशो यस्य तं ध्वस्ते अक्षिणी यस्य तं रभसा संरम्भेण दष्टः दच्छदः ओष्ठो येन तं रजसा कुण्ठमावृतं मुखाम्भोजं यस्य छिन्नमायुधं भुजश्च यस्य तमुपासतेति पूर्वस्यानुषङ्गः॥२९॥३०॥ उशीनरेति ॥ उशीनराणां देशानामिन्द्रं स्वपतिं भर्तारं विधिना प्रारब्धेन कर्मणा तथाकृतं प्राणादिरहितं कृतं प्रसमीक्ष्य तन्महिष्यो दुःखिताः सत्यो हे नाथ त्वयि निहते वयमपि हताः स्मेति वदन्त्यः मुहुः करैरुरो भृशं घ्नन्त्यः सत्यः नृपार्षः । तस्य राज्ञः पदयोः समीपे असमन्तात् अपतन् ॥ ३१ ॥ रुदन्त्य इति ॥ उच्चैः अतिशयेन रुदन्त्यः नृपार्षः । कुचेषु निपातेन तत्कुङ्कुमेनारुणैरस्रैः दयितस्य प्रियस्य राज्ञोऽङ्घ्रिपङ्कजं सिञ्चन्त्यः विस्रस्ताः केशा आभरणानि च यासां ताः नृणां प्राणिनां शुचं शोकं सृजन्त्य आक्रन्दनया आक्रोशेन विलेपिरे विलापं चक्रुः । तदार्षः ॥ ३२ ॥

अहो इति ॥ हे प्रभो अहो आश्चर्यं पुरा येन विधात्रा ब्रह्मणा पुण्यवानुशीनराणां तद्वासिप्राणिनां वृत्तिदः वृत्तिप्रदानपूर्वकपालनेन सुखदः कृत आसीत् । अधुना तेन एवाकरुणेन सता भवान् नोऽस्माकं सर्वेषां दृशामगोचरां दशां प्रणीतो गमितोऽसि अतस्तेनैवाधुना तेषां भवानेव शुचां शोकानां विवर्द्धनः कृतोऽसि ॥ ३३ ॥ त्वयेति ॥ हे महीपते हे वीर कृतज्ञेन सुहृत्तमेन च त्वया विना वयं कथं स्याम भवेम जीवेम अतः हे वीर यत्र त्वं यास्यसि तत्र ते तवानुयानमनुगमनं तव पादयोः शुश्रूषतीनां शुश्रूषां कुर्वतीनामस्माकं शता आर्षः । दिश आदिश तव शुश्रूषार्थं वयमपि म्रियामहे इत्यर्थः ॥ ३४ ॥ एवमिति ॥ मृतं पतिं परिगृह्य एवं विलपतीनां तुमभाव आर्षः । निर्हारं नम्यदाहाय नयनमनिच्छतीनामेव तासाम् अर्कः अस्तमस्ताचलं प्रति सन्न्यवर्तत संप्राप्तः ॥ ३५ ॥ तत्रेति ॥ प्रेतबन्धूनां परिदेवितं रोदनं स्वपुर्यामेवाश्रुत्य श्रुत्वा बालको भूत्वा पुण्यादृष्टबलात् यमः स्वयमेव तत्रोपागतः सन् ह स्फुटं तान् बन्धूनाह स्म । बालको भूत्वेत्यनेन अतिशोकेऽपि बालस्य वचने शुश्रूषासंभवात् चमत्कारकत्वाच्च ॥ ३६ ॥

अहो विधात्राऽकरुणेन नः प्रभो भवान् प्रणीतो दृगगोचरां दशाम् ॥ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते ॥ तत्रानुयानं तव वीरपादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥ एवं विलपतीनां वै परिगृह्य मृतं पतिम् ॥ अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥ ३५ ॥ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम् ॥ आह तान् बालको भूत्वा यमः स्वयमुपागतः ॥ ३६ ॥ यम उवाच ॥ अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः ॥ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम् ॥ ३७ ॥ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः ॥ अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः ॥ तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ॥ ३९ ॥

अहो इति ॥ अहो वयसा अधिकानां प्रौढानां लोकस्य विधिं जन्ममरणादिप्रकारं विपश्यतामप्यमीषां प्रेतबन्धूनामाश्चर्यजनको विमोहः यतः इमे स्वयं तेन मृतेन राज्ञा सह समानो मृत्युलक्षणो धर्मो येषां ते तथाभूता अपि यत्र यस्मात् अव्यक्तान्मनुष्यदेहः आगतस्तत्रैव प्रलयं गतस्तमपार्थं व्यर्थमेव शोचन्ति अवश्यंभाविनि अर्थे प्रतीकाराभावाद्व्यर्थः शोक इत्याशयः । उक्तं च गीतासु । "अव्यक्तादीनि भूतानि" इत्यादि ॥३७॥ अहो इति ॥ अहो वयं बाला अपि धन्यतमाः विचारसामर्थ्येनैतदपेक्षया कृतार्थाः यत् यस्माद्रक्षकत्वेनाभिमताभ्यां मातापितृभ्यामत्र दुःखार्णवे संसारे त्यक्ताः अबलाः दुर्बला अपि वृकादिभिरभक्ष्यमाणा वयम् अपि को वास्मान् रक्षिष्यतीति न विचिन्तयामः यतः योऽतिसंकटे गर्भे रक्षति स एव सर्वत्र रक्षिता ॥३८॥ य इति ॥ हे अबलाः यः अव्ययः ईशः स्वेच्छयैवेदं विश्वं सृजति य एव विश्वं रक्षति यश्च विश्वमवलुम्पते

उपसंहरति तस्येशितुरिदं चराचरं क्रीडनं क्रीडासाधनं तत्त्वविद आहुरिति अतः स एव प्राणिनां निग्रहे संहारे संग्रहे पालने च प्रभुः ॥ ३९ ॥ पथीति ॥ पथि जनसहस्रदृष्टिपातसंभवस्थलेऽपि मार्गे च्युतं वस्तु यदि दिष्टेन दैवेन परमेश्वरेण रक्षितं तदा तत्रैव तिष्ठति कस्यापि दृष्टिविषयो न भवति केनापि नापह्रियते पुनरन्वेषणसमये स्वामिना लभ्यते च तद्विहतं तेनेश्वरेण प्राणिदुरदृष्टानुसारेण तिरोहितं भवत्विति चिन्तितं चेत्तदा गृहेऽलक्ष्यस्थाने स्थितं सुगुप्तमपि यत्नतः पाल्यमानमपि विनश्यति अदृष्टं भवति स्वामिना न लभ्यते मात्रा व्यभिचारिण्या व्यभिचारप्राकट्यभिया वने प्रक्षिप्तः अत एवानाथः रक्षकहीनोऽपि तदीक्षितः तेनेश्वरेणायं जीवत्विति कृपादृष्ट्येक्षितश्चेत्तदा येन केनाप्युपलभ्य रक्षितो जीवत्येव अस्य हतः अनेन ईश्वरेणायं म्रियतामिति विचारितश्चेत्तदा गृहेऽपि स्वजनैरोषधमन्त्राद्यनेकोपायैर्गुप्तो रक्षितोऽपि नैव जीवति ॥ ४० ॥ भूतानीति ॥ सर्वशः सर्वाण्येव देवतिर्यङ्नरादिरूपाणि भूतानि शरीराणि निजयोनिः स्वकारणभूतलिङ्गशरीरं तन्निमित्तैः कर्मभिः कस्मिंश्चित्काले भवन्ति जायन्ते कर्मसमाप्तौ च न भवन्ति विनश्यन्ति च तत्र सर्वप्राणिशरीरे प्रकृतौ प्रकृतिकार्यभूते स्थितोऽपि तत्रायम् आत्मा तस्याः प्रकृतेर्गुणैर्देहधर्मैर्जन्मादिभिः न निबध्यते यतोऽन्यतमः देहादत्यन्तवि-

**पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ॥ जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥**
**भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः ॥ न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥**
**इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम् ॥ यथोदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥ यथाऽ-**
**नलो दारुषु भिन्न ईयते यथाऽनिलो देहगतः पृथक् स्थितः॥ यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥ ४३ ॥**

लक्षणः ॥ ४१ ॥ ननु अहं कृशः स्थूल इत्यादि कथं प्रतीयते—इदमिति ॥ इदं देवमनुष्यादि शरीरं पुरुषस्य जीवस्य मोहजमविवेकादात्मत्वेन ज्ञातं तच्च भौतिकम् अतः शरीरं जीवात्पृथगीयते अनुमीयते । यथा गृहं गृहस्वामिनः पृथक् दृश्यते तथेत्यर्थः । तथा च प्रयोगः । अहमित्यात्मत्वेनाभिमतमपि शरीरं द्रष्टुर्भौतिकाच्च पुरुषाद्भिन्नं दृश्यत्वात् भौतिकत्वाच्च यथात्यन्ताविवेकिन आत्मत्वेनाभिमतमपि गृहं ततः गृहात् गृही पृथक् तद्वदिति विनाशित्वात् अपि देहः आत्मनः पृथक् इत्याह । यथेति । यथा औदकैः परमाणुभिः जातो बुद्बुदादिर्यथा च पार्थिवैर्जातो घटादिः यथा च तैजसैर्जातः कुण्डलादिर्विनश्यति तथा तैरेव त्रिविधैः परमाणुभिरुपादानभूतैः कालेन निमित्तेन जातो जनो देहो विकृतः कालेनैव परिणतः सन् विनश्यति न त्वात्मेत्यन्वयः ॥ ४२ ॥ पृथगवस्थानाभावेऽपि भिन्नत्वे दृष्टान्तः—यथेति ॥ यथाऽनलो दारुतः पृथगवस्थानदशायां प्रतीत्य विषयोऽपि दारुष्ववस्थितो दाहकत्वेन प्रकाशकत्वेन च ततो भिन्न एव ईयते प्रतीयते । यथा च वायुरप्रत्यक्षोऽपि देहगतः प्राणादिरूप उदरनासिकादिचेष्टया भिन्नः स्थित इति प्रतीयते । यथा च नभः सर्वगतमपि न सज्जते क्वापि सङ्गं न प्राप्नोति तथा पुमान् पुरुषः सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयभूतोऽपि तेष्वाश्रितो वा ततः

परः पृथगेवेत्यर्थः ॥ ४३ ॥ सुयज्ञ इति ॥ हे मूढाः यमनुशोचथ स सुयज्ञोऽयं ननु शेत एव न त्वन्यत्र गतोऽतः किमनुशोचथ नन्वनः प्रागसौ शृणोति उत्तरयति स्म च न त्वधुना ततोऽयं मृत इति शोचाम इति चेत् यस्तु शरीरी पूर्वं श्रोता यश्च अनुवक्ता उत्तरदाता स तु इह लोके कर्हिचिदपि प्राणपि न दृश्येत दृश्यो नासीदेवेत्यर्थः । यस्तु दृश्यो देहः स इदानीमपि दृश्यते अतः इदानीमपि शोकोऽनुचितः ॥४४॥ ननु प्राण एव श्रोता वक्ता चेत्याह—नेति ॥ महान् सर्वेन्द्रियप्रवृत्तिहेतुत्वात् अत एव तेषु मुख्यः " प्राणो वै मुख्यः " इति श्रुतेः । असुः प्राणोऽप्यत्र शरीरे न श्रोता नानुवक्ता अचेतनत्वादिति भावः । कस्तर्हि श्रोता वक्ता च तत्राह । इह देहे यस्त्विन्द्रियवान् तत्तदि-न्द्रियैस्तत्तदर्थद्रष्टा श्रोता वक्ता आत्मा स तु प्राणदेहयोः प्राणदेहेन्द्रियादिभ्योऽन्य एव चेतनत्वादित्यर्थः ॥ ४५ ॥ कथं तर्हि कृश इत्यादिदेहधर्मोपाधिस्तत्राह—भूतेति ॥ हि यस्मादयं देहादिभ्योऽन्यस्तस्मादेव भूतेन्द्रियमनोभिर्लिङ्ग्यन्ते लक्ष्यन्त इति तथा तान् उच्चावचान् उत्कृष्टनिकृष्टान् देवतिर्यगादिरूपान् देहान् भजति स्वीकरोति भोगावसाने उत्सृजति त्यजति च कदाचित् तत्रापि देहस्वीकारपरित्यागादिसंसरणमपि स्वेन तेजसा विवेकबलेन उत्सृजति हीत्यनुभवं प्रमाणयति ॥ ४६ ॥ यावदिति ॥ हेत्यवधारणे ।

> सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ॥ यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥ ४४ ॥ न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ॥ यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥ ४५ ॥ भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः ॥ भजत्युत्सृजति ह्यन्यस्तत्रापि स्वेन तेजसा ॥ ४६ ॥ यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्मनिबन्धनम् ॥ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥ वितथोऽभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ॥ यथा मनोरथः स्वाप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥ अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः ॥ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ४९ ॥

यावदात्मा लिङ्गान्वितो देहेन्द्रियादावभिमानवान् भवति तावदेव तस्य कर्मनिबन्धनं बन्धहेतुर्भवति ततः कर्माभिभवादस्यानन्दस्वरूपस्यापि विपर्ययः देहधर्माध्यासः क्लेशो दुःखाविर्भावश्चेत्ययं मायायोगः अनुवर्त्तते ॥४७॥ वितथेति ॥ गुणेषु गुणकार्येषु विषयजन्यसुखादिषु यदर्थः परमार्थ इति दृग् दृष्टिः वचः " अपामसोममृता अभूमाप्नाम-भिर्विहराम " इत्यादिवचनं च तदयं वितथो निष्फलो मिथ्यैवाभिनिवेशः अभिमानं यथा जाग्रदवस्थायां मनोरथप्राप्तराज्यादिसुखं यथा स्वप्नावस्थायां प्राप्तस्त्रीसंभोगादिसुखं च यथा मृषा वस्त्वभावेऽपि तदारोपितत्वात् तथा सर्वमैन्द्रियकमिन्द्रियजन्यं सुखादिकं मृषेति ॥ ४८ ॥ अथेति ॥ अथ तस्माच्छोकस्यानर्थहेतुत्वादित्यर्थः । इह संसारे तद्विदः तत्त्वज्ञाः पण्डिताः नित्यमात्मानमनित्यं देहं वा नैव शोचन्ति आत्मा तु नित्य एवातो नैव शोकार्ह अविनाशित्वात् । देहादयस्त्वनित्या नश्वरस्वभावा एव शोचतां शोचद्भिरपि तेषां स्वभावो नश्वरत्वमन्यथा कर्त्तुं नैव शक्यते इति शोको वृथेति । यद्वा । ननूपदेष्टारोऽपि शोचन्तो दृश्यन्ते तत्राह । नान्यथेति । ज्ञानदार्ढ्याभावात् शोचतां

स्वभावो न निवर्त्तते ॥ ४९ ॥ लुब्धक इति ॥ ईश्वरेण पक्षिणामन्तको नाशको निर्मितः कश्चित् लुब्धको विपिने वने यत्र पक्षिणोऽपश्यत्तत्र तत्र जालं वितत्य विस्तार्य तान् मांसादिभिः प्रलोभयन् विदधे विशेषेण धृतवानित्यन्वयः । प्रलोभनमिति पाठे प्रलोभनं विदधे कृतवानित्यर्थः ॥ ५० ॥ कुलिङ्गेति ॥ तत्र वने विचरन् सन् कुलिङ्गः पक्षिविशेषः कुलिङ्गयोर्मिथुनं युगलं समदृश्यत दृश्यं बभूव तयोर्मध्ये कुलिङ्गी लुब्धकेन सहसा आपन्ना प्रलोभिता ॥ ५१ ॥ सेत्यर्द्धम् ॥ सा च कुलिङ्गस्य महिषी भार्या कालेन यन्त्रिता प्रेरिता सती शिचस्तन्त्यां जालसूत्रे असज्जत बन्धनं प्राप ॥५२॥ कुलिङ्ग इति॥तां कुलिङ्गीं तथा आपन्नाम् आपदं प्राप्ताम् अत एव कृपणां दीनां निरीक्ष्य कुलिङ्गो भृशदुःखितस्तां मोचयितुम् अकल्पः असमर्थः कृपणो दीनश्च स्नेहात्पर्यदेवयत् विलापं कृतवान् ॥५३॥ अहो इति ॥ देवो ब्रह्मा यमो वा अतीव अकरुणः कृपाहीन इत्यर्थः । यतः विभुः महानपि आ सर्वतः करुणयाऽनुकम्पया । यद्वा। करुणया मयि कृपावत्या कृपणं दीनं मा मामनुशोचन्त्या दीनया स्त्रिया किं करिष्यति

लुब्धको विपिने कश्चित् पक्षिणां निर्मितोऽन्तकः ॥ वितत्य जालं विदधे तत्र तत्र प्रलोभयन् ॥ ५० ॥ कुलिङ्गमिथुनं तत्र विचरत् समदृश्यत॥ तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥ सासज्जत शिचस्तन्त्यां महिषी कालयन्त्रिता ॥ ५२ ॥ कुलिङ्गस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥ ५३ ॥ अहो अकरुणो देवः स्त्रिया करुणया विभुः ॥ कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति ॥ ५४॥ कामं नयतु मां देवः किमर्धेनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५५ ॥ कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ॥ मन्दभाग्याः प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५६ ॥ एवं कुलिङ्गं विलपन्तमारात् प्रियावियोगातुरमश्रुकण्ठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥५७॥ एवं यूयमपश्यन्त आत्मापायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥ ५८ ॥

॥ ५४ ॥ काममिति ॥ यदि मम भार्यां नयति तदा स देवो मामपि कामं यथेष्टं नयतु यतः आत्मनो देहस्यार्द्धभागस्य पत्नीरूपस्य नीतत्वादवशिष्टेनार्द्धेनानेन मम देहेन विधुरायुषा भार्याशून्यजीवितेन अत एव दीनेन अत एव दुःखं यथा भवति तथा जीवता मे मया लोके किं प्रयोजनम् ॥ ५५ ॥ कथं त्विति ॥ तुः पादपूर्त्तौ । ये मे प्रजाः पुत्राः मृतमातृत्वान्मन्दभाग्या नीडे स्थिताः आहारार्थं मातरं प्रतीक्षन्ते न जाताः पक्षाः येषां तान्मातृहीनानहं कथं बिभर्मि पुष्णामि ॥ ५६ ॥ एवमिति ॥ एवं प्रियावियोगेनातुरं व्याकुलम् अत एव अश्रुकण्ठं विलपन्तं तं कुलिङ्गं स प्रसिद्धः शाकुनिकः पक्षिहन्ता कालेन प्रहितः प्रेरितः विलीनः छन्नः सन्नारादपूरादेव शरेण विव्याध ताडितवान् ॥ ५७ ॥ एवमिति ॥ हे अबुद्धयः अज्ञाः एवं कुलिङ्गवत् यूयमपि आत्मापायं स्वमृत्युमपश्यन्त्यः अननुसंदधत्यः पतिं शोचन्त्यो वर्षशतैरप्येनं न प्राप्स्यथ किंतु मृत्युमेव

प्राप्स्यथ ॥ ५८ ॥ बाल इति ॥ बालस्वरूपे यमे एवं प्रवदति सति मृतस्य सुयज्ञस्य सर्वे ज्ञातयस्तद्वचनश्रवणेन विस्मितचेतसः सन्तः सर्वं सुखदुःखादिकम् अनित्यमयथोत्थितं वृथैवात्मन्यारोपितं मेनिरे ॥ ५९ ॥ यम इति ॥ यत्साम्परायिकं परलोककृत्यं तच्चक्रुः स्पष्टमन्यत् ॥ ६० ॥ तत इति अर्द्धम् ॥ स्पष्टम् । अशोचन इति पाठे अडागम आर्षः ॥ ६१ ॥ क इति ॥ अयं स्वः अयं परः इत्यभिनिवेश एवाज्ञानं तेन विना अत्र संसारे देहिनां क आत्मा कः परः कः स्वीयः को वा पारक्यः ॥ ६२ ॥ इतीति ॥ सस्नुषा स्नुषया हिरण्याक्षस्त्रिया सहिता । स्पष्टमन्यत् ॥ ६३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो द्वितीये सप्तमस्य व्यधादिमाम् ॥ २ ॥ तृतीये तपसा तुष्टे हिरण्यकशिपोर्विधिः ॥ तस्मै वरानदात्तत्र श्लोका नवगुणा मताः ॥ चत्वार्युवाचेति चैकचत्वारिंशदनुष्टुभः ॥ ३ ॥ हिरण्येति ॥ हे राजन् इति हिरण्यकशिपुरात्मानम-

हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥५९॥ यम एतदुपाख्याय तत्रैवान्तरधीयत ॥ ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत् साम्परायिकम् ॥ ६० ॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ ६१॥ क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम् ॥ ६२ ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६३ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे कुलिङ्गकथनेन दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥ नारद उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥१॥ स तेपे मन्दरद्रोण्यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥ जटादीधितिभी रेजे संवर्तार्क इवांशुभिः ॥ तस्मिंस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ॥ तिर्यगूर्ध्वमधो लोकानतपद् विष्वगीरितः ॥ ४॥

जेयं शत्रुभिर्जेतुमशक्यम् अजरमपक्षयरहितम् अमरं मृत्युशून्यम् अप्रतिद्वन्द्वं प्रतिपक्षहीनम् एकराजं त्रिषु लोकेषु एकमेव राजानं व्यधित्सन कर्तुमैच्छत वक्ष्यमाणाभिप्रायेण ब्रह्मलोकपर्यन्तं स्वस्यैवैकाधिपत्यं कामयमानोऽभूत् ॥ १ ॥ स इति ॥ स हिरण्यकशिपुः ऊर्ध्वौ बाहू यस्य नभसि दृष्टिर्यस्य सः पादाङ्गुष्ठेनाश्रिता अवनिर्येन सः मन्दराचलस्य पर्वतस्य द्रोण्यां तत्समीपस्थगिरिद्वयान्तरालदेशे परमदारुणं दुष्करं तपस्तेपे ॥२॥ जटानां दीधितिभिः कान्तिभिः रेजे अंशुभिः रश्मिभिः संवर्तार्क इव प्रलयकर्ता सूर्यो यथा राजते दीप्यते तद्वत् । तस्मिन् हिरण्यकशिपौ तपस्तप्यमाने सति तद्भयाभावात् पूर्वं ये देवाः तद्भयेनालक्षिताः सन्तो भुवि चेरुस्ते पुनः स्वानि स्थानानि भेजिरे ॥ ३ ॥ तस्येति ॥ तस्य मूर्ध्नः समुद्भूतो निःसृतः तपोमयः तपसैधितः सधूमोऽग्निः विष्वगीरितः सर्वतः प्रसृतः सन् तिर्यगूर्ध्वमधश्च स्थितान् लोकान् अतपत् तापयामास ॥ ४ ॥

चुक्षुभुरिति ॥ नद्यः उदन्वन्तः समुद्राश्च चुक्षुभुः वृद्धिं प्राताः द्वीपैरद्रिभिश्च सहिता भूश्चचाल ग्रहैः शुक्रादिभिः सहितास्तारा निपेतुः दश दिशश्च तपोमयाग्निना जज्वलुः॥५॥ तेनेति सार्द्धम् ॥ तेनाग्निना दैत्येन्द्रस्य तपोवर्धिताग्नितापेन । स्पष्टमन्यत् ॥६॥ तस्येति ॥ हे भूमन् हे अभिभूः अभितो भवतीत्यभिभूः सर्वाधिपतिस्तत्संबोधनं यावत् तव बलिहाराः पूजाकारिणः लोकाः न नङ्क्ष्यन्ति तावदेव यदि मन्यसे तर्हि तस्य सर्वलोकोपद्रवस्योपशमं निवारणं विधेहि कुरु । अभिभोः इति सविसर्गपाठे भो इति सम्बोधनम् । अभि अभितः यावन्न नङ्क्ष्यन्ति इति संबन्धः ॥ ७ ॥ ब्रह्मणस्तस्मिन् द्वेषमुत्पादयितुमाहुः—तस्येति ॥ दुश्चरमितरैः कर्तुमशक्यं तपश्चरतस्तस्य योऽयं संकल्प इत्यर्थः । स सर्वज्ञस्य तव किं न विदितः किलेत्यवधारणे ज्ञात एव तथाप्यस्माभिर्निवेदितं त्वया श्रूयताम् ॥८॥ सृष्ट्वेति युग्मम् ॥ परमेष्ठी ब्रह्मा तपसि व्रतोपवासादौ योगे आसनप्राणायामादौ च यः समाधिः निष्ठा तेन चराचरात्मकमिदं सर्वं जगत्सृष्ट्वा सर्वपूज्यः सन् सर्वधिष्ण्येभ्यः इन्द्रादिस्थानेभ्यः श्रेष्ठं यन्निजासनं सत्यलोकं तत् यथा अध्यास्ते अधिति-

चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ॥ ६ ॥ तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तवाभि भोः ॥ ७ ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां किं न विदितस्तवाथापि निवेदितम् ॥ ८ ॥ सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥ तदहं वर्धमानेन तपोयोगसमाधिना ॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः॥१०॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥ किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः ॥ ११ ॥ इति शुश्रुम निर्बन्धं तपः परममास्थितः ॥ विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १२ ॥ तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते ॥ भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥

इति तथाहमपि देहस्य वारंवारं मरणेऽपि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिस्तपस्तप्त्वा वर्धमानेन तपोयोगसमाधिना तदेव स्थानम् आत्मनः साधयिष्ये ॥ ९ ॥ १० ॥ अन्यथेति ॥ ओजसा तपोबलेन इदं विश्वम् अन्यथा वैपरीत्येन अयथापूर्वं यथा पूर्वन्नासीत्तथा विधास्ये पापमेव सुखसाधनम् पुण्यं दुःखसाधनं असुराणां स्थानं स्वर्गः देवानां च स्थानं पातालादीत्येवं सर्वं पूर्वतो वैपरीत्यमेव यथेष्टं सम्पादयिष्यामि अवान्तरकल्पान्ते कालेन निर्धूतैः कालेन विनाश्यैरन्यैर्वैष्णवादिभिः ध्रुवादिपदैः किं प्रयोजनम् अतो ब्रह्मलोकमेव साधयिष्यामि ॥ ११ ॥ इतीति ॥ इत्येवं त्वत्पदहरणे तस्य निर्बन्धमाग्रहं शुश्रुम तदर्थमेव परमं तपोऽयमास्थितः त्वमपि त्रिभुवनेश्वरः सर्वथा तत्प्रतीकारे समर्थोऽसि अतो यदत्र युक्तं तदनन्तरमाश्वेव विधत्स्व निर्विसर्गपाठे हे त्रिभुवनेश्वर॥१२॥तव स्थानभ्रंशे द्विजादीनां कष्टं स्यादित्याशयेनाहुः—तवेति ॥ हे जगत्पते

तवेदं पारमेष्ठ्यं सर्वोत्कृष्टमासनं स्थानं द्विजानां गवां च भवाय उद्भवाय श्रेयसे सुखाय भूत्यै ऐश्वर्याय क्षेमाय लब्धपालनाय विजयाय उत्कर्षाय चेति ॥ १३ ॥ इतीति ॥ हे नृप इत्येवं देवैर्विज्ञापितः भगवानात्मभूर्ब्रह्मा भृगुदक्षाद्यैः प्रजेश्वरैः परीतः दैत्येश्वरस्य आश्रमं तपश्चर्यास्थानं ययौ ॥१४॥ नेति युग्मम् ॥ वल्मीकैस्तृणैः कीचकैर्वेणुभिश्च प्रतिच्छन्नं पिपीलिकाभिः आचीर्णं समन्तात् भक्षितं मेदश्च त्वक् च मांसं च शोणितं च यस्य तं तपसा तपोऽग्निना लोकान् तपन्तम् अभ्रैरपिहितः प्रतिच्छन्नोऽपि रविर्यथा नैव लक्ष्यते तथा वल्मीकादिभिः प्रतिच्छन्नं हंसवाहनो ब्रह्मा तत्र गत्वा प्रथमं तं न ददर्श पश्चात्कथंचिद्विलक्ष्य विस्मितः सन् प्रहसन् प्राह स्म ॥१५ ॥१६ ॥ उत्तिष्ठेति ॥ हे काश्यप त्वमुत्तिष्ठोत्तिष्ठ वीप्सा आदरार्था। तव भद्रमेव भविष्यति यतः तपसा सिद्धोऽसि फलसिद्धियोग्यतपःसंपन्नोऽसि इत्यर्थः । अत एवाहं वरदः अभीष्टदोऽनुप्राप्तोऽस्मि अतस्त्वया स्वेप्सितो वरो व्रियताम् ॥ १७ ॥ अद्राक्षमिति ॥ अहं ते तवैतत् हृत्सारं धैर्यं महदद्भुतमत्याश्चर्यजनकमद्राक्षं दृष्टवानस्मि । हि यस्मात् दंशैर्मक्षिकाविशेषैर्भक्षितो

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ॥ परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४ ॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितम् ॥१५॥ तपन्तं तपसा लोकान् यथाऽभ्रापिहितं रविम् ॥ विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाहनः॥१६॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप ॥ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥१७॥ अद्राक्षमहमेतत् ते हृत्सारं महदद्भुतम् ॥ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १८ ॥ नैतत् पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ॥ निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ १९ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ॥ तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥२०॥ ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ॥ मर्त्यस्य ते अमर्त्यस्य दर्शनं नाफलं मम ॥ २१ ॥ नारद उवाच ॥ इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः ॥ कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा ॥ २२ ॥

देहो यस्य तस्य तव प्राणा अस्थिषु शेरते अस्थीनि भुञ्जानास्तिष्ठन्तीति ॥ १८ ॥ नेति ॥ एतत् एवंविधं तपः पूर्वर्षयो भृग्वादयो न चक्रुर्न चापरे अर्वाचीनाः करिष्यन्ति को वै दिव्यसमाः शतं देवमानेन संवत्सरशतपर्यन्तं निषिद्धमम्बु येन स निरम्बुस्त्यक्तोदकः सन् प्राणान् धारयेत् न कोऽपीत्यर्थः ॥ १९ ॥ व्यवसायेनेति ॥ हे दितिनन्दन मनस्विनाम् ऋष्यादीनामपि शेषे षष्ठी दुष्करेणानेन तपोविषयकेन ते तव व्यवसायेनैव तावदहं जितो वशीकृतोऽस्मि तपोनिष्ठेन भवता तु सुतरां जितोऽस्मि॥२०॥ तत इति ॥ ततस्तस्मात् हे असुरपुङ्गव ते तुभ्यं सर्वा आशिषः सर्वान् इष्टान् अर्थान् ददामि यतः मर्त्यस्य मरणधर्मकदेहवतस्तव अमर्त्यस्य देवस्य द्विपरार्धायुषो मम दर्शनमफलं निष्फलं न भवति किं तु सफलमेवेत्यर्थः । अतो वरं वृणीष्व ॥ २१ ॥ इतीति ॥ आदौ भवति इति आदिभवो देवो ब्रह्मा एवमुक्त्वा तेनाप्रार्थितत्वात्कृपावशात् अमोघम्

इष्टार्थसाधकं राधः प्रभावो यस्य तेन दिव्येन कमण्डलुजलेन पिपीलिकैर्भक्षितमङ्गं यस्य तं दैत्यमङ्गादिसम्पत्त्यर्थमौक्षत् प्रोक्षितवान् ॥ २२ ॥ स इति सार्द्धम् ॥ तत् ततः प्रोक्षणादेव सहः मनःशक्तिः ओजः इन्द्रियशक्तिः बलं देहशक्तिः तैरन्वितः सर्वैरवयवैः पाणिपादादिभिः सम्पन्नो युक्तः वज्रसंहननः वज्रवद्दृढगात्रः युवा युवावस्थां प्राप्तः तप्तस्य हेम्न इवाभा कान्तिर्यस्य सः हिरण्यकशिपुः कीचकाच्छन्नाद्वल्मीकात् कीटादिसम्पादितमृच्चयात् उत्थितः विनिःसृतः एधसः काष्ठाद्यथा विभावसुः अग्निः प्रादुर्भवति तद्वदित्यर्थः ॥ २३ ॥ स इति ॥ स एवंविधः हंसवाहं देवं ब्रह्माणम् अम्बरे आकाशे अवस्थितं निरीक्ष्य तस्य दर्शनेन महान् उत्सवः आह्लादो यस्य स तथाभूतः शिरसा भूमौ ननाम ॥ २४ ॥ उत्थायेति ॥ तत उत्थाय दृशा नेत्रेण विभुं ब्रह्माणमीक्षमाणः हर्षेणाश्रूणि पुलकोद्भेदो रोमोद्गमश्च यस्य तादृशः प्राञ्जलिः प्रह्वः नम्रश्च सन् गद्गदया स्खलिताक्षरया गिरा अगृणात् अस्तावीत् ॥ २५ ॥ कल्पान्त इति युग्मम् ॥ कल्पान्ते दैनंदिनप्रलये कालेन निमित्तेन सृष्टेन प्रेरितेन अन्धेन तमसा प्रकृत्यवयवेन तमोगुणेन

स तत्कीचकवल्मीकात् सहओजोबलान्वितः ॥ सर्वावयवसंपन्नो वज्रसंहननो युवा ॥ उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २३ ॥
स निरीक्ष्याम्बरे देवं हंसवाहमवस्थितम् ॥ ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥ उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा
विभुम् ॥ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात् ॥ २५ ॥ हिरण्यकशिपुरुवाच ॥ कल्पान्ते कालसृष्टेन योऽन्धेन तमसा वृतम् ॥
अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ २६ ॥ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ॥ रजःसत्त्वतमोधाम्ने पराय महते
नमः ॥ २७ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ॥ प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषे जगतस्तस्थुषश्च
प्राणेन मुख्येन पतिः प्रजानाम् ॥ चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ २९ ॥

ननु ध्वान्तेन आवृतमिदं जगत् यः स्वयंज्योतिः स्वयंप्रकाशरूपः स्वरोचिषा स्वप्रकाशेन पुनरभिव्यनक् अभिव्यक्तमकरोत् । यश्च त्रिवृता त्रीन् गुणान् वृणोति सृष्ट्यादि-कार्यार्थं स्वीकरोति इति तथा तेन आत्मना इदं विश्वं सृजति अवति रक्षति लुम्पति संहरति च तस्मै रजःसत्वतमसां धाम्ने आश्रयाय पराय परमेश्वराय महते व्यापकाय नमः ॥ २६ ॥ २७ ॥ नम इति ॥ आद्याय बीजाय सर्वेषामादिकारणाय ज्ञानं ज्ञप्तिः विज्ञानं विशेषज्ञानं विषयाकारं ते मूर्ती यस्य प्राणाश्च उभयविधेन्द्रियाणि च मनश्च बुद्धिश्च विकाराश्च पृथ्व्यादयस्तैर्व्यक्तिं कार्यरूपतामीयुषे प्राप्तवते नमः । एतेन स्वप्रकाशत्वं जगत्प्रकाशकत्वं निमित्तत्वमुपादानत्वं चोक्तम् ॥ २८ ॥ त्वमिति ॥ मुख्येन प्राणेन सूत्रात्मकेन जगतो जङ्गमस्य तस्थुषः स्थावरस्य च त्वमेवेशिषे नियन्ता भवसि प्राणेनैव रूपेण प्रजानां पतिर्भवसि तथा चित्तस्य चित्तेस्तत्परिणामभूताया श्चेतनायाश्च मनसश्च तन्नियम्यानामिन्द्रियाणां च पतिः पालकश्च महांश्च त्वमेव यतो भूतानामाकाशादीनां तद्गुणानां शब्दादिविषयाणाम् आशयानामन्तःकरणानां तद्वासनानां चेशः [illegible]

एतेन महत्त्वमीश्वरत्वं स्रष्टृत्वं च दर्शितम् ॥ २९ ॥ त्वमिति ॥ त्रय्या तन्वा वेदत्रयरूपेण चत्वारो होतारो होता उद्गाता अध्वर्युर्ब्रह्मेति यत्र तच्चातुर्होत्रकं कर्म तद्विषयया विद्यया च त्वमेव सप्ततन्तून् तन्यन्ते विस्तार्यन्त इति तन्तवः अग्निष्टोमोक्थषोडश्यतिरात्राप्तोर्यामवाजपेयरूपाः सप्तविधा यज्ञाः तान् वितनोषि विस्तारयसि त्वमेव एकः आत्मवतां जीवानाम् आत्मा अनादिः अनन्तपारः नास्त्यन्तः पारश्च कालदेशाभ्यां यस्य स कविः सर्वज्ञः अन्तरात्मा अन्तर्यामी चेति ॥ ३० ॥ त्वमेवेति ॥ अनिमिषः निमेषोन्मेषादिरहितः सर्वद्रष्टा कालोऽपि त्वमेव अतो लवाद्यैरवयवैर्जनानामायुः क्षिणोषि क्षपयसि तथा त्वमेव कूटस्थो निर्विकारः आत्मा परमेष्ठी परमे स्वस्वरूपे स्थानशीलः अजः जन्मशून्यः महान् व्यापकः जीवलोकस्य जीवयिता तस्य आत्मा च ॥ ३१ ॥ त्वत्त इति ॥ परं कारणमुत्कृष्टं वा अपरं कार्यं निकृष्टं वा तत्रापि राजत् जङ्गमम् अनेजत् स्थावरं च यत्किञ्चिदपि वस्तु त्वत्तो व्यतिरिक्तं नास्ति सर्वाः विद्या वेदोपवेदादयः कलास्तदङ्गानि व्याकरणादीनि च तवैव तनवः शरीरभूताः हिरण्यरूपं प्रकाशमानं

त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च ॥ त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥३०॥ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ॥ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ३२ ॥ व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् ॥ भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥ ३३ ॥ अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥३४॥ यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥३५॥

ब्रह्माण्डं गर्भे यस्य सः बृहद् ब्रह्मासीति त्रिपृष्ठः त्रिगुणात्मकस्य प्रधानस्य पृष्ठे परतः बहिरपि स्थित इत्यर्थः ॥ ३२ ॥ व्यक्तम् इति ॥ हे विभो येन शरीरेण पारमेष्ठ्ये सर्वोत्कृष्टे स्वधामनि स्वस्वरूपे स्थित एव त्वम् इन्द्रियप्राणमनसां गुणान् विषयान् भुङ्क्षे न त्वस्मदादिवत्स्वरूपतिरोधानेन तदिदं तव शरीरं व्यक्तं वैराजाख्यं कार्यभूतमेव यतः स्थूलं वस्तुतस्तु त्वमव्यक्तः अतीन्द्रियः आत्मा सर्वव्यापकः पुरुषः सर्वान्तर्यामी पुराणः सर्वकारणकारणभूतो जन्मादिविकाररहितो नित्यश्च ॥ ३३ ॥ अनन्तेति ॥ अनन्तम् अव्यक्तं च यद्रूपं स्वरूपं तेन येनाखिलमिदं विश्वं ततं मृत्सुवर्णादिना घटकुण्डलादिवद्व्याप्तं तस्मै चिच्छक्तिःविद्या अचिच्छक्तिर्माया ताभ्यां युक्ताय तस्मै भगवते नमः ॥ ३४ ॥ यदीति ॥ हे वरदोत्तम हे प्रभो यदि ममाभिमतान् वरान् त्वं दास्यसि तदा त्वया विसृष्टेभ्यो भूतेभ्यः सकाशान्मम मृत्युर्मा भूदिति । अत्रामरत्वप्रार्थने ब्रह्मा प्रत्याख्यास्यति अतः युक्त्या अमरत्वं वरणीयमिति दैत्याशयः । ब्रह्मणैव सर्वभूतानां सृष्टत्वादपरः कोऽवशिष्ट इति भावः ॥ ३५ ॥

मृत्योः स्वतोऽपि संभवादत आह—नेति ॥ गृहादीनामन्तः तेभ्यो बहिश्च दिवा अहनि नक्तं रात्रौ चेति सर्वदेशकालनिराकरणम् अन्यस्मात् त्वत्सृष्टव्यतिरिक्तादर्थात् स्वतोऽपि कालाच्च आयुधैः खड्गादिभिः भूमौ पृथिव्याम् अम्बरे आकाशे अन्तरालप्रदेशे न नरैर्न मृगैरपीति मृत्युर्मा भूदिति देहीति नरमृगयोः ब्रह्मसृष्टत्वेऽपि व्याकुलतावशात्पुनरुक्तिः दक्षादिसृष्टत्वशङ्कया वा एवमग्रेऽपि। विष्णुरुद्रयोस्तु मोहाद् ब्रह्मसृष्टचन्तःपातित्वं मत्वा न तयोर्नामग्रहणम् ॥ ३६ ॥ व्यसुभिरिति ॥ व्यसुभिः प्राणरहितैः पाषाणादिभिः असुमद्भिः सप्राणैरिति सामान्येन चराचरवस्तुमात्रैर्वा सुरैरसुरैर्महोरगैः सर्पैश्च मृत्युर्मा भूदित्यन्तमेको वरः युद्धे अप्रतिद्वन्द्वतां प्रतिपक्षराहित्यं देहि इति द्वितीयः। तथा देहिनामैकपत्यमेकाधिपतित्वं च देहीति तृतीयः ॥ ३७ ॥ सर्वेषामिति ॥ सर्वेषां लोकपालानां मध्ये यथा आत्मनः तव महिमा अस्ति तं देहीति चतुर्थः। तपसा योगेन च प्रभावो येषां तेषां यदैश्वर्यादिकं कर्हिचिदपि न रिष्यति न नश्यति तन्मे न नश्येदिति च देहीति पञ्चमः ॥ ३८ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥

नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः ॥ न भूमौ नाम्बरे मृत्युर्नरैरपि मृगैरपि ॥ ३६ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ॥ अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ३७ ॥ सर्वेषां लोकपालानां महिमानं यथात्मनः ॥ तपोयोगप्रभावानां यन्न रिष्यति कर्हिचित् ॥३८॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः ॥ ३ ॥ नारद उवाच ॥ ॥ एवं वृतः शतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात् तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥ १ ॥ ब्रह्मोवाच ॥ तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम ॥ तथापि वितराम्यङ्ग वरान् यदपि दुर्लभान् ॥ २ ॥ ततो जगाम भगवानमोघाऽनुग्रहो विभुः ॥ पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ॥ भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥

गङ्गासहायस्तृतीये सप्तमस्य व्यधादिमाम् ॥ ३ ॥ चतुर्थे लोकपान् जित्वा विष्णुद्वेषेण दैत्यराट् ॥ तान् भूयोऽपीडयत्तत्र श्लोकाः सार्द्धा नगाब्धयः ॥ अनुष्टुभस्तु पञ्चाशद्-वाचेति चतुष्टयम् ॥ ४ ॥ एवमिति ॥ एवं वृतो याचितः तस्य तपसा प्रीतः शतधृतिर्ब्रह्मा अथानन्तरं तस्य हिरण्यकशिपोः सुदुर्लभानपि वरान् प्रादात् ॥ १ ॥ तातेति ॥ हे तात यान् वरान् त्वं मम मत्तो वृणीषे ते इमे पुंसां दुर्लभाः। यदपि यद्येवं तथापि तान् दुर्लभानपि वरान् तुभ्यं वितरामि ददामि ॥ २ ॥ तत इति ॥ ततः अमोघः सत्योऽनुग्रहो यस्य सः विभुर्भगवान् ब्रह्मा असुरवर्येण तेन पूजितः प्रजेश्वरैर्मरीच्यादिभिः स्तूयमानः सन् स्वस्थानं जगाम ॥३॥ एवमिति ॥ एवं लब्ध्वा वरा येन स दैत्यः हिरण्यकशिपुः हेममयं हिरण्यवत्प्रकाशमानं वपुर्बिभ्रत्सन् भ्रातुर्हिरण्याक्षस्य वधं भगवत्कृतमनुस्मरन् तस्मिन् भगवति द्वेषमकरोत् ॥ ४ ॥

स इति त्रयम् ॥ स महासुरो हिरण्यकशिपुः त्रीन् लोकान् सर्वा दिशश्च विजित्य तत्रापि देवासुरमनुष्येन्द्रादीन् सर्वसत्त्वपतीन् सर्वप्राण्यध्यक्षांश्च जित्वा वशमानीय विश्वजित् सन् सर्वलोकपालानां तेजसा सह स्थानानि जहार अपहृतवान् । पक्षिणां मुख्यत्वात् तदुपलक्षणार्थं गरुडग्रहणम्॥५॥६॥७॥ देवेति सार्द्धम् ॥ देवोद्यानं च जहारेत्यनुषङ्गः। देवोद्यानेति समस्तोऽपि पाठः। श्रिया सर्वसमृद्ध्या जुष्टं युक्तं त्रिविष्टपं स्वर्गमध्यास्ते स्म अधिष्ठितवान् । अत्र त्रिविष्टपेऽपि विश्वकर्मणा निर्मितं त्रैलोक्यलक्ष्म्या आयतनमाधारभूतमत एवाखिलार्द्धयुक्तं साक्षान्महेन्द्रभवनं महेन्द्रभवन अध्युवास ॥८॥ यत्रेति चतुष्कम् ॥ यत्र भवने विद्रुममणिमयाः सोपाना महामारकताः इन्द्रनीलमयाः भुवः स्थलानि वेदिकादीनि यत्र भुवने स्फटिकमयानि कुड्यानि भित्तयः यत्र वैडूर्यमणिमयानां स्तम्भानां पङ्क्तयः यत्र चित्राणि विचित्ररूपाश्रयभूतानि वितानानि पद्मरागमयान्यासनानि च पयःफेननिभाः दुग्धफेनवन्मृदुलाः शुभ्राश्च शय्याः मुक्तादामानि परिच्छदाः परिकरा यासां ताः यत्र च देव्यः देवस्त्रियः सुदतीः सुदत्यः । पूर्वसवर्णदीर्घ आर्षः ।

स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ॥ देवासुरमनुष्येन्द्रान् गन्धर्वगरुडोरगान् ॥५॥ सिद्धचारणविद्याध्रानृषीन् पितृपतीन् मनून् ॥ यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनथ ॥ ६ ॥ सर्वसत्त्वपतीन् जित्वा वशमानीय विश्वजित् ॥ जहार लोकपालानां स्थानानि सह तेजसा ॥७॥ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ॥ महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्धिमत् ॥ ८ ॥ यत्र विद्रुमसोपाना महामारकता भुवः ॥ यत्र स्फाटिककुड्यानि वैडूर्यस्तम्भपङ्क्तयः ॥ ९ ॥ यत्र चित्रवितानानि पद्मरागासनानि च ॥ पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥ १० ॥ कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ॥ रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥ तस्मिन् महेन्द्रभवने महाबलो महामना निर्जितलोक एकराट् ॥ रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥ १२ ॥ तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥१३॥

कूजद्भिः ध्वनद्भिर्नूपुरैरितस्ततः तत्र शब्दयन्त्यः शब्दं कुर्वत्यः रत्नस्थलेषु सुन्दरं स्वकीयं मुखं पश्यन्ति तस्मिन् महेन्द्रभवने महाबलः महामनाः निर्जिता लोका येन सः एक एव राजते इति एकराट् प्रतापितैः देवादिभिरभिवन्द्यम् अङ्घ्रियुगं यस्य सः ऊर्जितमधिकं प्रचण्डं तापकं शासनं यस्य स दैत्यः रेमे ॥ ९ ॥ १०॥ ११ ॥ १२ ॥ तमिति ॥ अङ्ग हे युधिष्ठिर त्रिभिः ब्रह्मविष्णुशिवैर्विनान्ये अशेषधिष्ण्यपाः सर्वलोकपालाः उपायनं पूजाद्रव्यं तद्युक्तपाणिभिरुपलक्षिताः सन्तः उरुगन्धिना महासुगन्धिना मधुना सुरया समासान्त आर्षः । मत्तम् अनवहितमत एव विवृत्ते विघूर्णिते ताम्रे अरुणे अक्षिणी यस्य तं तपः तेजः योगः देहेन्द्रियादिवशीकारः बलं देहसामर्थ्यम् ओज इन्द्रियादिसामर्थ्यं तेषां च पदमाश्रयं तम् उपासत सेवितवन्तः ॥ १३ ॥

उपासनप्रकारमाह—जगुरिति ॥ ओजसा स्वबलेन महेन्द्रस्यासनमास्थितमधिष्ठितं तं विश्वावसुर्गन्धर्वमुख्यः तुम्बुरुश्च अस्मदादयो नारदादयश्च गाननिपुणाः सर्वे जगुस्तद्गुणगानं चक्रुरित्यर्थः । तथा हे पाण्डव गन्धर्वादयः विद्याधरादयश्च मुहुरस्तुवन् ॥ १४ ॥ स इति ॥ स एवासुरः वर्णाश्रमनिष्ठैर्गृहस्थादिभिः कर्तृभिः भूरिर्दक्षिणा येषु तैः साधनभूतैः क्रतुभिरिज्यमानः हविर्भागान् स्वेन तेजसा बलात्कारेणाग्रहीत् ॥ १५ ॥ अकृष्टेति ॥ तस्यासुरस्य संबन्धिनी या सप्तद्वीपयुक्ता मही पृथिवी सा अकृष्टपच्या कर्षणेन विनैव पक्वफलवत्यभूत् दैत्यस्यास्य वेनवदधर्मिष्ठत्वेऽपि तद्भयादेव भूम्यादयोऽकृष्टपच्यत्वादिगुणयुक्ता अभूवन् । अन्यथा दैत्येनानेन भूम्यादयः शीघ्रं नाश्येरन् वेनस्तु तादृक्प्रभावो नासीत् यतः स भृग्वादिभिरेव भस्मीकृतः । अयं भृग्वादीनां तेजः प्रथममेवाजहार इति ज्ञेयम् । तथा द्यौः स्वर्गः नानाकामदुघा अभूत् नभः नानाश्चर्यमयं विविधवस्तुप्रदमभूत्। नानाश्चर्यपदमित्यपि पाठः ॥ १६ ॥ रत्नेति ॥ क्षारश्च सीधु सुरा च घृतं च क्षौद्रम् इक्षुरसश्च दधि च क्षीरं च अमृतं शुद्धं च उदकानि येषां ते तथा क्रमश्च नात्र विव-

जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ॥ गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥ स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा ॥ १५ ॥ अकृष्टपच्या तस्यासीत् सप्तद्वीपवती मही ॥ तथा कामदुघा द्यौस्तु नानाश्चर्यपदं नभः ॥ १६ ॥ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसिन्धुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥ शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः ॥ दधार लोकपालानामेक एव पृथग्गुणान् ॥ १८ ॥ स इत्थं निर्जितककुबेकराड्विषयान्प्रियान् ॥ यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥१९॥ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ॥ कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः ॥ २० ॥ तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ॥ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥

क्षितः रत्नाकराः समुद्राः तत्पत्न्यो नद्यश्च ऊर्मिभिः तरङ्गैः रत्नौघान् रत्नसमूहान् ऊहुः प्रापयामासुः ॥ १७ ॥ शैला इति ॥ शैलाः पर्वताः द्रोणीभिः पर्वतद्वयान्तरसमदेशैः आक्रीडं क्रीडास्थानं मुहुः मुहुः तथा द्रुमाः सर्वे एव सर्वेष्वेव षट्सु ऋतुषु स्वगुणान् फलपुष्पादींश्च ऊहुः स एक एव सर्वेषां लोकपालानामिन्द्राग्निवाय्वादीनां पृथग्गुणान् वर्षणदाहशोषणादिरूपान् प्रतिनियतान् दधार सर्वेषामाधिपत्यमेकः स्वयमेव चकारेत्यर्थः ॥ १८ ॥ स इत्थमिति ॥ इत्थं निर्जिताः ककुभो दिशो येन सः अत एक एव राजते इत्येकराट् तथाभूतः सन्नपि अजितेन्द्रियः सः यथोपजोषं यथाप्रीति प्रियान् इष्टान् विषयान् भुञ्जानोऽपि नातृप्यत् ॥ १९ ॥ एवमिति ॥ ऐश्वर्येण मत्तस्य दृप्तस्य उच्छास्त्रवर्तिनः शास्त्रमर्यादामुल्लङ्घ्य वर्तमानस्य ब्रह्मशापमुपेयुषः इति सनकादिशापं प्राप्तवतः तस्य दैत्यस्य महान् कालो विफल एव व्यतीयाय अतिक्रान्तोऽभूत् । एकसप्ततियुगानि किञ्चिदधिकानि इति स्वामिपादाः ॥ २० ॥ तस्येति ॥ तस्योग्रेण दण्डेन शासनेन संविग्नाः अतिभीताः सपालकाः सर्वे लोकाः भगवतः सकाशादन्यत्र न लब्धं

शरणं रक्षको यैस्ते अच्युतं भगवन्तं विष्णुं शरणं ययुः ॥ २१ ॥ तस्यै इति ॥ प्रणतिश्लोकः यत्र यस्यां सर्वेषामात्मा हरिरीश्वरः आस्ते यत् यां काष्ठां यं श्रीहरिं वा गत्वा प्राप्य शान्ताः अमलाः संन्यासिनो लोकाः पुत्रधनेच्छारहिता न निवर्तन्ते संसारे न पतन्ति तस्यै काष्ठायै दिशे नमः । सर्वदेशव्यापकस्य हरेः सर्वत्र गत्वा स्तुतिः कृता- ति । यद्वा । तस्यै काष्ठायै तस्मै उत्कर्षाय नमः यस्मिन्नुत्कर्षे हरिरस्तीति अन्ये सर्व एवोत्कर्षा अनेनासुरेण जिता इति भावः ॥ २२ ॥ इतीति ॥ इत्येवं संयतात्मानः वशीकृतचित्ताः समाहितधियः एकाग्रबुद्धयः विनिद्रा वायुभोजनाः अमलाश्च सन्तस्ते हृषीकेशं भगवन्तमुपतस्थुः तुष्टुवुः । तङ्भाव आर्षः ॥ २३ ॥ तेषामिति ॥ तेषां देवानामनुग्रहसूचिका अरूपा अदृश्यकर्तृका मेघनिःस्वना मेघवत् गम्भीरघोषा ककुभो दिशः संनादयन्ती प्रतिध्वनयन्ती साधूनामभयङ्करी भयनिवर्तिका वाणी आविर्भूत उत्पन्नेत्यर्थः ॥ २४ ॥ मेति ॥ हे विबुधश्रेष्ठाः यूयं मा भैष्ट भयं मा कुरुत वो युष्माकं सर्वेषां सप्रजानां भद्रं सुखमेवास्तु । हि यस्मान्मम दर्शनं स्तवनं श्रवणं च भूतानां सर्वश्रे-

तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ॥ यद्गत्वा न निवर्तन्ते शान्ताः संन्यासिनोऽमलाः ॥ २२ ॥ इति ते संयतात्मानः समाहितधियोऽ-
मलाः ॥ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३॥ तेषामाविरभूद्वाणी अरूपा मेघनिःस्वना ॥ सन्नादयन्ती ककुभः साधूनामभयंकरी
॥ २४ ॥ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ॥ मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये॥२५॥ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत् ॥
तस्य शान्तिं करिष्यामि कालं तावत् प्रतीक्षत ॥ २६ ॥ यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ॥ धर्मे मयि च विद्वेषः स वा आशु विनश्यति
॥२७॥निर्वैराय प्रशान्ताय स्वसुताय महात्मने॥प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम्॥२८॥नारद उवाच॥इत्युक्ता लोकगुरुणा तं प्रणम्य
दिवौकसः॥ न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम्॥२९॥तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः॥प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः॥३०॥

यसां पुरुषार्थानामुपपत्तये प्राप्तये भवति ॥ २५ ॥ ज्ञातमिति ॥ दैतेयेषु अपसदस्य अधमस्य एतस्य हिरण्यकशिपोर्यत् दौरात्म्यं दुर्जनत्वं सर्वपीडाकरत्वं तत् युष्मद्विज्ञापनं विनैव मया ज्ञातमतस्तस्य दैत्यस्य शान्तिं वधं करिष्यामि तावत्कालं प्रतीक्षत किञ्चित्कालं विलम्बं सहध्वमित्यर्थः । तङ्भाव आर्षः ॥ २६ ॥ यदेति ॥ यदा यस्मिन् काले यस्य प्राणिनो देववेदादिषु विद्वेषो जायते तदा स आशु विनश्यति ॥ २७ ॥ ननु बहुकालं देवादीन्द्विषन्नपि नायं नष्ट इति चेत्तत्राह–निर्वैरायेति ॥ यदायं निर्वैराय प्रशान्ताय महात्मने स्वसुताय प्रह्लादाय द्रुह्येत् तद्वधोपायं करिष्यति तदा ब्रह्मवरैरूर्जितमप्येनमहं हनिष्ये । तङार्षः । सर्वमहं सहे न मद्भक्तद्रोहमिति भावः ॥ २८ ॥ इतीति ॥ इत्येवं लोकगुरुणा भगवता उक्तास्तद्वचनविश्वासात् गत उद्वेगो भयं येषां ते तथा दिवौकसो देवास्तं प्रणम्य स्वस्थानं प्रति न्यवर्तन्त तदानीं प्रह्लादद्वेषस्य प्रवृत्त- त्वात्तमसुरं हतप्रायं मेनिरे अमन्यन्त ॥२९॥ तस्येति ॥ तस्य दैत्यपतेः प्रह्लादानुह्लादसंह्लादाह्लादाख्याश्चत्वारः परमाद्भुताः परमप्रभावाः पुत्रा आसन् तेषां मध्ये प्रह्लादः

महतामुपासकः इत्यादिभिः गुणैः महानभूत् ॥ ३० ॥ ब्रह्मण्य इति ॥ ब्रह्माणि कुले परस्मिन् वा साधुर्ब्रह्मण्यः शीलेन सुस्वभावेन सम्पन्नः सत्यसन्धः सत्यप्रतिज्ञः जितेन्द्रियः आत्मवत् परमात्मवत् एक एव सर्वभूतानां प्रियः सुहृत्तमः हितैषी चेति ॥ ३१ ॥ दासवदिति सार्द्धम् ॥ दासवत् सम्यक् सन्नता नमस्कर्ता आर्याणां महतामङ्घ्रयो येन सः पितृवत् दीनेषु वत्सलः वात्सल्ययुक्तः भ्रातृवत्सदृशे स्वतुल्ये स्निग्धोऽनुरागयुक्तः गुरुषु ईश्वर इति भावना दृष्टिर्यस्य सः विद्यादिभिर्यो मानो गर्वः स्तम्भः अनम्रता ताभ्यां विवर्जितः । जन्माढ्य इति पाठे यद्यपि विद्यादिभिराढ्यः तथापि मानस्तम्भविवर्जितः ॥ ३२ ॥ नेति ॥ व्यसनेषु दुःखेषु प्राप्तेष्वपि न उद्विग्नं न व्याकुलं चित्तं यस्य सः श्रुतेषु आमुष्मिकेषु स्वर्गराज्यादिषु दृष्टेषु ऐहिकेषु च गुणेषु विषयेषु निस्पृहः तृष्णारहितः यतस्तेष्ववस्तुदृक् अप्रयोजकत्वबुद्धिः दान्ता नियमेन वशीकृताः इन्द्रियादयो यस्य सः बुद्धिवशीकरणादेव प्रशान्तः कामो यस्य सः स्वयमसुरोऽपि रहितासुरः मात्सर्याद्यासुरभावरहितः । सदेति प्रतिविशेषणमन्वीयते ॥ ३३ ॥ यस्मिन्निति ॥

ब्रह्मण्यः शीलसंपन्नः सत्यसंधो जितेन्द्रियः ॥ आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ॥ ३१ ॥ दासवत् संनतार्याङ्घ्रिः पितृवद् दीनवत्सलः ॥
भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥ ३२ ॥ नोद्विग्नचित्तो व्यसनेषु निःस्पृहः
श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ॥ दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥३३॥ यस्मिन्महद्गुणा राजन् गृह्यन्ते कविभिर्मुहुः ॥ न तेऽधुनापि धीयन्ते यथा भगवतीश्वरे ॥३४॥ यं साधुगाथा सदसि रिपवोऽपि सुरा नृप ॥ प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः
॥ ३५ ॥ गुणैरलमसंख्येयैर्माहात्म्यं तस्य सूच्यते ॥ वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३६ ॥

हे राजन् यस्मिन् प्रह्लादे महतो भगवतो महतां तद्भक्तानां वा ये गुणा निःस्पृहत्वादयस्ते मुहुर्मुहुः कविभिर्विवेकिभिर्गृह्यन्ते । महति काले गतेऽपि तेऽधुना वर्तमानकालेऽपि नापि धीयन्ते तिरोहिताः न भवन्ति । तत्र दृष्टान्तः । यथेति । यथा भगवतीश्वरे वर्तमाना गुणा नापि धीयन्ते कविभिश्च मुहुर्गृह्यन्ते तथेत्यर्थः ॥ ३४ ॥ यमिति ॥ हे नृप साधुगाथा सदसि साधुकथा प्रसङ्गवत्यां सभायां रिपवः शत्रवोऽपि सुराः यं प्रह्लादं प्रतिमानं साधुत्वे प्रह्लादतुल्योऽयं भक्त इति दृष्टान्तं प्रकुर्वन्ति । अन्ये भवादृशा मध्यस्थास्तं प्रति मानं कुर्वन्तीति किमुत वक्तव्यमित्यर्थः ॥ ३५ ॥ गुणैरिति ॥ यस्य प्रल्हादस्य वासुदेवे भगवति नैसर्गिकी स्वाभाविक्येव रतिः नतु कामाद्युपाधिकृता अतः तस्य असङ्ख्येयैर्गुणैरलं पर्याप्तं सर्वे गुणा मया वर्णयितुं न शक्यन्ते इत्यर्थः । किन्तु एवं गुणवर्णनेन तस्य माहात्म्यं सूच्यते तत् सूचनमात्रं क्रियते इत्यर्थः । यद्वा । असङ्ख्येयैरेव गुणैस्तस्यालं कः खलूत्कर्षः अन्ये पुरुषा गुणैरुत्कर्ष्यन्तां नाम प्रह्लादस्योत्कर्षहेतुरन्यदेव वस्तु वर्त्तते तदेव किं तदाह । सूच्यते सुष्ठु उच्यते किं तत् वासुदेव इत्यादि

॥ ३६ ॥ नैसर्गिकरतेर्लिङ्गान्याह—न्यस्तेति ॥ बालोऽपि न्यस्तक्रीडनकः परित्यक्तक्रीडासाधनः कृष्ण एव ग्रहः विषयेभ्य आकर्षकस्तेन गृहीतः आकृष्ट आत्मा मनो यस्य सः अन्यभक्तैरिव न तेन चित्तं कृष्णे निवेशितं किन्तु कश्चिद् ग्रहो लोभ्यं द्रव्यमिव कृष्ण एव तन्मनो गृहीतवानिति भावः । तन्मनस्तया भगवदेकचित्तत्वेन जडवत् अन्यैर्लक्ष्यमाणः ईदृशं यथा व्यवहारावस्थायां प्रतीयते तादृशं जगन्न वेद किन्तु कृष्णमयमेव ॥ ३७ ॥ आसीन इति ॥ गोविन्देन परिरम्भितः आत्मना एकीकृतः अयं भावः । अतिवत्सलेन पित्रा मात्रा वा एकद्व्यब्दिको बालो यथा प्रतिक्षणमेव परिरभ्य क्रोडस्थीक्रियते तथैव प्रह्लादोऽपि भोजनशयनादिसमये भगवता लिङ्ग्यते तादृशोऽसौ आसीनः इत्यादि आसनादिव्यापारं कुर्वन्नप्येतानि आसनवर्त्मभक्ष्यशयनीयपेयवक्तव्यानि नानुसंधत्ते न जानाति ॥ ३८ ॥ क्वचिदिति ॥ मातरि गतायां बाल इव क्वचिद्भगवति क्षणमन्तर्हिते वैकुण्ठस्य हरेः चिन्तया शबला व्यामिश्रा चेतना यस्य स क्वचिद्रुदति रोदिति रौति । तुदादित्वमार्षम् । क्वचित् भगवत्प्रादुर्भावे मुग्धबाल इव हसति क्वचिच्च तस्य वैकुण्ठस्य चिन्तया ह्लादो यस्य सः तद्गुणानेव क्वचिदुच्चैस्तरां गायतीत्यर्थः ॥ ३९ ॥ नदतीति ॥ दूरे प्रादुर्भूतं भगवन्तं दृष्ट्वा उत्कण्ठ उच्चीकृतकण्ठः सन् क्वचिन्नदति

**न्यस्तक्रीडनको बालो जडवत् तन्मनस्कया ॥ कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३७ ॥ आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन् ब्रुवन् ॥ नानुसंधत्त एतानि गोविन्दपरिरम्भितः ॥ ३८ ॥ क्वचिद् रुदति वैकुण्ठचिन्ताशबलचेतनः ॥ क्वचिद् हसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ३९ ॥ नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ॥ क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४० ॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ॥ अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४१ ॥ स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसङ्गलब्धया ॥ तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसङ्गदीनान्यमनः शमं व्यधात् ॥ ४२ ॥**

हे कृष्ण हे प्रभो इत्याकारयति । क्वचित् आनन्दातिशयेन विक्षिप्त इव विलज्जो नृत्यति । क्वचिद्भगवत्स्फूर्तिभङ्गे सति तद्विरहखेदाधिक्येन तद्भावनातिशययुक्त उन्मत्तवदहमेव भगवानिति तन्मयः सन् अनुचकार तल्लीलामपि स्वयमेव कृतवानित्यर्थः ॥ ४० ॥ क्वचिदिति ॥ क्वचित् संस्पर्शस्तद्भावापत्तिस्तेन निर्वृतः सुखितः । यद्वा । क्वचित्स्वहृदये प्रादुर्भूतं भगवन्तमालोक्य तत्पाणिसंस्पर्शेन निर्वृतः सुखितः अत एव उत्पुलकः उदञ्चितरोमा अस्पन्दः स्थिरो यः प्रणयः स्नेहस्तेन यः आनन्दः तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः क्वचित्तूष्णीमास्ते ॥ ४१ ॥ स इति ॥ स प्रह्लादः अकिञ्चनाः त्यक्तलोकव्यवहारा भगवद्भक्ता अस्मदादयस्तेषां सङ्गेन तत्कृपया लब्धया उत्तमश्लोकस्य भगवतः पदारविन्दयोर्नितरां सेवया आत्मनः स्वस्य परां निर्वृतिं परमानन्दं तन्वन् विस्तारयन् मुहुर्मुहुः दुःसङ्गेन दीनानामन्येषामपि दैत्यबालानां मनः शमं शान्तं व्यधात् । यद्वा । “शमो मन्निष्ठता बुद्धेः” इति भगवद्वचनात् भगवन्निष्ठमकरोदित्यर्थः ॥ ४२ ॥

तस्मिन्निति ॥ हे राजन् महाभागवते महाभागे महात्मनि तस्मिन् आत्मजे प्रह्लादे हिरण्यकशिपुः अघं द्रोहमकरोत् ॥ ४३ ॥ पूर्वाध्यायान्तपृष्टमेवार्थमतिविस्मयेन पुनः पृच्छति—देवर्ष इति ॥ हे देवर्षे हे सुव्रत तव त्वत्तः एतद्वेदितुं ज्ञातुं वयमिच्छामः । यत् आत्मजाय स्वपुत्राय प्रीतियोग्याय शुद्धाय निर्दोषाय साधवे पित्राद्यात्मभक्ताय प्रह्लादाय पिता हिरण्यकशिपुः अघमदात् मरणपर्यन्तं तस्य द्रोहमकरोत् तत्र कारणं वेदितुमिच्छाम इत्यर्थः ॥ ४४ ॥ पुत्रानिति सार्द्धम् ॥ विप्रतिकूलान् स्वाज्ञामुल्लङ्घ्य दुराचारे प्रवृत्तानपि स्वकीयान् पुत्रान् पुत्रवत्सलाः पितरः शिक्षार्थं केवलम् उपालभन्ते आक्षिपन्ति अपरो यथा शत्रुरिव अघं मरणपर्यवसायिनं द्रोहं तु नैव कुर्वन्ति अनु-वशान् स्वानुकूलान् साधून् अनुरागद्वेषान् गुरुः पिता एव देवता देवतावदुपासनीयो येषां तान् तादृशान् प्रह्लादसदृशान पुत्रानुद्दिश्य द्रोहं न कुर्वन्तीति किमुत वक्तव्यम् ॥ ४५ ॥ एतदिति ॥ हे प्रभो पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्रा कृतो द्वेषः पुत्रस्य मरणार्थं प्रयोजित इति यत् । यद्वा । यदस्मात् पुत्राय यो द्वेषः स तस्य पितुरेव मरणाय

**तस्मिन्महाभागवते महाभागे महात्मनि ॥ हिरण्यकशिपू राजन्नकरोदघमात्मजे ॥ ४३ ॥ युधिष्ठिर उवाच ॥ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ॥ यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥ ४४ ॥ पुत्रान्विप्रतिकूलान्स्वान्पितरः पुत्रवत्सलाः ॥ उपालभन्ते शिक्षार्थं नैवाघमपरो यथा ॥ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ॥ ४५ ॥ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ मनो भ्रमति मे विद्वन्नेतस्मिन्संकटे द्विजः ॥ ४६ ॥ इति श्रीभागवते सप्तमस्कन्धे हिरण्यकशिपुदिग्विजयप्रह्लादसाधुभाववर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ नारद उवाच ॥ पौरोहित्याय भगवन्वृतः काव्यः किलासुरैः ॥ शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ॥ पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥ यत् तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ॥ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् ॥ ३ ॥**

इत्येतदस्माकं कुतूहले भवं कौतूहलं सन्देहं विधम अपाकुरु ॥ ४६ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायश्चतुर्थे सप्तमस्य व्यधादिमाम् ॥ ४ ॥ पञ्चमे स्वसुतं विष्णोर्भक्तं घ्नन् भुजगादिभिः ॥ नाशकत् दैत्यराट् तत्र श्लोकाः सार्द्धा नगेषवः ॥ उवाचदर्शकं सार्द्धात्रैकषष्टिरनुष्टुभः ॥ ५ ॥ पौरोहित्यायेति ॥ भगवान् काव्यः शुक्रः पौरोहित्याय पुरोहितकर्म कर्तुमसुरैर्वृतः स्वीकृतः किल तस्य काव्यस्य सुतौ शण्डामर्काख्यौ दैत्यराजस्य हिरण्यकशिपोर्गृहस्य अन्तिके समीपे न्यवसतामिति शेषः ॥ १ ॥ ताविति ॥ तौ च शण्डामर्कौ राज्ञा हिरण्यकशिपुना प्रेषितं नये युक्त्या तत्त्वविचारे कोविदं निपुणमपि बालं प्रह्लादं तथान्यानसुरबालकांश्च पाठ्यान् दण्डनीत्यादीन् पाठयामासतुः पठनं कारितवन्तौ । पाठ्यानसुरबालकानिति वान्वयः ॥ २ ॥ यदिति ॥ तत्र गुरुगृहे यत्तु दण्डनीतिशास्त्रं गुरुणा प्रोक्तं तत् प्रह्लादः शुश्रुवे श्रुतवान् अनु अनन्तरं पपाठ च परंतु तन्नीतिशास्त्रम् अयं स्वः स्वकीयः मित्रम् अयं परः शत्रुरित्येवंभूतो यः असद्ग्रहः मिथ्याभिनिवेशः स एवाश्रयो यस्य तत्तादृशमभूत् अतः तत्साधु

सम्यक् मनसा न मेने ॥ ३ ॥ एकदेति ॥ हे पाण्डव एकदा असुरराट् स्वपुत्रं प्रह्लादमङ्कमारोप्य उत्सङ्गे निधाय हे वत्स भवान् यत्साधु मन्यते तत्कथ्यतामित्येवं पप्रच्छ । कठिनविषयप्रश्ने बालस्य खेदो भविष्यति अतो यमभ्यस्तीकृतं वस्तु मदग्रे वक्तुं शक्नुयात्तदेव वदत्विति हिरण्यकशिपोरभिप्रायः ॥ ४ ॥ प्रह्लादस्तु अत्र जगति जिज्ञास्यानां मध्ये किं वस्तु भवान् साधु मन्यते इति मां पृच्छति इति ज्ञात्वोत्तरमाह–तदिति ॥ हे असुरवर्य्य असदग्रहात् अहं ममेति मिथ्याभिनिवेशाद्धेतोः सदा सम्यक् अत्यन्तमुद्विग्ना अनवस्थिता धीर्येषां ते तेषां देहिनां तदहं साधु मन्ये यत् आत्मनः पातो यस्मात् तत् अन्धकूपं जलशून्यकूपवत् दुःखप्रदं गृहं हित्वा परित्यज्य वनं गतः सन् हरिमाश्रयेत भजेत वनमित्येकान्तस्थानोपलक्षणम् ॥५॥ श्रुत्वेति ॥ परपक्षे देवपक्षे विष्णौ समाहिताः परिनिष्ठिताः पुत्रस्य गिरः श्रुत्वा दैत्यो जहास हास्यपूर्वकमुवाचेत्यर्थः । बालानां बुद्धिः परस्मिन् शत्रौ विष्णौ बुद्धिर्येषां तैर्देवपक्षैर्भिद्यते विपरीता क्रियते ॥ ६ ॥ सम्यगिति ॥ हे दैत्याः अयं बालो गुरुगृहे सम्यग् विधार्यतां रक्ष्यतामिति

एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ॥ पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ४ ॥ प्रह्लाद उवाच ॥ तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥ नारद उवाच ॥ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ॥ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ॥ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ॥ प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥ वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ॥ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः॥९॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ॥ भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ १० ॥ प्रह्लाद उवाच ॥ स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ॥ विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥

यथा येन प्रकारेण प्रतिच्छन्नैः असुरवेषेणाच्छन्नैः विष्णुपक्षैर्विष्णुभक्तैर्द्विजातिभिर्ब्राह्मणादिभिरस्य धीर्न भिद्येत विपरीता न भवेत्तथेत्यर्थः ॥७॥ गृहमिति ॥ दैत्ययाजकाः दैत्यपुरोहिताः स्वगृहं प्रति दैत्यभृत्यैरानीतं प्रापितं प्रह्लादं प्रशस्य प्रस्तुत्य सामोक्तिभिः श्लक्ष्णया मृदुया वाचा समपृच्छन्त । तद्गाषं ॥ ८ ॥ वत्सेति ॥ हे वत्स हे प्रह्लाद ते भद्रं भवतु यद्वयं पृच्छामस्तत्सत्यं यथार्थं कथय मृषा मा कथय । बालानतिक्रम्य सर्वान् बालान् विहाय तुभ्यं तवैव एष बुद्धिविपर्ययः कुतो हेतोरभूत् ॥९॥ बुद्धीति ॥ तवायं बुद्धिभेदः बुद्धिविपर्यासः परैर्विष्णुपक्षपातिभिः कैश्चित्कृतः उताहो आहोस्वित् स्वत एवाभवत् तदेतत् हे दैत्यकुलनन्दन नः श्रोतुकामानां गुरूणामस्माकमग्रे भण्यतां कथ्यताम् ॥ १० ॥ स्व इति ॥ पुंसां स्वः परश्चेत्यसद्ग्राहः मिथ्याभिनिवेशः यस्य मायया एव कृतः नतु वास्तवः अत एव तद्विमुखानां तन्मायया विमोहितधियां भवतामेव स्वः पर इत्यभिनिवेशो दृष्टः प्रत्यक्षः न तु मम । तस्मै भगवते नमः ॥ ११ ॥

ननु किमेवं प्रलपसि यतस्तव बुद्धिभेदो जातस्तं कथयेत्याक्षिप्तः सन् तत्प्रसादादेवेत्युत्तरमाह—स इति ॥ यदा स एव भगवान् अनुव्रतः अनुकूलो भवति तदा अन्य एषः अन्योऽहमित्येवं भेदगता देहाद्यात्मविषया असती दुष्टा अनर्थहेतुः पुंसां पशुबुद्धिर्विभिद्यते निवर्तते अभिन्नात्मनिष्ठा भवति ॥ १२ ॥ भेदस्यासत्वं दर्शयन्नाह—स एष इति ॥ हि यस्मादेषः स्वः पर इत्येवंभूता भेददर्शनरूपा अबुद्धिः अविद्या येषां तैर्दुरत्ययं दुर्घटमनुक्रमणमनुसरणं विश्वासेन भजनं यस्य स तथाभूतः शास्त्रेषु तत्त्वज्ञैर्निरूप्यते । यद्वा । दुरत्ययमनुक्रमणमनुचरणमनुवर्णनं वा यस्य सः स एष परमात्मैव स्वः पर इति च अबुद्धिभिरविवेकिभिर्निरूप्यते यस्य वर्त्मनि कथं सृष्ट्यादिलीलां करोति कृत्वापि कथं निर्विकार एव तिष्ठति कथं प्रसीदतीत्यादिरूपे मार्गे ब्रह्मादयो वेदवादिनोऽपि मुह्यन्ति कान्यस्य कथेति स एव आत्मा अन्तर्याम्येव मे मतिं भिनत्ति सर्वात्मैकविषयां करोति ॥ १३॥ यथेति ॥ हे ब्रह्मन् यथा अयो लोहमाकर्षस्यायस्कान्तस्य सन्निधौ स्वयं कारणान्तरं प्रयोजनं चानुद्दिश्य भ्राम्यति तथा मे मम चेतः

स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ॥ अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ १२ ॥ स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ॥ मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥१३॥ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥ नारद उवाच ॥ एतवाद् ब्राह्मणायोक्त्वा विरराम महामतिः ॥ तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः॥१५॥आनीयतामरे वेतमस्माकमयशस्करः॥ कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥ दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः॥यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः॥१७॥इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ॥ प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥१८॥

चक्रपाणेर्हरेः सन्निधौ स्वयं यदृच्छया तस्यैवेच्छया भिद्यते द्रवणं भवति । कस्य पुण्यस्य फलमेतदिति न ज्ञायत इत्यर्थः ॥ १४ ॥ एतावदिति ॥ ब्राह्मणाय शुक्रपुत्राय एतावदुक्त्वा स महामतिः प्रह्लादः विरराम तूष्णीं बभूव । अथ स्वामिशत्रुश्रवणात् कुपितः दीनो राजसेवकः स ब्राह्मणस्तं प्रह्लादं निर्भर्त्स्य उवाचेति शेषः ॥ १५ ॥ आनीयतामिति ॥ अरे इति राजभृत्यविशेषस्य सम्बोधनम्। वेत्रं प्रहरणसाधनयष्टिविशेष आनीयताम् । यतोऽयं प्रह्लादोऽस्माकम् अयशस्करः अपयशःकर्ता अतः दैत्यकुलाङ्गारवत्तन्नाशकस्य दुर्बुद्धेरस्य प्रह्लादस्य चतुर्थो दमः दण्डाख्य उचितः ॥ १६ ॥ दैतेयेति ॥ दैतेया एव चन्दनद्रुमास्तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः तदेवाह । यस्य दैतेयवनस्य मूलस्योन्मूलने च्छेदने परशोः परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नालवदाचरितवान् परशोर्नालदण्ड इवायं विष्णोर्दैत्योच्छेदने सहकारी जातः ॥ १७ ॥ इतीति ॥ इत्येवं वदन् तं प्रह्लादं विविधोपायैस्तर्जनादिभिः भीषयन् धर्मार्थकामाख्यस्य त्रिवर्गस्योपपादकं शास्त्रं ग्राहयामास ग्राहयितुं यतते स्म इत्यर्थः ॥ १८ ॥

तत इति ॥ ततः किञ्चित् कालानन्तरं ज्ञातं ज्ञेयं सामाद्युपायचतुष्टयं येन तं तथाभूतमेनं प्रह्लादं ज्ञात्वा पूर्वं मात्रा मृष्टमुद्वर्तितं स्नापितमलंकृतं च तं परीक्षार्थं दैत्येन्द्रं प्रति दर्शयामास तत्समीपं नीतवानित्यर्थः ॥ १९ ॥ पादयोरिति ॥ असुरो हिरण्यकशिपुः पादयोः पतितं बालं चिरं जीवेत्याशिषा प्रतिनन्द्य दोर्भ्यां चिरं परिष्वज्य आलिङ्ग्य परां निर्वृतिं परमानन्दमाप प्राप्तवानित्यर्थः ॥ २० ॥ आरोप्येति ॥ हे युधिष्ठिर तमङ्कमारोप्य तस्य मूर्धन्यवघ्राय अश्रूणां कला बिन्दवः तासामम्बुभिस्तमासिञ्चन् हर्षेण विकसद्वक्त्रः प्रसन्नमुखः इदं वक्ष्यमाणमाह स्म ॥ २१ ॥ प्रह्लादेति ॥ हे प्रह्लाद हे तात हे आयुष्मन् एतावता कालेन गुरोर्हिरण्यकशिपुमते शुक्रात्मजात् प्रह्लादमते नारदाद् भवान् यदशिक्षत् तच्छाव आर्षः । तत्र यत्स्वधीतं सुष्ठु अभ्यस्तमसंदिग्धमुत्तमं श्रेष्ठं च तत्किञ्चिदुच्यताम् ॥ २२ ॥ प्रल्हादस्तु ब्राह्मणाधमयोरनयोर्गुरुत्वं नास्तीत्यतो नारदाच्छिक्षितमाह—श्रवणमिति युग्मम् ॥ विष्णोः श्रवणं कीर्तनं स्मरणं पादसेवनं परिचर्या अर्चनं पूजनं वन्दनं वाचा नामसहितनमस्कारोच्चारणं कायेन

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ॥ दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥१९॥ पादयोः पतितं बालं प्रतिनन्द्याशिषासुरः॥परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥ आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ॥ आसिञ्चन् विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ २१ ॥
हिरण्यकशिपुरुवाच ॥ प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् ॥ कालेनैतावता युष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥ प्रह्लाद उवाच ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ आर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥ इतिपुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥ निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥
ब्रह्मबन्धो किमेतत् ते विपक्षं श्रयताऽसता ॥ असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥

दण्डवत्प्रणामश्च दास्यं कर्मार्पणं सख्यं तद्विश्वासादि आत्मनिवेदनं देहादि सर्वं भगवत एव इति भावनया सर्वचिन्तात्यागः । यथा विक्रीतस्य गवाश्वादेः पालनादिचिन्ता न क्रियते तद्वदिति । इत्येवं नव लक्षणानि अवान्तरप्रकारा यस्याः सा एकप्रकारापि भक्तिर्भगवति विष्णौ अर्पिता समर्पितैव सती तत्प्रीत्यर्थमेव केवलं फलोद्देशं विनैव पुंसा अद्धा साक्षात् अनन्तरमेव चेत् क्रियते नतु कृता सती पश्चादर्प्यते तदुत्तममधीतं मन्ये न त्वस्माद्गुरोरधीतं शिक्षितं वा तथाविधं किञ्चिदस्तीति भावः ॥ २३ ॥ २४ ॥ निशम्येति ॥ तदा स्वसुतस्यैतद्वचो निशम्य श्रुत्वा रुषा प्रस्फुरितोऽधरओष्ठो यस्य स हिरण्यकशिपुर्गुरुपुत्रमिदं वाक्यमुवाच ॥ २५ ॥ ब्रह्मेति ॥ हे ब्रह्मबन्धो ब्राह्मणेष्वधम हे दुर्मते एतत्त्वया किं कृतं यतः विपक्षं देवपक्षं श्रयता आश्रयता असता दुष्टेन त्वया मामनादृत्यायं बालोऽसारं मम द्वेषि विष्णुभजनं ग्राहित इति वस्तुतो न सारं यस्मादिति

सर्वसारमित्यर्थः ॥ २६ ॥ सन्तीति ॥ दुष्टं कपटयुक्तं मित्रं मित्रत्वं येषां ते तथा च्छद्म कपटयुक्ता मित्रवद्वेष एषामिति तथा तादृशाः लोके असाधवः सन्त्येव परं तु अन्ततः कस्मिंश्चित्काले तेषामघं द्वेषाचरणमुदेति प्रकटं भवत्येव । यथा “ ब्रह्महा क्षयरोगी स्यात् ” इत्यादिवचनैः पातकिनां रोगे यथोदेति तेन तत्पापं ज्ञातं भवति तथा कार्यद्वारा एतेषां कपटमपि ज्ञायत इत्यर्थः ॥ २७ ॥ नेति ॥ हे इन्द्रशत्रो न हि दीने ब्राह्मणे मयि तव कोप उचित इति भावः । हे राजन् एष तव सुतो यद्वदति तन्मया न प्रणीतं न पाठितं न वा परेणान्येन केनचित्प्रणीतं पाठितमिति अस्य इयं मतिः नैसर्गिकी स्वाभाविकी न तु केनापि शिक्षिता अतः मन्युं कोपं नियच्छ नोऽस्मभ्यं कत् कुत्सितं दोषं मा स्म अदाः माङ् माङ्योगेऽप्यडागम आर्षः । मयि दोषारोपं मा कृथा इत्यर्थः ॥ २८ ॥ गुरुणेति ॥ गुरुणैवं प्रतिप्रोक्तः दत्तोत्तरः सन्नसुरः हिरण्यकशिपुः भूयः सुतं प्रह्लादमाह स्म । हे अभद्र कुलनाशक यदि इयं गुरुमुखी गुरुर्मुखमुद्भवहेतुर्यस्याः सा गुरुवाक्यजनिता न भवति । ङीप् तु क्लेशेनैव समर्थनीयः । तदा असती दुष्टा मतिरियं तव कुतो जाता भद्रा सती सर्वोत्तमा इति वास्तवोऽर्थः ॥ २९ ॥ अस्या मतेर्यूयं नाधिकारिण इत्याशयेनाह–मतिरिति ॥ गृह एव व्रतं संकल्प आसक्तिर्येषाम् अदान्तै-

सन्ति ह्यसाधवो लोके दुर्मैत्राच्छद्मवेषिणः ॥ तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥ गुरुपुत्र उवाच ॥ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ॥ नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कद्दाः स्म मानः ॥ २८ ॥ नारद उवाच ॥ गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ॥ न चेद् गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ २९ ॥ प्रह्लाद उवाच ॥ मतिर्न कृष्णे परतः स्वतो वा मिथोभिपद्येत गृहव्रतानाम् ॥ अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥ ३० ॥ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः ॥ अन्धा यथान्धैरुपनीयमाना वागीशतन्त्यामुरुदाम्नि बद्धाः ॥ ३१ ॥

रवशीभूतैरिन्द्रियैः हेतुभिस्तमिस्रं संसारं विशताम् यद्वा । नरकपातहेतुभूतं पापमाचरतां पुनः पुनः स्वपराभ्यां चर्वितस्यैव चर्वणं येषां तेषां भवादृशानां परतः एवंभूताद्गुरोः सकाशात् स्वतः प्रयत्नात् वा मिथोऽन्योऽन्यतो वा कृष्णे मतिर्नाभिपद्यते ॥ ३० ॥ नेति ॥ ये दुराशयाः दुष्टो विषयाक्रान्त आशयोन्तःकरणं येषां ते बहिर्विषयेष्वर्थः परमार्थबुद्धिर्येषां ते बहिरर्थास्तानेव गुरुत्वेन मन्तुं शीलं येषां ते स्वस्मिन् भगवत्येवार्थः पुरुषार्थो येषां त्यक्तलोकवित्तपुत्रैषणानां तेषां गतिगम्यमित्यर्थः । तं विष्णुं न विदुः किंतु । स्वर्गादिकमेव किन्तु वागीशस्य विष्णोः तन्त्यां दीर्घरज्ज्वां वेदलक्षणायामुरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां तैस्तैः काम्यकर्मभिर्बद्धा भवन्तीत्यर्थः । अन्धैरुपनीयमाना अन्धा यथा पन्थानं नैव विदुः किंतु गर्त एव पतन्ति तथा अज्ञानां शिष्या अपि दुःखमेवानुभवन्ति नतु भगवन्तं विदुः । तदुक्तम् । “ विषयाविष्टचित्तानां विष्णवावेशः सुदूरतः । ” इत्यादि ॥ ३१ ॥

नैषामिति ॥ यावत् निष्किञ्चनानां महीयसां पादरजोभिरात्मनोऽभिषेकं न वृणीत तच्चरणं नाश्रयेत तावद्वेदवाक्यतो जाताप्येषां मतिरुरुक्रमस्याङ्घ्रिं न स्पृशति न आप्नोति । असम्भावनाविपरीतभावनादिभिर्विहन्यते इत्यर्थः । अनर्थस्य संसारपरम्परादुःखस्यापगमो यदर्थः यस्या भगवदङ्घ्रिस्पर्शिन्या मतेरर्थः प्रयोजनं तथा च वेदान्तशीलिनामपि तेषां महदनुग्रहाभावान्न तत्त्वनिश्चयो नापि मोक्ष इत्यर्थः ॥ ३२ ॥ इतीति ॥ रुषा अन्धीकृतात्मा हिरण्यकशिपुः इत्युक्त्वा उपरतं पुत्रं स्वोत्सङ्गान्महीतले निरस्यत चिक्षेप । आडभाव आर्षः ॥ ३३ ॥ आहेति ॥ अमर्षः असहनं तेन सहितया रुषा आविष्टो व्याप्तः अत एव कषायीभूते आताम्रे लोचने यस्य सः दैत्यः आह स्म । हे नैर्ऋताः हे राक्षसाः एनमितः आशु निःसारयत ततश्च वध्यतां यतोऽयं वध्यः वधार्हः ॥ ३४ ॥ अयमिति ॥ अधमः नीचः अयमेव मे भ्रातृहा हिरण्याक्षः हतवान् यः स्वानस्मान् पित्रादीन् सुहृदो हितकारिणः पालकान् हित्वा त्यक्त्वा पितृव्यस्य हिरण्याक्षस्य हन्तुर्विष्णोः अस्मच्छत्रोः पादौ दासवदर्चति तत्पक्षपाती सोऽयः

नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः ॥ महीयसां पादरजोभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥ ३२ ॥ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ॥ अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले ॥ ३३ ॥ आहामर्षरुषाविष्टः कषायीभूतलोचनः ॥ वध्यतामाश्वयं वध्यो निःसारयत नैर्ऋताः ॥३४ ॥ अयं मे भ्रातृहा सोऽयं हित्वा स्वान् सुहृदोऽधमः ॥ पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५ ॥ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ॥ सौहृदं दुस्त्यजं पित्रोरहाद् यः पञ्चहायनः॥ ३६ ॥ परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत् सुतोऽहितः ॥ छिन्द्यात् तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ३७ ॥ सर्वैरुपायैर्हन्तव्यः संभोजशयनासनैः ॥ सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८ ॥

मेव तद्धन्ता ॥ ३५ ॥ विष्णोरिति ॥ योऽसौ पञ्चहायनः पञ्चवार्षिको बालोऽपि अन्यैर्दुस्त्यजमपि पित्रोः सौहृदं स्नेहमहात् त्यक्तवान् अहादित्यार्षः । सोऽसौ असमञ्जस-कृतघ्नत्वादसाधुः विष्णोरपि किं नु साधु उपकारं करिष्यति न किञ्चिदित्यर्थः ॥ ३६ ॥ पर इति ॥ परोऽपि हितकृच्चेत् तदा सः अपत्यमेव अपत्यवत्संरक्षणीयमित्यर्थः । यथा हितकृदौषधं वने जातमपि तत आनीय संरक्ष्यते तथेत्यर्थः । स्वदेहजोऽपि सुतः अहितः शत्रुश्चेत्तदा स हन्तव्य एव आमयो रोगः स यथा देहजोऽपि विविधोपायैर्नि-राक्रियते तथेत्यर्थः । यतः यस्य रुग्णस्तस्य पीडाकरस्याङ्गस्य करचरणादेर्विवर्जनात् त्यागाच्छेषमङ्गं सुखं जीवति चेत्तदा यदात्मनः अहितं दुःखदमहन्तास्पदमङ्गं तदपि छिन्द्यात् का कथा ममतास्पदस्यापत्यस्य ॥ ३७ ॥ सर्वैरिति ॥ यस्मादयं सुहृल्लिङ्गधरः पुत्रवेषधारी शत्रुरेव तस्मात् सर्वैरुपायैः सम्भोजो भोजने विषदानं शयनं निद्रायां शिरश्छेदः आसनम् उपवेशने शिरश्छेदः इत्यादिभिः हन्तव्य एव । दुष्टं निषिद्धविषयकमिन्द्रियं यथा मुनेः शत्रुः तच्च तैः सर्वैरुपायैर्हन्यते तथायमपि शत्रुः सर्वैरुपायैर्हन्तव्य

इत्यर्थः ॥ ३८ ॥ नैर्ऋता इति युग्मम् ॥ एवं स्वभर्त्रा हिरण्यकशिपुना समादिष्टाः आज्ञप्ता तिग्माः तीक्ष्णा दंष्ट्रा येषां करालान्यास्यानि येषां ते च ते च ताम्राणि श्मश्रूणि शिरोरुहाश्च येषां ते भैरवान् भयङ्करान् नादान् नदन्तः कुर्वन्तः एनं छिन्धि भिन्धीति वादिनः वदन्तः शूलपाणयस्ते नैर्ऋताः तैः शूलैः आसीनं चकारात् प्रसुप्तं भुञ्जानं गच्छन्तं चानवहितं प्रह्लादं सर्वेषु मर्मस्थानेषु अहनन् अघ्नन् । शबलुगार्षः । वृषणकुक्षिहृदयकण्ठशिरआदीनि स्वल्पप्रहारेऽपि प्राणहारीणि मर्मस्थानानि ज्ञेयानि ॥ ३९ ॥ ॥ ४० ॥ परे इति ॥ ब्रह्मणि निर्विकारे अनिर्देश्ये अविषये भगवति अखिलात्मनि शब्दादीनां नियन्तारि परे परमेश्वरे युक्तः एकतां प्राप्तः आत्मा स्वरूपं यस्य तस्मिन् प्रह्लादे तेषां प्रहाराः निष्फला आसन् अपुण्यस्य पुण्यहीनस्य पुनः पुनरारब्धा अपि सत्क्रिया लौकिका महोद्यमा यथा निष्फला भवन्ति तथेत्यर्थः ॥ ४१ ॥ प्रयास इति ॥ हे युधिष्ठिर एवं प्रयासे शूलप्रहारादिमरणोपायरूपे अपहते निष्फलतां गते सति दैत्येन्द्रः हिरण्यकशिपुः परिशङ्कितः प्रह्लादविरोधेन स्वमरणाशङ्कानिर्बन्धेन अत्याग्रहेण

नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥ नदन्तो भैरवान् नादाञ्छिन्धि भिन्धीति वादिनः ॥ आसीनं चाहनञ्छूलैः प्रह्लादं सर्वमर्मसु ॥ ४० ॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ॥ युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः ॥ ४१ ॥ प्रयासेऽपहते तस्मिन् दैत्येन्द्रः परिशङ्कितः ॥ चकार तद्वधोपायान् निर्बन्धेन युधिष्ठिर ॥ ४२ ॥ दिग्गजैर्दन्दशूकैश्च अभिचारावपातनैः ॥ मायाभिः संनिरोधैश्च गरदानैरभोजनैः ॥ हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ॥ ४३ ॥ न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ॥ ४४ ॥ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा॥४५॥ वर्तमानोऽविदूरे वै बालोप्यजडधीरयम् ॥ न विस्मरति मेऽनार्यं शुनःशेफ इव प्रभुः ॥ ४६ ॥

तस्य प्रह्लादस्य वधोपायान् चकार ॥ ४२ ॥ दिग्गजैरिति सार्द्धद्वयम् ॥ दिग्गजैः तस्योपरि दिग्गजाक्रमणैः दन्दशूकेन्द्रैः सर्पश्रेष्ठदंशनैः अभिचारैः कृत्योत्पादनैः अवपातनैः गिरिशृङ्गादिभ्योऽधःपातनैः मायाभिः अकस्मादुत्पादितैः सिंहव्याघ्रादिभिः अवटादिषु सन्निरोधैः गरदानैर्विषप्रयोगैः अभोजनैरुपवासैः हिमादिषु पातनैः पर्वताक्रमणैः तदुपरि पर्वतनिक्षेपैः सर्वत्र बहुवचनैरतेषामावृत्तिं सूचयति एतैरुपायैर्यदा अपापं निर्दोषं स्वसुतं हन्तुं न शशाक तत् तस्य हननं कर्तुमुपायान्तरं च नाभ्यपद्यत न लेभे तदासोऽसुरः दीर्घतमां चिन्तां प्राप्तः ॥ ४३ ॥ ४४ ॥ चिन्तामाह—एष बालो मे मया बह्वसाधु यथा भवति तथा उक्तः । तथास्य तैस्तैर्द्रोहैः शूलघातादिभिः असद्धर्मैरपकारैरभिचारादिभिश्च वधोपायाश्च निर्मिताः तत्रापि स्वेन तेजसा प्रभावेणैव ततो मुक्तः ॥ ४५ ॥ वर्तमान इति ॥ अविदूरे समीपे वर्तमानोऽपि बालोऽपि अयं अजडधीः मत्तोऽपि भयेन न जडा न व्याकुला धीर्यस्य तादृशः प्रभुः समर्थः अतो मेऽनार्यं दौर्जन्यं शत्रुत्वमयं न विस्मरति न विस्मरिष्यति । यद्वा । अविदूरे वर्तमानोऽपि मे

अनार्यं शत्रुं विष्णुं न विस्मरति यथा अजीगर्तस्य मध्यमः पुत्रः शुनःशेफो मातापितृभ्यां हरिश्चन्द्राय विक्रीतः स यथा तयोरपकारमविस्मरंस्तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नस्तद्वत् । यद्वा स्वभावापरित्यागे दृष्टान्तः शुनःशेफः पुच्छमिवेति ॥ ४६ ॥ अप्रमेयेति ॥ अप्रमेयः अपरिमेयः अनुभावो यस्य सः अतो न कुतश्चिदपि भयं यस्य सः अत एवामरः मरणरहितः यत एतादृशोयमतो नूनं निश्चितमेतद्विरोधेनैव हेतुना मे मृत्युर्भविता भविष्यति न वा भविता अन्यथा मम मृत्युर्नैव भविष्यति ॥ ४७ ॥ इतीति ॥ इत्येवंभूतया चिन्तया किञ्चिन्म्लानश्रियं निस्तेजस्कमत एव अधःकृतमुखं तं हिरण्यकशिपुमौशनसौ उशनसः पुत्रौ नीतिज्ञौ शण्डामर्कौ विविक्ते निर्जने देशे ह उपपत्तिपूर्वकमिति वक्ष्यमाणमूचतुः ॥ ४८ ॥ जितमिति ॥ हे नाथ तव भ्रुवोर्विजृम्भणेन चलनमात्रेण त्रस्ता भीताः समस्ता धिष्ण्यपाः लोकपाला यस्मिन् तज्जगत्त्रयं त्वयैकेन सहायरहितेनैव जितं तस्यैवंभूतस्य तव चिन्त्यं भयहेतुत्वेन चिन्ताविषयं वयं न चक्ष्महे न पश्यामः यतः शिशूनां चरितं गुणदोषयोः पदं विषयो नैव

अप्रमेयाऽनुभावोऽयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ॥ ४७ ॥ इति तं चिन्तया किञ्चिद् म्लानश्रियमधोमुखम् ॥ शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥ जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ॥ न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम्॥४९॥इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ॥ बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति॥५०॥तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत्॥धर्मो ह्यस्योपदेष्टव्यो राज्ञां यो गृहमेधिनाम् ॥५१॥ धर्ममर्थं च कामं च नितरां चानुपूर्वशः॥प्रह्लादायोचतू राजन् प्रश्रयावनताय च ॥ ५२ ॥ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम्॥न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥५३॥

भवतीत्यर्थः । यद्वा । शिशूनां पदं व्यवसायं गुणदोषयोर्मध्ये न चक्ष्महे । "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।" इत्यमरः ॥ ४९ ॥ इममिति ॥ यावद् भार्गवो गुरुः शुक्राचार्यः आगमिष्यति आगच्छेत् तावद्यथा भीतः सन्न पलायेत तथा इमं वरुणस्य पाशैर्बद्ध्वा निधेहि स्थापय पुंसो बुद्धिश्च वयसा वयआधिक्येन आर्याणां महतां सेवया सङ्गतस्तदुपदेशेन च भवति तथा च वयआधिक्येन आचार्योपदेशेन च बुद्धिः परावर्तिष्यत इति भावः ॥ ५० ॥ तथेति ॥ एवमेवेति गुरुपुत्रेणोक्तं तथेत्यनुज्ञायाङ्गीकृत्य सभायामिदं वक्ष्यमाणमब्रवीद् । गृहमेधिनां गृहस्थानां राज्ञां ये धर्मास्ते हित एव अस्य प्रह्लादस्योपदेष्टव्याः ॥ ५१ ॥ धर्ममिति ॥ हे राजन् प्रश्रितो विनययुक्तश्चासाववनतश्च तस्मै प्रह्लादाय नितरां निरन्तरमनुपूर्वशोऽनुक्रमेण धर्मादीनेवोचतुः ॥ ५२ ॥ यथेति ॥ आत्मने स्वस्मै यथा यथावद् गुरुभिः उपशिक्षितं त्रिवर्गं साधु न मेने तथा द्वन्द्वै रागद्वेषादिभिः विषयेष्वारमणं येषां तैरुपवर्णितां तच्छिक्षां च साधु न मेने ॥ ५३ ॥

यदेति ॥ यदा आचार्यः परावृत्तः अध्यापनस्थानाद् गृहं गतः तत्र गृहमेधीयकर्मसु प्रसक्तश्चेति शेषः । तदा कृतक्षणैः क्रीडार्थं लब्धावसरैर्वयस्यैः समानवयस्कैः बालकैः तत्र प्रह्लादः उपहूतः "सोऽचि लोपे" इति सुलोपः सन्धिश्च ॥ ५४ ॥ अथेति ॥ अथानन्तरं स श्लक्ष्णया मधुरया वाचा तान् बालकान् प्रत्याहूय तेषां निष्ठां जन्मम-रणादिलक्षणां विद्वान् जानन् यद्वा । तेषां स्वास्मिन् गुरुत्वनिष्ठां जानन् महाबुधः प्रह्लादः प्रसन्नचित्तत्वात् प्रहसन्निव कृपया उवाच ॥ ५५ ॥ ते इति युग्मम् ॥ हे राजेन्द्र द्वन्द्वारामाणां द्विजानामीरितैरुपदेशैरीहितैश्चेष्टितैश्च न दूषिता धीर्येषां ते बालास्तु तद्गौरवात् तद्वचनगौरवात् त्यक्ताः क्रीडापरिच्छदाः क्रीडोपकरणानि यैस्तथाभूताः तस्मिन् प्रह्लादे न्यस्तं हृदयमीक्षणं च यैस्ते तस्य सर्वत उपविष्टाः तं प्रह्लादं पर्युपासत ततः करुणः दयालुः मैत्रः हितकारी महाभागवतः असुरः प्रह्लादस्तानाह स्म उपदिदेश ॥ ५६ ॥ ५७ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ पञ्चमे गङ्गासहायः सप्तमस्य व्यधादिमाम् ॥ ५ ॥ षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ॥ उपादिशत्परं

यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥ अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ॥ उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥ ते तु तद्गौरवात् सर्वे त्यक्तक्रीडापरिच्छदाः ॥ बाला न दूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५६ ॥ पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ॥ तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे प्रह्लादेन नवधा भक्तिवर्णनं नाम पञ्चमोऽध्यायः ॥५॥ प्रह्लाद उवाच ॥ कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥ यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ॥ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥ सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ॥ सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ३ ॥ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ॥ न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ४ ॥

धर्मं तत्र पद्यानि सार्धंयः ॥ उवाच द्वितयं साङ्घ्रिपश्चात्रिंशदनुष्टुभः ॥ ६ ॥ कौमार इति ॥ प्राज्ञः प्राणी इहैव मानुषजन्मनि तत्रापि कौमारे एव भागवतानेव धर्मानेवाचरेत् न सुखार्थप्रयासान् यतः इह मानुषं जन्म दुर्लभं तदपि जन्म अध्रुवमनित्यम् अर्थदं पुरुषार्थदं च अतः अस्थिरेणानेन स्थिरं पुरुषार्थं साधयेदिति भावः ॥ १ ॥ यथेति ॥ इह मनुष्यजन्मनि पुरुषस्य प्राणिनः विष्णोः पादोपसर्पणं शरणगमनमेव यथा यथावत् योग्यमित्यर्थः । यद्वा । यथा येन प्रकारेण विष्णोः पादयोरुपसर्पणं प्राप्तिर्भवेत् तथा आचरेदित्यनुषङ्गः । यद्यस्मादेष विष्णुः सर्वभूतानां प्रियः आत्मा ईश्वरः सुहृच्च ॥२॥ सुखमिति ॥ हे दैत्याः देहिनां प्राणिनां देहयोगेन ऐन्द्रियकमिन्द्रियविषयसंबन्धजन्यं सुखं सर्वत्र पश्वादिजन्मस्वपि अयत्नतः आधुनिकप्रयत्नं विनापि दैवात्प्राचीनकर्मवशादेव लभ्यते यथा प्रयत्नं विनैव दुःखं लभ्यते तथेत्यर्थः ॥ ३ ॥ तदिति ॥ तत् तदर्थः प्रयासो न कर्त्तव्यो यतः प्रयासात् परं केवलमायुषो व्ययः क्षय एव भवति न किंचित्फलमित्यर्थः । यथा मुकुन्दचरणाम्बुजं भजन् आत्यन्तिकं क्षेमं प्राप्नोति तथा

वैषयिकसुखार्थं यतमानः तादृशं क्षेमं न विन्दते । यद्वा । तथा तेन प्रकारेण क्षेमं क्षेमरूपं मुकुन्दचरणाम्बुजं न विन्दते ॥ ४ ॥ तत इति ॥ ततस्तस्मात् कारणात् कुशलो विवेकी पुरुषः भयमाश्रितः संसारदुःखाद्भीतः सन् पुष्कलं सर्वाङ्गपूर्णं पौरुषं पुरुषरूपं मानुषं शरीरं यावन्न विपद्येत अङ्गविकलतया असमर्थं न भवेत्तावत् शीघ्रमेव कौमारमारभ्यैव क्षेमाय मोक्षाय यतेत ॥५॥ आयुर्व्ययक्रममाह—पुंस इति ॥ पुंसो मनुष्यस्य तावत् वर्षशतमायुः शतवर्षपरिमितो जीवनयोग्यः कालः तत्र च अजितात्मनः पुंसः तस्यार्द्धं पञ्चाशद्वर्षात्मकं निष्फलमेव याति यस्मादसौ पुरुषः अन्धं गाढं तमो निद्रारूपं प्रापितः सन् तूष्णीं रात्र्यां शेते ॥ ६ ॥ मुग्धस्येति ॥ एवं बाल्ये मुग्धस्य मूढस्य दश वर्षाणि कौमारे क्रीडतश्च दश वर्षाणीत्येवं वर्षाणां विंशतिर्निष्फलं याति तथा जरया ग्रस्तो देहो यस्य तस्य अत एवाकल्पस्य लौकिककार्येऽप्यसमर्थस्य वर्षाणां विंशतिर्वृथैव याति ॥ ७ ॥ दुरिति ॥ शेषमायुः दुरापूरेण दुःखैः आसमन्तात्पूर्यमाणेन कामेन विषयभोगाभिलाषात्मकेन बलीयसा मोहेनाहंता-

**ततो यतेत कुशलः क्षेमाय भयमाश्रितः ॥ शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ ५ ॥ पुंसो वर्षशतं ह्यायुस्तदर्धं वाजितात्मनः ॥ निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ६ ॥ मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ॥ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः॥७॥ दुरापूरेण कामेन मोहेन च बलीयसा ॥ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥८॥ को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ ९ ॥ कोन्वर्थतृष्णां विसृजेत् प्राणेभ्योपि य ईप्सितः ॥ क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १० ॥ कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ॥ सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः ॥ औपस्थ्यजैह्वयं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १३ ॥**

ममतारूपेण च गृहेषु सक्तस्य अत एव प्रमत्तस्य कर्तव्यानुसन्धानशून्यस्य अपयाति वृथा यातीत्यर्थः ॥८॥ ननु वार्द्धके विरक्त्या क्षेमं यास्यतीत्याशङ्क्याह—क इति ॥ गृहेषु उपलक्षणतया गृहपुत्रदारादिषु सक्तमत एव दृढैर्भगवत्कृपां विना दुर्मोचनीयैः स्नेहपाशैर्बद्धमात्मानं को नाम अजितेन्द्रियः पुमान् विमोचयितुमुत्सहेत शक्नुयात् ॥ ९ ॥ को न्विति ॥ अर्थस्य धनादेः तृष्णां को नु अजितेन्द्रियो विसृजेत् न कोऽपीत्यर्थः । योऽर्थः प्राणेभ्योऽपि ईप्सितः इष्टतमः प्रियतम इत्यर्थः । यमर्थं तस्करः चोरः धनिनां गृहप्रवेशेन सेवको युद्धादिना वणिक् सांयात्रिकादिः समुद्रादियानेन प्रेष्ठैरप्यसुभिः क्रीणाति प्राणहानिमङ्गीकृत्याप्यर्थं साधयितुं प्रवर्तत इत्यर्थः ॥१०॥ कथमिति त्रिकम् ॥ सुहृत्सु दारापत्यादिषु यः स्नेहः स्नेहलक्षणः पाशः तेन सितो बद्धः तेष्वनुरक्तचित्तश्च जनः अनुकम्पितायाः प्रियाया रहस्यं रहसि भवं सङ्गं कथं त्यजेत इति

सर्वत्र द्वितीयान्तपदस्यानेनैव क्रियापदेन संबन्धः । तङ्गार्षः । रुचिरान् मनोज्ञान् मन्त्रान् हितालापांश्च कलानि मधुराण्यक्षराणि येषां तेषां शिशूनां सङ्गं च कथं त्यजेत् पुत्रान् स्मरन् ताश्च श्वशुरगेहे स्थिताः हृदय्याः हृदयंगमाः दुहितॄः पुत्रीः भ्रातॄंश्च स्वसॄः भगिनीश्च दीनौ वृद्धत्वेन सामर्थ्यरहितौ पितरौ मातापितरौ च मनोज्ञाः मनोहराः उरवः बहवः परिच्छदाः भोगोपकरणानि येषु तान् गृहांश्च कुल्याः कुलपरम्परागताः वृत्तीः जीविकाश्च पशून् गाः कुञ्जरादींश्च तथा भृत्यवर्गान् दासीदासादीन् त्यजेत तत्तत्फललो-भात्कर्माणि ईहमानः कुर्वन् कोशस्कृत् कोशकारी कीटः सुडार्षः। स यथा कोशात्मकं स्वगृहं कुर्वन् निर्गमाय द्वारमपि नावशेषयति ततो निरुध्यते तथा निरुद्धः अवितृप्त-कामश्च औपस्थ्यं शैश्न्यं च जैह्व्यं च सुखं बहु अधिकं मन्यमानः दुरन्तो मोहो यस्य सः ततः कथं विरज्येत कथं विरक्तः स्यात् ॥११॥१२॥१३॥ कुटुम्बेति ॥ प्रमत्तः कुटुम्बासक्तः कुटुम्बपोषाय कुटुम्बपोषणनिमित्तेन कर्मणा वियत् क्षीयमाणं निजमायुः न बुध्यते तथा विहतमर्थं पुरुषार्थं भगवदाराधनादिपरमानन्दावाप्तिलक्षणं च न बुध्य-ते धनस्य तु वराटकमात्रस्य विघातं बुध्यते तथा स्वकुटुम्बे रामो रतिर्यस्य सः सर्वत्र सर्वस्मिन् देशे काले चाध्यात्मिकादितापत्रयेण दुःखित आत्मा मनो यस्य सः

कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः ॥ सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥ १४ ॥ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ॥ प्रेत्येह चाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥ १५ ॥ विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै ॥ यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥ १६ ॥ यतो न कश्चित् क्व च कुत्रचिद् वा दीनः स्वमात्मानमलं समर्थः ॥ विमोचितुं कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः ॥ १७ ॥ ततो विदूरात् परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु ॥ उपेत नारायणमादिदेवं विमुक्तसङ्गैरिषितोऽपवर्गः ॥ १८ ॥

तादृशोऽपि न निर्विद्यते तत्र दुःखबुद्धिं न करोतीत्यर्थः ॥ १४ ॥ वित्तेष्विति ॥ अजितेन्द्रियः अशान्तकामः कुटुम्बी वित्तेषु धनादिषु नित्यमभिनिविष्टं चेतो यस्य सः पर-वित्तहर्तुः प्रेत्य मरणान्तरं यमयातनादिरूपमिह च स्वामिदण्डराजदण्डादिरूपं दोषं यद्यपि विद्वान् जानाति अथापि तत्परवित्तं हरते ॥ १५ ॥ विद्वानिति ॥ हे दनुजाः स्वीयमिदं पारक्यमिदमिति विभिन्नो भावो भावना यस्य सः विद्वान् शास्त्रज्ञतयाऽतिप्रसिद्धोऽपि इत्थमत्यासक्तया वर्णितप्रकारेण कुटुम्बं पुष्णन् स्वलोकाय आत्मपराम-र्शाय यद्वा । स्वलोकाय कोऽहं किं करोमीति स्वमवलोकितुं न वै कल्पते समर्थो नैव भवति किन्तु विद्वानपि विमूढो यथा तथा तमः अभिनिवेशमेव प्रपद्येत प्राप्नुयात् ॥ १६ ॥ यत इति युग्मम् ॥ हे दैत्याः अत एव कामो दृशि यासां तासां स्त्रीणां विहारे क्रीडानिमित्ते क्रीडामृगः वानरतुल्यः विहारमिति पृथक् पाठे तासां विहारसा-धनभूतमात्मानमित्यर्थः । यतस्तासां क्रीडामृगः स इत्यन्वयः । किं च यत् यासु निगडः शृङ्खलातुल्यो विसर्गः पुत्रादिरूपो भवति । यतः यस्मात् कश्चिदपि क्व च क्वचिदपि

काले कुत्रचिदपि देशे वा स्वमात्मानं विमोचितुं मोचयितुं न समर्थः णिलोप आर्षः। अतः विदूराद् दूरतः विषयात्मकेषु विषयरक्तेषु दैत्येषु सङ्गं परिहृत्य त्यक्त्वा आदिदेवं नारायणमेव उपेत शरणं व्रजत अतः विमुक्तसङ्गैः संन्यासिभिरपि इषितः इष्टः अपवर्गः परमानन्दरूपो मोक्षोऽपि स एव॥ १७ ॥ १८ ॥ न हीति ॥ हे असुरात्मजाः सर्वभूतानां स्थावरजङ्गमात्मकानामात्मत्वादिति न तस्य किञ्चिदपेक्षितमिति सूचितम् अत एव सर्वतः सर्वस्मिन् देशे काले च सिद्धत्वात् अच्युतं प्रीणयतः प्रसन्नं कुर्वतः पुंसः कर्मान्तरवद्बह्वायासो नास्त्येव ॥ १९ ॥ परेति चतुष्कम् ॥ ब्रह्मा चतुर्मुखः अन्तो येषां स्थावरो वृक्षादिरादिर्येषां तेषु परावरेषु उच्चावचेषु जीवेषु भौतिकेषु विकारेषु पृथ्व्यादिपञ्चमहाभूतकार्येषु जडेषु घटपटादिषु अथ तथा महत्सु च भूतेष्वाकाशादिषु गुणेषु सत्वरजस्तमस्सु गुणसाम्ये च प्रधाने तथा गुणव्यतिकरे गुणवैषम्यवति महदहङ्कारादौ च परः ब्रह्मस्वरूपः आत्मा भगवान् ईश्वरः अव्ययः एक एवास्ति ईयत इत्युत्तरस्य संबन्धो वा । वस्तुतोऽतिसूक्ष्मत्वादनिर्देश्यो निर्देष्टुमशक्योऽपि अविकल्पितो भेदरहितोऽपि गुणात्मकः सर्गो यस्याः तया मायया स्थावरजङ्गमानां प्रत्यगात्मा तत्तद्द्रष्टा भोक्ता च जीवस्तत्स्वरूपेण दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यव्यापकनिर्देश्यः

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ॥ आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ १९ ॥ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ॥
भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २० ॥ गुणेषु गुणसाम्यं च गुणव्यतिकरे तथा ॥ एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः॥२१॥
प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ॥ व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥ केवलानुभवानन्दस्वरूपः परमेश्वरः ॥
माययाऽन्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥ तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् ॥ आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥२४॥
तुष्टे च तत्र किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः ॥ धर्मादयः किमगुणेन च काङ्क्षितेन सारंजुषां चरणयोरुपगायतां नः ॥ २५ ॥

ईयते प्रतीयते । तत्र प्रत्यगात्मस्वरूपेण व्यापकतया निर्देश्यः दृश्यरूपेण व्याप्यतया निर्देश्यः ईयते तथा केवलः अनुभवात्मको ज्ञानस्वरूप आनन्द एव स्वरूपं यस्य तादृशोऽपि गुणसर्गया मायया अन्तर्हितमाच्छादितं स्वैश्वर्यं स्वरूपं येन सः तादृशः ईयते ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तस्मादिति ॥ तस्मात् सर्वेषु भूतेषु असुरं भावं द्वेषादिकमुन्मुच्य संत्यज्य सौहृदं मैत्रीं दयां तद्दुःखप्रहाणेच्छां च कुरुत यया दयया अधोक्षजः तुष्यति ॥ २४ ॥ तुष्ट इति ॥ तत्र तस्मिन्ननन्ते अनन्तगुणे आद्ये सर्वकारणभूते भगवति तुष्टे च सति तद्भक्तानां किमलभ्यं किं दुर्लभं न किञ्चिदित्यर्थः । तथापि गुणव्यतिकरात् कर्मानुगुणसत्त्वादिगुणपरिणामाद्दैवशब्दवाच्यादेव इह लोके स्वतः सिद्धाः ये धर्मादयः धर्मार्थकामरूपाः पुरुषार्थास्तैर्नः किं फलं तथा अगुणेन निर्गुणेऽक्षरे लयात्मकेन मोक्षेणापि काङ्क्षितेन भगवतश्चरणयोः सारंजुषां सारग्राहिणां परमानन्दमनुभवतां तमुपगायतां नोऽस्माकं किं न किञ्चित्प्रयोजनमित्यर्थः ॥ २५ ॥

धर्मेति ॥ धर्मोऽर्थः कामश्चेति यस्त्रिवर्गो वेदेनाभिहितः तदर्थम् ईक्षा आत्मविद्या त्रयी कर्मविद्या नयो नीतिः दमो दण्डः विविधा कृष्यादिरूपा वार्ता जीविका चेति ईक्षाद्या अभिहिताः तदेतत्सर्वं निगमस्य वेदस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणो भगवतः परमस्य पुंसः स्वात्मार्पणं तत्समर्पितानुष्ठानेन चित्तविशुद्धिविवेकादिद्वारात्मनिवेदनसाधनं चेत्तर्हि सत्यपरत्वात् सत्यं यथार्थमेव मन्ये फलाकाङ्क्षया तु नश्वरमेव । यद्वा । तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये सत्यं तु निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेव ॥ २६ ॥ तेषां विश्वासार्थं गुरुसंप्रदायमाह—ज्ञानमिति ॥ तदेतत् अमलं दुरवापं महत्कृपामन्तरेण दुर्लभं ज्ञानं नरस्य सखा भगवान्नारायणो बदरिकाश्रमवासी नारदायाह स्म उपदिष्टवान् तत् भगवत एकान्तिनाम् एकान्तभक्तानाम् अकिञ्चनानां भगवदतिरिक्तेच्छारहितानां यत्पादारविन्दरजस्तेनाप्लुतानां स्नातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यान्न तूत्तमानामेवेति नियमः । अतो युष्माकमपि तत्राधिकार इति भावः ॥ २७ ॥ श्रुतमिति ॥ अत एव मया एतच्छास्त्रीयं ज्ञानं विज्ञानं विज्ञानसंयुतमनुभवपर्य-

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता ॥ मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥ ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय ॥ एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाप्लुतदेहिनां स्यात् ॥ २७ ॥ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ॥ धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात् ॥ २८ ॥ दैत्यपुत्रा ऊचुः ॥ प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ॥ एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥ बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ॥ छिन्धि नः संशयं सौम्य स्याच्चेद् विश्रम्भकारणम् ॥ ३० ॥ इति श्रीभागवते महा० स० प्रह्लादेन बालानां ब्रह्मज्ञानवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ नारद उवाच ॥ एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ॥ उवाच स्मयमानांस्तान् स्मरन् मदनुभाषितम् ॥ १ ॥

न्तं तथा शुद्धं हिंसादिदोषरहितं भागवतं भगवत्प्रीतिकरं श्रवणकीर्त्तनादिधर्मं च पूर्वं देवदर्शनात् भगवद्दर्शनवतः नारदात् श्रुतम् ॥ २८ ॥ प्रह्लादेति ॥ हे इति पृथक् पदम् । हे प्रह्लाद त्वं वयं चापि एताभ्यां गुरुपुत्राभ्यामृते विनाऽन्यं गुरुं न विद्मः "विदो लटो वा" इति मयो मादेशः बालानामपि सतामस्माकमेतावेवेश्वरौ नियन्तारौ अतस्तवान्यत्र गमनं न संभवतीति भावः ॥ २९ ॥ स एवात्रागत इत्यपि न संभवतीत्याहुः—बालस्येति । हे सौम्य बालस्यात एवान्तःपुरस्थस्य तव महतः श्रीनारदस्य सङ्गो दुरन्वयः दुर्घट एव अतस्तत्र नोऽस्माकं संशयो भवति तत्र विश्रम्भस्य विश्वासस्य कारणं हेतुः स्यादस्ति चेत्तर्हि तदुक्त्यास्माकं संशयं छिन्धि ॥ ३० ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायः षष्ठेऽस्मिन् सप्तमस्य व्यधादिमाम् ॥ ६ ॥ सप्तमे नारदादेशं स्वस्य गर्भगतस्य च ॥ प्रह्लादोऽकथयद्बालान् तत्र श्लोकाः शरेषवः ॥ चत्वार्युवाचेत्यनुष्टुम्मितिः पादोनगोशरैः ॥ ७ ॥ एवमिति ॥ एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः प्रह्लादो मदनुभाषितं मयोपदिष्टं तत्त्वं स्मरन् स्मयमानः स्वप्रौढिं प्रकटयन्

तान् बालकान् प्रत्युवाच ॥ १ ॥ पितरीति ॥ अस्माकं पितरि हिरण्यकशिपौ तपसे तपः कर्त्तुं मन्दराचलं प्रति प्रस्थिते गते सति इन्द्रादयो विबुधा देवाः दानवान् प्रति परमुत्कटं युद्धोद्यमं चक्रुः ॥ २ ॥ पिपीलकैरिति ॥ अहिः सर्प इव लोकोपतापनः सर्वप्राणिदुःखदः पापः पापीयान् पापेन स्वकृतपापेनैव हेतुना पिपीलिकैरभक्षि भक्षित इति दिष्ट्या भद्रं जातमिति वादिनः सन्तो वासवादयो युद्धोद्यमं चक्रुरित्यनुषङ्गः ॥ ३ ॥ तेषामिति ॥ तेषां वासवादीनाम् अतिबलप्रयुक्तं युद्धोद्योगं निशम्य दृष्ट्वा सुरैर्वध्यमानाः अत एव भीताः सन्तोऽसुरयूथपाः सर्वतो दिशं यथावकाशं दुद्रुवुः पलायितवन्तः ॥ ४ ॥ कलत्रेति ॥ प्राणपरीप्सवः प्राणमात्रपरित्राणेच्छव इत्यर्थः । कलत्रादीन् नावेक्षमाणाः तदनुसन्धानरहिताः त्वरिताः त्वरया युक्ताः सर्वे दुद्रुवुः परिच्छदाः भोगोपकरणानि ॥ ५ ॥ व्यलुम्पन्निति ॥ जयकाङ्क्षिणः अमरा देवाः राज्ञो हिरण्यकशिपोः शिबिरं गृहं व्यलुम्पन् सर्वस्वापहारेण विनाशितवन्तः । इन्द्रस्तु राज्ञो महिषीं भार्यां मम मातरमग्रहीत् ॥ ६ ॥ नीयमानामिति ॥ तां चेन्द्रेण नीयमानाम् अत एव भयेन

प्रह्लाद उवाच ॥ पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ॥ युद्धोद्यमं परं चक्रुर्विबुधा दानवान् प्रति ॥२॥ पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ॥ पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥ तेषामतिबलोद्योगं निशम्यासुरयूथपाः ॥ वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥ कलत्रपुत्रमित्राप्तान् गृहान् पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥ व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः ॥ इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥ नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ॥ यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥ प्राह नैनां सुरपते नेतुमर्हस्यनागसम् ॥ मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम् ॥ ८ ॥ इन्द्र उवाच ॥ आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ॥ आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥ नारद उवाच ॥ अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ॥ त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥ १० ॥

उद्विग्नां कम्पितां कुररीं तन्नाम्नीं पक्षिणीमिव रुदन्तीं क्रन्दतीं नु माम्[?] । तत्र पथि मार्गे यदृच्छया आगतो देवर्षिर्नारदो ददृशे ददर्श । तदर्थः ॥ ७ ॥ प्राहेति ॥ दृष्ट्वा प्राह स्म च हे सुरपते हे महाभाग एनां परपरिग्रहं परभार्यां सतीं पतिव्रताम् अत एव अनागसं निरपराधां त्वं नेतुं मा अर्हसि अतो मुञ्च मुञ्चेति ह । आवश्यके वीप्सा ॥ ८ ॥ आस्त इति ॥ अस्या जठरे कुक्षावविषह्यमस्माभिः सोढुमशक्यं सुरद्विषो हिरण्यकशिपोर्वीर्यं गर्भरूपेण वर्द्धमानमास्ते अतः अनया यावत्प्रसवं प्रसवपर्यन्तमास्य[?] तां मत्कारागारे स्थीयतां ततश्चार्थस्य पदवीं मार्गं गतः प्राप्तः सन्निमां मोक्ष्ये जातं पुत्रं हत्वा त्यक्ष्यामीत्यर्थः ॥ ९ ॥ अयमिति ॥ अयं गर्भगः शिशुः निष्किल्बिषः निर्दोषः महाभागवतः भगवता स्वीयत्वेनाङ्गीकृतः साक्षात् स्वगुणैरेव महान् महाप्रभावः न तु पित्रादिसबन्धात् अनन्तस्यानुचरः बली चातः त्वया संस्थां मृत्युं न प्राप्स्यते तदर्थः॥ १० ॥

इतीति ॥ इत्येवमुक्तः इन्द्रः देवर्षेर्वचो मानयन् तद्गौरवादङ्गीकुर्वन् तां मम मातरं विहाय अनन्तस्य भगवतः प्रियो योऽहं स वा प्रियो यस्य तस्य मम भक्त्या एनां परिक्रम्य प्रदक्षिणीकृत्य दिवं ययौ ॥ ११ ॥ तत इति ॥ ततश्च ऋषिर्नारदः नो मम मातरं निजाश्रमं प्रति सम्यक् सम्मानपूर्वकमानीय आश्वास्य सान्त्वयित्वा हे वत्से बाले तव भर्तुर्यावदागमस्तावत्पर्यन्तं त्वया इहास्मिन् ममाश्रमे उष्यतां स्थीयतामित्युवाचेत्यर्थः ॥ १२ ॥ तथेति ॥ ततः सा मम मातापि देवर्षेर्वचस्तथेत्यङ्गीकृत्य यावद्दैत्यपतिः हिरण्यकशिपुः घोरात् तपसो न न्यवर्तत तावत् तस्य नारदस्यान्ति समीपे नास्ति कुतोऽपि भयं यस्यास्तादृशी सती अवात्सीत् ॥ १३ ॥ ऋषिमिति ॥ यतः सती पतिव्रता अन्तर्वत्नी गर्भिणी च अतः स्वगर्भस्य क्षेमाय इच्छया भर्तुरागमनानन्तरं प्रसूतये च परमया भक्त्या तत्र ऋषिं नारदं पर्यचरत् शुश्रूषितवती ॥ १४ ॥ ऋषिरिति ॥ कारुणिकः दयालु ईश्वरः गर्भस्थस्याप्युपदेशे समर्थः ऋषिर्नारदः स्वमनसि मामप्युद्दिश्य तस्याः परिचरन्त्याः मम मातुर्निर्मलं हिंसादिरहितं धर्मस्य तत्वं भक्तिलक्षणं तथा निर्मलं

इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन् वचः॥अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ॥११॥ततो नो मातरमृषिः समानीय निजाश्रमम्॥आश्वास्येहोष्यतां वत्से यावत् ते भर्तुरागमः॥१२॥तथेत्यवात्सीद्देवर्षेरन्ति साऽप्यकुतोऽभया॥यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्तत॥१३॥ऋषिं पर्यचरत्तत्र भक्त्या परमया सती॥ अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥ ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः॥ धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम्॥१५॥तत्तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे॥ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात् स्मृतिः॥१६॥भवतामपि भूयान्मे यदि श्रद्दधते वचः॥वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा॥१७॥ जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ॥ फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ॥अविक्रियः स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥१९॥

ज्ञानमात्मानात्मविवेकं चेत्युभयं प्रादात् ॥ १५ ॥ तदिति ॥ तत्तु ज्ञानादिकं कालस्य दीर्घत्वात् स्त्रीत्वाच्च मातुः तिरोदधे विस्मृतम् ऋषिणा अनुगृहीतं मां तु सा स्मृतिः अधुनापि नाजहान्न तत्याज ॥ १६ ॥ भवतामिति ॥ यदि भवन्तो मद्वचः श्रद्दधते विश्वसन्ति तदा तदुभयं भवतामपि भूयात् भवेत् आशीर्वादो वा । यतः विशारदो भगवांस्तद्विषया धीः यद्वा वैशारदी स्वार्थेऽण् । देहाद्यहङ्कारच्छेदननिपुणा धीः श्रद्धातः स्त्रीणां बालानां चापि भवति । यथा गर्भस्थस्यैव मे यथा जाता तथेत्यर्थः ॥ १७ ॥ पुनः प्रकृतमुपदेशमनुसरति—जन्मेति ॥ ईश्वरो गुणपरिणामापादनसमर्था मूर्त्तिराकारो यस्य तेन कालेन निमित्तभूतेन जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंरूपा इमे षड्भावविकारा ये दृष्टाः प्रत्यक्षमुपलब्धास्ते देहस्यैव धर्माः न त्वात्मनः । यथा वृक्षे सत्येव फलानां जन्मादयो दृश्यन्ते न ते वृक्षस्य तद्वदात्मनि सत्येव देहस्य जन्मादयो भवन्ति नात्मन इत्यर्थः ॥१८॥ आत्मेति ॥ आत्मा नित्यः उत्पत्तिविनाशरहितः अव्ययः अपक्षयशून्यः शुद्धः रागादिरहितः एकः क्षेत्रज्ञः क्षेत्रं शरीरं जानाति

आश्रयः सर्वाधारः अविक्रियः निर्विकारः स्वदृक् स्वयंप्रकाशः हेतुः कारणं व्यापकः असङ्गी अनावृतः पूर्णः॥१९॥एतैरिति ॥ एतैरुक्तैर्नित्यत्वादिभिः परैः श्रेष्ठैः विवेकप्रतिपत्तिहेतुभिर्द्वादशभिरात्मनो लक्षणैर्विद्वान् देहादिभ्यः पृथगात्मानं विद्वान् सन् देहादौ देहपुत्रगृहादौ मोहजमज्ञानजमहं ममेत्यसद्भावं मिथ्याभिमानं त्यजेत् ॥२०॥ स्वर्णमिति ॥ क्षेत्रेषु स्फुरत्स्वर्णकणेषु ग्रावसु पाषाणेषु योगैर्धमनादिभिस्तत्तत्प्राप्त्युपायैस्तदभिज्ञः तत्प्राप्त्युपायाभिज्ञो हेमकारो यथा स्वर्णमाप्नुयात् तथा क्षेत्रेषु देहादिसङ्घातेषु आत्मप्राप्त्युपायैस्तत्त्वविवेकादिभिरध्यात्मवित् आत्माधिकृतकार्यकारणसङ्घातज्ञाता ब्रह्मगतिं ब्रह्मात्माभेदसाक्षात्कारं लभेत प्राप्नुयात् ॥ २१ ॥ अष्टाविति ॥ आचार्यैः कपिलादिभिः मूलप्रकृतिः महदहङ्कारौ पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः प्रोक्ताः त्रयः सत्वरजस्तमोरूपास्तस्याः प्रकृतेर्गुणाः एव न तु ततो भिन्नाः प्रोक्ताः तथा एकादशेन्द्रियाणि पञ्चमहाभूतानि चेति षोडश विकाराः प्रोक्ताः पुमान् पुरुषस्तु समन्वयात् एषु साक्षित्वेनान्वयात् एक एव प्रोक्तः। तदुक्तम् "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥" इति एवकारो गुणानामात्मधर्मत्ववारणार्थः॥२२॥देह इति॥ देहस्तु सर्वसङ्घातः प्रकृति-

**एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ॥ अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥ स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ॥ क्षेत्रेषु देहेषु तथात्मयोगैरध्यात्मविद् ब्रह्मगतिं लभेत ॥ २१ ॥ अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ॥ विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥ देहस्तु सर्वसंघातो जगत्तस्थुरिति द्विधा ॥ अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् ॥ २३ ॥ अन्वयव्यतिरेकेण विवेकेनोशतात्मना ॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ॥ ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥**

विकृतिसङ्घातात्मकः स च जगत् जङ्गमः तस्थुः स्थावरश्चेति द्विधा नेति एवं विधो गन्धवान्न भवति रसवान्न भवति रूपवान्न भवतीत्यादिप्रकारेणापोहे स्वयमेव अतत् आत्मव्यतिरिक्तं यत्पृथिव्यादि वस्तु तत् त्यजन् अनात्मवर्गात्पृथगुपलभ्यमानः आत्मा पुरुषः अत्र देह एव मृग्यः विवेचनीयः ॥ २३ ॥ अन्वयेति ॥ मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनान्वयः अत एव मणिभ्यः सूत्रस्येवैकैकव्यतिरेकः तयोर्द्वन्द्वैक्यं तेन यो विवेकः तेन उशता शुद्धेनात्मना मनसा सर्गस्थानसमाम्नायैः सृष्टिस्थितिसंहारैः "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्युक्तसर्गाद्यनुसन्धानेनेत्यर्थः। विमृशद्भिः विचारयद्भिः असत्वरैः अव्यग्रैः पुरुषो मृग्यत इति ॥२४॥ विमर्शप्रकारमाह—बुद्धेरिति ॥ जागरणं स्वप्नः सुषुप्तिरित्येतास्तिस्रो बुद्धेर्वृत्तयो व्यापारास्ता वृत्तयो येनैवानुभूयन्ते स परः देहेन्द्रियान्तःकरणादिभ्योऽन्य एव अध्यक्षः देहादीनां द्रष्टा पुरुषः प्रत्यगात्मेत्यन्वयः। तत्र जागरणं नाम बाह्येन्द्रियव्यापारानुविद्धा वृत्तिः स्वप्नस्तदननुविद्धा वृत्तिः सुषुप्तिर्बुद्धिवृत्त्युपरामः तदुपरमोऽपि तत्संबन्ध्येवेति बुद्धिवृत्तय इत्युक्तम्। एतत्रि-

तथज्ञानाश्रयत्वेन यः प्रतीयते स प्रत्यगात्मेति विवेकः ॥ २५ ॥ एभिरिति ॥ पर्यस्तैः अनात्मधर्मत्वेन निरस्तैः त्रिवर्णैः त्रिगुणात्मकैः क्रियोद्भवैः कर्मजन्यैः एभिर्बुद्धिभेदैः जागरादिरूपैर्बुद्धिपरिणामैरात्मनः स्वरूपं बुध्येत् जानीयात् । तङ्भाव आर्षः। बुद्धेरेव त्रिगुणात्मकत्वात् कर्मकर्तृत्वाच्च तस्या एवैता अवस्थाः । आत्मा तु बुद्ध्यन्वयात् तदवस्थावानिव भाति न तत्वत इति आत्मनः स्वरूपं जानीयात् पुष्पाद्यवयवाश्रयत्वेनान्वितत्वात् । यथा गन्धैः कुसुमादिगन्धैरुपलक्षितं तदाश्रयं वायुं बुध्यते तथेत्यर्थः । तद्वदात्मनोऽपि बुद्ध्याश्रयत्वेनान्वयाद्बुद्धिधर्मेणात्मानं बुध्यत इत्यर्थः ॥ २६॥ एतदिति ॥ गुणाः सत्त्वादयः कर्माणि गुणोद्बोधकानि तैर्निबध्यते स्थिरीक्रियत इति तथा यतो ज्ञानमविद्यैव मूलं यस्य सः पुंसो जीवस्य संसारो जन्ममरणादिरूपः एषा बुद्धिः तदवस्था वा द्वारं यस्य तथाभूत एवास्ति अतः अपार्थो मिथ्याविभूतोऽपि आप्यते प्राप्यते । ईयत इति पाठे प्रतीयते । इष्यत इति पाठान्तरम् । तत्र दृष्टान्तमाह । स्वप्न इव यथा स्वाप्निकः पदार्थः दोषवशादेव प्रतीयते तथेत्यर्थः ॥२७॥ तस्मादिति ॥ यस्माद्बुद्धिनिबन्धन एव संसारः तस्मात्त्रिगुणात्मनां त्रिगुणकार्याणां त्रिगुणपरिणामहेतूनां च कर्मणां बीजस्य देहाद्यात्माध्यासस्य निर्हरणं भवद्भिः कर्त्तव्यं स एव योगः स योगस्तु धियः

एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ॥ स्वरूपमात्मनो बुध्येद् गन्धैर्वायुमिवान्वयात् ॥ २६ ॥ एतद्वारो हि संसारो गुणकर्मनिबन्धनः ॥ अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥ २७ ॥ तस्माद् भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम् ॥ बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥ २८ ॥ तत्रोपायसहस्राणामयं भगवतोदितः ॥ यदीश्वरे भगवति यथा यैरञ्जसा रतिः ॥ २९ ॥ गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च ॥ सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥ ३० ॥ श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ॥ तत्पादाम्बुरुहध्यानात् तल्लिङ्गेक्षाऽर्हणादिभिः ॥ ३१ ॥

प्रवाहं जाग्रदादिवृत्तिरूपमुपरमयतीति तथाभूत एव ॥ २८ ॥ तत्रेति ॥ तत्र बीजनिर्हरणे विषये उपायसहस्राणां मध्ये अयमेवोपायो भगवता उदितः कथितः यैर्धर्मैर्यथानुष्ठितैर्वा भगवति ईश्वरे अञ्जसा साक्षात्फलानुसन्धानव्यवधानरहिता रतिः निरतिशयिता प्रीतिः स्यात् सा तेषां सर्वसाधनानां समुदाय इति शेषः ॥ २९ ॥ गुर्विति युग्मम् ॥ सा च भगवति रतिः गुरूणां शुश्रूषया सेवया गुरुभ्यस्तत्वश्रवणेच्छया वा भक्त्या गुरूणां प्रेम्णा सर्वेषां लब्धानां वस्तूनां तेभ्यः गुरुभ्यः अर्पणेन च साधुलक्षणलक्षितानां भक्तानां सङ्गेन यद्वा साधु निष्कपटं यथा भवति तथा भक्तानां सङ्गेन सेवया ईश्वरस्याराधनेन हृदये मानसैर्द्रव्यैः पूजया च तत्कथायां भगवत्कथायां श्रद्धया श्रवणासक्त्या भगवतो गुणानां भक्तवात्सल्यादीनां कर्मणां लीलावतारचरितानां कीर्त्तनैः तस्य भगवतः पादाम्बुरुहयोर्ध्यानात् तस्य भगवतो लिङ्गस्य मूर्तेः ईक्षार्हणादिभिः ईक्षणं दर्शनमर्हणं बहिर्द्रव्यैः पूजा आदिपदेन प्रणामपरिक्रमादिसंग्रहः तैश्च भवति ॥ ३० ॥ ३१ ॥

हरिरिति ॥ हरिर्भगवानीश्वरः सर्वेषु भूतेष्वास्ते इति मनसा एवमभिप्रायेण तैस्तेषामपेक्षितैः कामैर्विषयैः साधु यथोचितं सर्वाणि भूतानि मानयेत् ॥ ३२ ॥ एवमिति ॥ निर्जितः षण्णां कामक्रोधलोभमोहमदमत्सराणाम् इन्द्रियाणां वा वर्गो यैः तैरेवमुक्तप्रकारेण ईश्वरे भक्तिः क्रियते यया साधनभक्त्या वासुदेवे भगवति रतिं प्रेमलक्षणां सम्यक् निश्चलात्मिकां पुमाँल्लभते ॥ ३३ ॥ निशम्येति ॥ भगवतः अतुल्यान् इतरेषु अविद्यमानान् गुणान् भक्तवात्सल्यादीन् तथा लीलातनुभिः स्वेच्छोपात्तरामकृष्णादिमूर्तिभिः कृतानि कर्माणि दधिपयश्चौर्यादीनि लौकिकचेष्टारूपाणि वीर्याणि रावणवधगोवर्द्धनोद्धरणादीनि इतरैः कर्त्तुमशक्यानि च निशम्य श्रुत्वातिहर्षेण उद्गताः उदञ्चिताः पुलका रोमाण्यश्रूणि आनन्दबाष्पबिन्दवश्च तैर्गद्गदं यथा भवति तथा प्रोत्कण्ठो मुक्तकण्ठः सन् यदा उद्गायति उच्चैर्गायति रौति निरभिव्यक्तिवर्णपूर्वकं शब्दं करोति नृत्यति च ॥ ३४ ॥ यदेति ॥ यदा च क्वचित् कदाचित् ग्रहग्रस्त इव हसति क्वचिदाक्रन्दते तत्तद्गुणोच्चारणपूर्वकं विलपति । तत्रार्षः । क्वचिच्च भगवन्तं ध्यायति । क्वचिच्च जनं भगवदात्मकं पश्यन् वन्दते नमस्करोति । क्वचिच्च मुहुर्वारंवारं श्वसन् श्वासान् मुञ्चन् आत्मनि भगवति गतिर्यस्य सः अतोऽत्रात्मानुसन्धानाभावात् गता त्रपा लज्जा

हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः॥इति भूतानि मनसा कामैस्तैः साधु मानयेत्॥३२॥एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे॥ वासुदेवे भगवति यया संलभते रतिम्॥३३॥निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि॥यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३४ ॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ॥ मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः ॥ ३५ ॥ तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ॥ निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ॥ ३६ ॥ अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम्॥ तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥

यस्य सः तथाभूतः सन् हे हरे हे जगत्पते हे नारायणेति वक्ति ॥ ३५ ॥ तदेति ॥ तदा मुक्तं समस्तं बन्धनं भगवत्प्राप्तिविरोधिपूर्वोत्तरपुण्यपापात्मकादिरूपं यस्मात् तादृशः तस्य भगवतो भावो लीलादिस्तस्य भावो भावनानुध्यानं तेनानुकृत आशयोन्तःकरणमाकृतिः विग्रहश्च यस्य महीयसाऽतिवेगवता भक्तिप्रयोगरूपेणोपायेन निःशेषेण दग्धं बीजं बन्धनमूलभूतमविद्यादेहाध्यासादिलक्षणं च अनुशयो वासना च यस्य स पुमानुक्तभक्तियोगनिष्ठोऽधोक्षजं भगवन्तं सम्यक् पुनरावृत्तिवर्जं यथा भवति तथा एति प्राप्नोति ॥ ३६ ॥ अधोक्षजेति ॥ इह लोके अशुभात्मनः रागादियुक्तमनसः शरीरिणः अधोक्षजस्यालम्भः मनसा स्पर्शः प्राप्तिरेव संसृतिचक्रशातनं चक्रवत्परिवर्तमानायाः संसृतेः शातनं निवर्तकं तदधोक्षजालम्भनमेव ब्रह्मसंबन्धि निर्वाणं निरतिशयं सुखं बुधाः ब्रह्मविदो विदुर्जानन्ति ततो हेतोः हृदये हृदयपुण्डरीके एव हृदीश्वरमन्तर्यामिणं भगवन्तं भजध्वम् । अधोक्षजालम्बमिति पाठे आलम्बनमाश्रयणमित्यर्थः ॥ ३७ ॥

क इति ॥ हे असुरबालकाः स्वे स्वकीये हृदि छिद्रवत् आकाशवत् सतः वर्तमानस्य स्वस्य जीवस्यात्मनः स्वरूपभूतस्य तथा स्वस्य सख्युर्हितकर्त्तुः हरेः उपासने कोऽति-प्रयासो न कोऽपीत्यर्थः । अशेषाणां सर्वेषां देहिनां श्वशूकरादीनामपि सामान्यतो विषयोन्मुखत्वेन तत्परत्वे तुल्यत्वापत्तेर्हेतोः विषयाणां स्रक्चन्दनवनितादीनामुपपादनैरर्जनैः किं प्रयोजनं न किमपीत्यर्थः । न चैवमादौ पौनरुक्त्यं दोषः नारदोक्तानुवादरूपत्वादस्य प्रकरणस्य ॥ ३८ ॥ राय इति ॥ चलाः विनश्वराः रायः धनानि कलत्रं भार्या पशवः गवाश्वादयः सुताः पुत्राः आदिशब्देनान्ये पित्रादयो देहसंबन्धिनः गृहाः महीक्षेत्रमाजीविकासाधनं कुञ्जराः कोशाः तेषां शालाः धनकोशस्य राय इत्यनेनोक्तत्वात् भूतयो भोगोपकरणादिसमृद्धयः सर्वे अर्थाः कामाश्च क्षणेन भङ्गुरमायुर्यस्य तस्य मर्त्यस्य कियत्प्रियं कुर्वन्ति अल्पमेवेत्यर्थः ॥ ३९ ॥ एवमिति ॥ एवममी शास्त्रप्रसिद्धाः अपि स्वर्गादिलोकाः यतः क्रतुभिर्यागाद्यनुष्ठानैः कृताः साधिताः अतो यत्कृतकं तन्नश्वरं सातिशयं दुःखमिश्रितं चेति व्याप्तेस्तेऽपि क्षयिष्णवः सातिशयाः पुण्यतारतम्येन स्वापेक्षया अन्येषामधिकैश्वर्यवतां सद्भावात् न निर्मलाश्च स्पर्द्धादिदोषवत्त्वात् तस्मात् आत्मलब्धये अदृष्टश्रुतदूषणं न दृष्टं न वा श्रुतिस्मृतिभ्यां श्रुतं दूषणं यस्य तमेव परं

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः॥ स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३८ ॥ रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ॥ सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत् प्रियं चलाः ॥ ३९ ॥ एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ॥ तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ ४० ॥ यदर्थ्यर्थेह कर्माणि विद्वन्मान्यः सकृन्नरः ॥ करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४१ ॥ सुखाय दुःखमोक्षाय संकल्प इह कर्मिणः ॥ सदाप्नोतीहया दुःखमनीहायाः सुखावृतः ॥४२॥ कामान् कामयते काम्यैर्यदर्थमिह पूरुषः ॥ स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥ ४३ ॥

परमात्मानमीशमेकया कर्मादिनिरपेक्षया भक्त्या भजत ॥ ४० ॥ यदिति ॥ विद्वन्मानी आत्मानं विद्वांसं मन्यमानः नरः प्राणी इह संसारे यद् वैषयिकसुखम् अध्यर्थ्य संकल्प्य ल्यबन्तम् । असकृत् वारंवारं कर्माणि लौकिकानि वैदिकानि च करोति अतः अभिलषितात् विपर्यासं विपरीतं दुःखात्मकमेव फलममोघमवश्यं विन्दते लभते ॥ ४१ ॥ एतदेव स्पष्टयति—सुखायेति ॥ इह कर्ममार्गे कर्मिणः पुरुषस्य सुखाय सुखप्राप्त्यर्थं तथा दुःखमोक्षाय दुःखनिवृत्त्यर्थं वा सङ्कल्पो भवति एतदन्यतरसङ्कल्पेनैव कर्मसु प्रवर्तत इत्यर्थः । ततश्च यः कर्मप्रारम्भात्पूर्वमनीहायाः इच्छायाः क्रियाया वा हेतोः सुखेनावृतो व्याप्तः आसीत्स एव ईहया सर्वदा दुःखमाप्नोति ॥ ४२ ॥ कामानिति ॥ इह लोके पुरुषो यदर्थं यस्य देहस्य सुखाय काम्यैः कर्मभिः कामान् शब्दादिविषयान् कामयते स देहस्तु पारक्यः न त्वात्मीयः श्वसृगालादिभक्ष्यः भङ्गुरो नश्वरः याति आत्मानं जहाति उपैति तमालिङ्गति च ॥ ४३ ॥

किमिति ॥ यदा साक्षात्संबन्धिनः अहन्तास्पदस्य देहस्येयमवस्था तदा व्यवहिता देहसंबन्धेन संबद्धाः ममतास्पदाः अपत्यादयः पारक्या भङ्गुरा यान्त्युपयान्ति चेति किमु
वक्तव्यम् ॥ ४४ ॥ किमिति ॥ तुच्छैरत्यल्पैर्वस्तुतोऽनर्थैः नरकाद्यनर्थहेतुभिः अर्थसंकाशैर्विचारं विना पुरुषार्थतया प्रकाशमानैस्तत्रापि नश्वरैस्तथाभूतेन देहेन सहैतैर्दाराप-
त्यादिभिः नित्यानन्दमहोदधेः पूर्णसुखसमुद्रस्य आत्मनः किं प्रयोजनं न किमपीत्यर्थः ॥ ४५ ॥ निरूप्यतामिति ॥ हे असुराः इह संसारे प्राचीनैः कर्मभिः क्लिशमानस्य
दुःखमनुभवतो देहभृतः प्राणिनः निषेकादिषु स्त्रीसंभोगादिष्वप्यवस्थासु स्वार्थः उत्पन्नः आनन्दः कियान् इति भवद्भिर्निरूप्यताम् । यद्वा । निषेकादिष्ववस्थासु पितृरेतो-
द्वारा मातृयोनिप्रवेशादिषु श्मशानान्तास्ववस्थासु प्राचीनैः कर्मभिः क्लिश्यमानस्येत्यन्वयः ॥४६॥ कर्माणीति ॥ देही जीवः आत्मानुवर्तिना देहेन कर्माणि देहान्तरारम्भकाणि
पुण्यपापात्मकानि आरभते करोति तैः स्वनिमित्तभूतैः कर्मभिर्देहान्तरं तनुते बिभर्ति तेन पुनः कर्माणि तैश्च पुनर्देहमित्येवं बीजाङ्कुरन्यायेन परिवृत्तिर्न निवर्तते । यतः देहं

किमु व्यवहितापत्यदारागारधनादयः ॥ राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४४ ॥ किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥
अनर्थैरर्थसंकाशैर्नित्यानन्दमहोदधेः ॥ ४५ ॥ निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥
॥ ४६ ॥ कर्माण्यारभते देही देहेनात्मानुवर्तिना ॥ कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७ ॥ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ॥
भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ ४८ ॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ॥ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ४९ ॥
देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ॥ भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ॥५०॥ नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः॥
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥५१॥ न दानं न तपो नेज्या न शौचं न व्रतानि च॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्॥५२॥

कर्म चेति उभयमपि अविवेकतः अज्ञानेनैव तनुते ॥ ४७ ॥ तस्मादिति ॥ तस्मात् यद्यपि अर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः यस्य हरेरधीनाः सन्ति अतस्तद्भक्तानां
तेऽतिसुलभा एव तथाप्यनीहया तत्कामनाराहित्येनैव अनीहं निरपेक्षम् आत्मानमीश्वरं हरिं भजत ॥ ४८ ॥ सर्वेषामिति ॥ स्वकृतैः स्वसृष्टैर्महद्भिर्भूतैः पृथ्व्यादिभिः कृतानां
स्वेन सृष्टानां सर्वेषामपि देवासुरादीनां भूतानां देहानां जीवसंज्ञितः अन्तर्यामी आत्मा प्रियः ईश्वरः नियन्ता च हरिरेव ॥ ४९ ॥ देव इति ॥ अतः देवः असुरः
इत्यादिः जातिविभागमन्तरेणैव यः कश्चिदपि मुकुन्दस्य चरणं भजन् भवेत् सः स्वस्तिमान् कल्याणभाक् स्यादेव यथा वयमसुरा अपि भगवन्तं भजन्तः स्वस्तिमन्तो
जातास्तथेत्यर्थः ॥ ५० ॥ नालमिति युग्मम् ॥ हे असुरात्मजाः द्विजत्वादिकं मुकुन्दस्य प्रीणनाय नालं न समर्थम् । एवं दानादिषु प्रत्येकमन्वयः । अत्र द्विजत्वादिशब्दा
वर्णोत्कर्षजात्युत्कर्षाजितेन्द्रियत्वोपलक्षकाः । यतोऽसौ हरिरमलया निष्कामया भक्त्यैव प्रीयते अन्यत्सर्वं द्विजत्वादिकं साधनान्तरं च विडम्बनं भक्तिं विना नटनमात्रमाकि-

श्चित्करमेवेति ॥ ५१ ॥ ५२ ॥ तत इति ॥ तस्मात् हे दानवाः भगवति सर्वभूतात्मनि ईश्वरे हरौ आत्मौपम्येन स्वतुल्यतया सर्वत्र सर्वभूतेषु स्नेहरूपां भक्तिं कुरुत ॥५३॥ दैतेया इति ॥ भक्त्या दैतेयादयः पापजीवा अपि अच्युततां भगवत्साधर्म्यममृतत्वं गताः सन्ति ॥ ५४ ॥ एतावानिति ॥ अस्मिन् लोके संसारे पुंसः सर्वत उत्कृष्टः स्वार्थः पुरुषार्थः एतावानेव तत्त्वज्ञैः शास्त्रेषु स्मृतो निरूपितः यद्गोविन्दे एकान्ता अनन्यप्रयोजना भक्तिरिति सापि भक्तिः यत्सर्वत्र स्थावरजङ्गमेषु तस्य गोविन्दस्येक्षणं तद्दृष्ट्या सर्वसम्मानमिति ॥ ५५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ सप्तमे गङ्गासहायः सप्तमस्य व्यधादिमाम् ॥ ७ ॥ अष्टमे घ्नन् सुतं दैत्यो नृसिंहेन हतो नखैः ॥ स च स्तुतः सुरैस्तत्र श्लोकाः पर्वतमार्गणाः ॥ उवाचविंशतिः साङ्घ्रिगजशैला अनुष्टुभः ॥ ८ ॥ अथेति ॥ दैत्यसुताः सर्वे तेन प्रह्लादेनानुवर्णितं श्रुत्वा अथ निरवद्यत्वान्निर्दुष्टत्वात्तदेव जगृहुः गुरुणा दैत्याचार्येण यदनुशिक्षितं तन्नैव जगृहुः संसारहेतुत्वेन दुष्टत्वात् ॥ १ ॥ अथेति ॥ अथ तेषां दैत्यसुतानां बुद्धिमेकान्तसंस्थितां प्रत्यङ्निष्ठामालक्ष्य

ततो हरौ भगवति भक्तिं कुरुत दानवाः ॥ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५३ ॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ॥ खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५४ ॥ एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ॥ एकान्तभक्तिर्गोविन्दे यत् सर्वत्र परीक्षणम् ॥ ५५ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे प्रह्लादेन दैत्यपुत्रानुशासने ब्रह्मस्वरूपवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ नारद उवाच ॥ अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ॥ जगृहुर्निरवद्यत्वात् नैव गुर्वनुशिक्षितम् ॥ १ ॥ अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ॥ आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥ २ ॥ श्रुत्वा तदप्रियं दैत्यो दुःसहं तनयानयम् ॥ कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥ क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ॥ आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥ प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ॥ सर्पः पदा हत इव श्वसन्प्रकृतिदारुणः ॥ ५ ॥

दृष्ट्वा लिङ्गैर्ज्ञात्वा राजोपालम्भाद्भीतः अत एव त्वरितः त्वरया युक्तः आचार्यसुतो यथा यथावत् राज्ञे हिरण्यकशिपवे आवेदयत् ॥ २ ॥ श्रुत्वेति ॥ तद्गुरुपुत्रेण कथितं तनयस्य प्रल्हादस्यानयं विष्णुभजनपरत्वं दैत्यपुत्राणामपि तच्छिक्षणं च दुःसहमप्रियं श्रुत्वा दैत्यः हिरण्यकशिपुः कोपावेशेन चलत् कम्पमानं गात्रं शरीरं यस्य तादृशः सन् पुत्रं प्रल्हादं हन्तुं मनो दधे कृतवान् ॥ ३ ॥ क्षिप्त्वेति युग्मम् ॥ प्रकृत्या स्वभावत एव दारुणः सदैत्यः पदा हतः पादताडितः सर्प इव श्वसन् प्रश्रयेण विनयेन अवनतं नम्रं दान्तं जितचित्तं बद्धः अञ्जलिर्येन तम् अवस्थितं स्वसम्मुखे नीचैः स्थितम् अतदर्हणं तिरस्कारानर्हमपि प्रल्हादं परुषया कठोरया वाचा क्षिप्त्वा तिरस्कृते पापेन सरोषेण तिरश्चीनेन वक्रेण चक्षुषा तमीक्षमाण आह स्म ॥ ४ ॥ ५ ॥

हे इति ॥ हे दुर्विनीत मन्दात्मन् अल्पबुद्धे कुलभेदकर हे अधम नीच मच्छासनोद्वृत्तं मदाज्ञोल्लङ्घिनं स्तब्धमनम्रीभूतं त्वामद्य हत्वा यमस्य क्षयं स्थानं नेष्ये प्रापयिष्यामि एवं तेन निन्दायां प्रवर्त्तितापि सरस्वती भगवद्भक्तत्वात्तं स्तौति । तथा हि दुष्टेष्वपि विशिष्टं कृपायुक्तं नीतं मनो यस्य सः अत एव मन्दानामप्यात्मा मनो यत्र सः कुलभेदकराः कुलविशेषस्रष्टारः प्रजापतयोऽप्यधमा यस्मात्सः भगवद्भक्तत्वात् अत एव स्तब्धमसुरेषु पूज्यत्वबुद्ध्यभावात् यमानां द्वन्द्वानां सुखदुःखादीनां क्षयो यस्मात् यत्र वा तं भगवन्तं प्रति त्वां नेष्यामीति । यद्वा । यमादीनां योगाङ्गानां क्षयं निवासभूतं त्वां नेष्ये स्वरक्षकतयाङ्गीकरिष्ये ॥ ६ ॥ क्रुद्धस्येति ॥ हे मूढ यस्य क्रुद्धस्य भयेन सहेश्वराः लोकपालैः सहितास्त्रयो लोकाः कम्पन्ते तस्य मे मम शासनमाज्ञामभीतवत् किं बलं यस्य सः तादृशः अत्यगाः कस्य बलमवलं व्यतिक्रान्तवानसि ॥ ७ ॥ नेति ॥ हे राजन् त्वया पृष्टं यन्मम बलं तन्न केवलं मे ममैव बलं किं तु भवतोऽन्येषां च सर्वेषां बलिनां बलं स एव येन ब्रह्मादयः परे अवरे उच्चावचाः ये स्थिरजङ्गमाः चराऽचराः सर्वेऽपि ते अमी लोकाः स्ववशं प्रणीताः प्रापिताः ॥८॥ स इति ॥ स ईश्वरः कालः उरुक्रमः महापराक्रमः असावेव ओजः इन्द्रियशक्तिः सहः मनःशक्तिः सत्वं

**हे दुर्विनीत मन्दात्मन् कुलभेदकराधम ॥ स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाऽद्य यमक्षयम् ॥६॥ क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः ॥तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः॥७॥ प्रह्लाद उवाच ॥ न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् ॥ परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥ स ईश्वरः काल उरुक्रमोऽसावोजःसहःसत्त्वबलेन्द्रियात्मा ॥ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः॥९॥ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विषः॥ ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनन्तस्य महत् समर्हणम् ॥१०॥दस्यून्पुरा षण्न विजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश॥जितात्मनोऽज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥११॥**

धैर्यं बलं देहशक्तिः इन्द्रियाणि च तेषामात्मा स्वरूपं स एव परमः श्रेष्ठः गुणत्रयेशः अतस्तैः सत्वादिभिः सर्वं विश्वं सृजति अवति अत्ति संहरति च ॥ ९ ॥ जहीति ॥ त्वम् आत्मनः स्वस्य ममासुरं भावं शत्रु मित्रादिकल्पनारूपं जहि परित्यज मनश्च सर्वत्र समं मित्रादिभेदरहितं धत्स्व कुरु वस्तुतः अजितात् अवशीकृतात् अतः उत्पथे दुर्विषये स्थितात् आत्मनो मनसः ऋते वि नाऽन्ये विद्विषो न सन्ति तत्सर्वत्र समदर्शनमेव अनन्तस्य महत्सर्वोत्कृष्टं समर्हणं सम्यगाराधनं विद्धि ॥ १० ॥ दस्यूनिति ॥ पुरा प्रथमं स्वशरीर एव वर्तमानान् आत्मन ऐश्वर्यादिधनानि लुम्पतः अपहरतः षडिन्द्रियरूपान् दस्यून् शत्रून् न विजित्य एके दश दिशः स्वेन जिताः मन्यन्ते एवमभिमानमात्रमेव तेषां न तु ते निर्जितसपत्नाः शरीर एव शत्रूणां विद्यमानत्वात् जितात्मनः निर्जितमनसः ज्ञस्य विदुषः अत एव सर्वदेहिनां समस्य सर्वत्र तमेव पश्यतः अत एव साधोः स्वमोहेन देहाद्यात्माभिमानेन प्रभवः प्रतीतिर्येषां ते स्वाज्ञानकल्पिताः परे शत्रवः कुतो भवेयुर्न कुतोऽपि कारणाभावात् ॥ ११ ॥

व्यक्तमिति ॥ यस्त्वमतिमात्रमत्यन्तं विकत्थसे मन्निन्दापूर्वकं जितसपत्नतयाऽऽत्मानं श्लाघसे ततः व्यक्तं निश्चितं त्वं मर्तुकामः असि मर्तुमिच्छसि हे मन्दात्मन् हि यस्मात् मुमूर्षूणाम् आसन्नमृत्यूनां गिरो वाचो विक्लवा अनन्विताः स्युर्भवन्तीति ननु निश्चितमेव ॥१२॥ य इति ॥ हे मन्दभाग्य त्वयोक्तो यो मदन्यो जगदीश्वरः यद्यस्ति तर्ह्यसौ क्वास्ति तत्र प्रल्हाद आह । स सर्वत्रास्ति हिरण्यकशिपुराह । यदि स सर्वत्रास्ति तर्हि स्तम्भे कस्मान्नास्ति । प्रल्हादस्तु स्तम्भं निरीक्षमाणो नमस्यन्नाह । दृश्यत इति । स्वामिपादाः हिरण्यकशिपुमात्रवाक्यतयापि श्लोको व्याख्यातुं शक्यः ॥ १३ ॥ सोऽहमिति ॥ स सर्वेश्वरत्वेन प्रसिद्धोऽहं विकत्थमानस्य विपरीतं ब्रुवाणस्य ते तव कायाच्छिरो हरामि पृथक्करोमि यो हरिस्ते शरणं रक्षकः ईप्सितः इष्टः स इदानीं त्वां गोपायेत रक्षेत् तङार्षः ॥ १४ ॥ एवमिति ॥ एवं रुषा दुरुक्तैः परुषोक्तिभिः महाभागवतं सुतं प्रल्हादं मुहुः अर्दयन् पीडयन् खड्गं प्रगृह्य वरासनात् सिंहासनात् उत्पतितः उत्थितः सन् अतिबलः स महासुरः हिरण्यकशिपुः स्वमुष्टिना स्तम्भं तताड णिजभाव

हिरण्यकशिपुरुवाच ॥ व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ॥ मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विक्लवा गिरः ॥१२॥ यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ॥ क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥ १३॥ सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ॥ गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ॥१४॥ एवं दुरुक्तैर्मुहुरर्दयन्रुषा सुतं महाभागवतं महासुरः ॥ खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १५ ॥ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् ॥ यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामात्ययमङ्ग मेनिरे ॥१६॥ स विक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ॥ अन्तःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥१७॥ सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ॥१८॥

आर्षो भाति अनित्यो वा णिच् । स्तम्भेऽपि हरिरस्ति चेत्प्रकटीभवेत् इति विचार्येति ॥ १५ ॥ तदेति ॥ तदैव ताडनानन्तरमेव तस्मिन् स्तम्भेऽतिभीषणो निनदो ध्वनिर्बभूव येन निनदेनाण्डकटाहमस्फुटत् भिन्नमिवाभूत् तद्भित्त्वा निनदो बहिर्गत इत्यर्थः । अङ्ग हे युधिष्ठिर यन्निनदं स्वधिष्ण्योपगतं स्वस्थानप्राप्तं श्रुत्वा ब्रह्मादयः स्वधाम्नामप्ययमागतं मेनिरे अमन्यन्त ॥१६॥ स इति ॥ ओजसा बलेन पुत्रवधेप्सुस्तदर्थं विक्रमन् पराक्रमं कुर्वन् दीर्घाभाव आर्षः । स दैत्येन्द्रः येन सुरारियूथपाः दैत्यश्रेष्ठाः वितत्रसुः त्रासं प्रापुस्तमश्रुतपूर्वमद्भुतं निर्ह्रादं ध्वनिं निशम्य श्रुत्वान्तःसभायां सभामध्ये तत्पदं तस्य ध्वनेः आश्रयं कर्तारं न ददर्श ॥ १७ ॥ सत्यमिति ॥ निजभृत्येन प्रह्लादादिना यद्भाषितं तत्सत्यं विधातुं कर्तुं तथा अखिलेषु भूतेषु चात्मनः स्वस्य व्याप्तिं च सत्यां कर्तुम् अत्यद्भुतं दैत्येभ्यो भयदं ब्रह्मसृष्टावदृष्टमश्रुतं च न मृगं मृगाकारं न च मानुषं मनुष्याकारं रूपमुद्वहन् भगवान् सभायां मध्ये स्तम्भे अदृश्यत । अत्र निजभृत्यभाषितं सत्यं कर्तुमिति सर्वत्रोपयुज्यते तत्र स्तम्भे दृश्यते इति स्वभृत्येन प्रह्ला-

देन भाषितं तथा भौतिकेषु च भावेषु भूतेष्वथ महत्सु च भगवानास्त इति सर्वभूतव्याप्तिरपि तेन भाषिता तथा निजभृत्यैः सनकादिभिः शापानन्तरमनुतप्तैस्त्रिभिर्जन्मभिः शापमोक्षो भवत्विति भाषितं तथा निजभृत्येन हिरण्यकशिपुना ब्रह्माणं प्रति " भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो । " इति " नान्तर्न बहिः " इति " न नरैर्न मृगैः " इति भाषितं तथा ब्रह्मणा च निजभृत्येन तथास्त्विति भाषितं न हि तद् ब्रह्मसृष्टं न च नरो मृगो वा न च सभागृहान्तः न च प्राङ्गणवद्बहिः यच्च निजभृत्यद्वास्थावतारेण हिरण्यकशिपुना नूनमेतद्विरोधेन मृत्युर्मे भविता न वेति भाषितं तथा निजभृत्येन नारदेन तथायमकुतश्चिद्भयोऽमर इति अयं महान् संस्थां न प्रपत्स्यति अनन्तानुचर इत्यनेन स्वस्य भक्तपक्षपातित्वं च भाषितं चकारात् " कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति " इति " तेषामहं समुद्धर्ता मृत्युसंसारसागरात् " इत्यादि भाषितं तच्च सत्यं कर्तुमदृश्यतेति द्रष्टव्यमलमतिविस्तरेण ॥ १८ ॥ स इति ॥ स दैत्येन्द्रः एवं शब्दं श्रुत्वा तदाश्रयनिर्धारणार्थं परितो विपश्यन् स्तम्भस्य मध्यादनुनिर्जिहानं निर्गच्छत् नृमृगेन्द्रयोर्मिश्रं रूपं दृष्ट्वा अयं मृगो न नापि नरः अहो आश्चर्यं किमेतद्विचित्रमद्भुतं सत्वं प्राणिविशेष इति मीमांसितवानिति शेषः । यद्वा । स दैत्यः एवं भूतं सत्वं प्राणि-

स सत्वमेनं परितो विपश्यन्स्तम्भस्य मध्यादनुनिर्जिहानम् ॥ नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपं तदलं भयानकम् ॥ प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम्॥ करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ॥ २० ॥ स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यम् ॥ चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ २१ ॥ दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ॥ २२ ॥

विशेषं स्तम्भस्य मध्यादनुनिर्जिहानं परितः स्तम्भस्य चतुर्दिशं विपश्यन् अयं मृगो नास्ति नापि नरोऽस्त्यतः नृमृगेन्द्रमिश्ररूपं विचित्रमेतत् किमिति मीमांसितवानित्यन्वयः ॥ १९ ॥ मीमांसमानस्येति सार्द्धत्रिकम् ॥ एवमलमत्यर्थं भयानकं प्रतप्तं यच्चामीकरं स्वर्णं तद्वत् पिशङ्गे चण्डे उग्रे लोचने यस्मिंस्तत् सटाः जटाः केसराः कण्ठरोमाणि स्फुरद्भिः सटाकेसरैर्जृम्भितं साटोपमाननं यस्मिंस्तत् कराला उदग्रा दंष्ट्रा यस्मिंस्तत् करवालः खड्गः तद्वच्चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिंस्तत् भ्रुकुटीयुक्तेन मुखेनोल्बणं भयंकरं स्तब्धौ उन्नतौ शङ्कुवदूर्ध्वौ कर्णौ यस्मिंस्तत् गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिंस्तत् हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणं दिविस्पृशन् कायो यस्मिंस्तत् अलुक् समासः । अदीर्घा ह्रस्वा पीवरा स्थूला च ग्रीवा यस्मिन् उरु विशालं वक्षस्थलं यस्मिन् तच्च अल्पं मध्यममुदरं यस्मिंस्तत् चन्द्रांशुवद्गौरैस्तनुरुहैर्लोमभिश्छुरितं व्याप्तं विष्वक् सर्वतः प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिंस्तत् नखान्येवायुधानि यस्मिंस्तत् दुरासदं प्राप्तुमशक्यं सर्वाणि च निजानि

चक्रादीनि इतराणि वज्रादीनि च त एवायुधप्रवेकाः शस्त्रोत्तमास्तैर्विद्राविताः दैत्या दानवाश्च येन तदेवमलं भयानकं रूपं मीमांसमानस्य विचारयतः तस्य दैत्यस्य अग्रतो नृसिंहरूपो हरिः समुत्थितः ॥२०॥२१॥२२॥ प्रायेणेति ॥ प्रायेण महामायाविना हरिणा मे मम अयमेवंभूतो वधः मृत्युहेतुः स्मृतः चिन्तितस्तथाप्यनेन समुद्यतेन कृतोद्यमेनापि किं न किंचित्स्यान्मद्बलस्यानेन दुष्प्रतीकारत्वादित्येवं ब्रुवन् गदायुधः गृहीतगदो दैत्यकुञ्जरो हिरण्यकशिपुर्नदन् नादं कुर्वन्नृसिंहं प्रत्यभ्यपतत् युद्धार्थं संमुखं जगाम ॥२३॥ अलक्षित इति ॥ तदा सोऽसुरः नृसिंहस्यौजसि दीप्तौ पतितः सन्नलक्षितोऽदृष्टोऽभूत् । तत्र दृष्टान्तमाह । अग्नौ पतितः पतङ्गमः शलभो यथा तथेति सत्वधामनि शुद्धसत्वाश्रये भगवति यत्तस्य तमोमयस्य दैत्यस्यादर्शनं तद्विचित्रं नैव भवति यो भगवान् पुरा सृष्ट्यादौ प्रलयकालिकं तमः नु अतिगाढं स्वतेजसा अपिबत् तिरस्कृतवान् ॥ २४ ॥ तत इति ॥ ततो महासुरोऽभिपद्य अभिमुखमागत्य रुषा उरुवेगया भ्राम्यमाणया गदया नृसिंहमभ्यहनत् हन्तुं प्रवृत्त इत्यर्थः । शब्लुगभाव आर्षः ।

प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम् ॥ एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुञ्जरः॥२३॥अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा ॥ न तद् विचित्रं खलु सत्त्वधामनि स्वतेजसा योऽनु पुराऽपिबत्तमः ॥ २४ ॥ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ॥ २५ ॥ स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥ असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः ॥ २६ ॥ तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ॥२७॥ तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ कृत्वाऽट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ॥ २८ ॥

तं विक्रमन्तं प्रहर्तुं प्रवृत्तं क्रमेर्दीर्घाभाव आर्षः । सगदं गदाधरो नृसिंहः अग्रहीत् यथा तार्क्ष्यसुतो गरुडो महान्तमप्युरगं गृह्णाति तथेति ॥ २५ ॥ स इति ॥ हे भारत स गृहीतोऽसुरस्तदा विक्रीडतस्तस्य नृसिंहस्य हस्तादुत्कलितः विनिःसृतः यथा विक्रीडतो गरुत्मतो गरुडस्य अहिर्विगलितो भवति तथेत्यर्थः । दैत्येन हृतमोकः स्थानं येषां ते अत एव तद्भयेन घनच्छदाः मेघान्तरिताः सन्तः स्थिताः सर्वे धिष्ण्यपाः लोकपालाः अमरा इन्द्रादयः भगवद्धस्ताद्दैत्यनिर्गमनम् असाध्वमन्यन्त ॥ २६ ॥ तमिति ॥ महासुरः यत् यस्मात् नृहरेर्हस्तान्मुक्तस्तस्मात्तं नृहरिं निजवीर्यात् स्वबलात् शङ्कितं भीतं मन्यमानः स्वयं च मृधे युद्धे जितश्रमः श्रमरहितः खड्गचर्मणी प्रगृह्य पुनर्वेगेन तं नृहरिमासज्जताभ्यपतत् ॥ २७ ॥ तमिति ॥ महाजवः हरिश्च श्येनस्येव वेगो यस्य तं शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैः अच्छिद्रमन्यप्रहारस्यानवसरं यथा भवति एवमुपर्यधश्चरन्तं दैत्यं विलोक्य खरं तीव्रमुत्स्वनेन महाशब्देन उल्बणं भयङ्करम् अट्टहासं कृत्वा अट्टहासशब्दभयेन हरेः तेजसा च निमीलिते अक्षिणी येन तं जगृहे ॥ २८ ॥

विश्वगिति ॥ विश्वक् सर्वतः स्फुरन्तं सर्वावयवान् प्रचालयन्तं यतो ग्रहणेन हेतुना आतुरं विवशम् इन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेनापि न क्षता त्वगपि यस्य तं दैत्यं हरिः द्वारि तत्रापि स्वोरुमूरौ अङ्के द्वितीया सप्तम्यर्थे निपात्य लीलया नखैर्ददार विदारितवान् यथा उर आपात्येतिपाठे दैत्यमापात्य ऊरः ददारेत्यन्वयः। दैर्घ्यमार्षम्। व्यालः सर्पः आखुं मूषकमिति । ग्रहणे दृष्टान्तः। महाविषम् अहिं गरुडो यथेति। विदारणे दृष्टान्तः। ब्रह्मवरेणापि तस्य विदारणमन्यैरशक्यं भगवता तु तत्प्रतीकारः कृतः तथा हि द्वारीति नान्तर्न बहिरित्यस्य ऊराविति न भूमौ नाम्बर इत्यस्य नखैरिति व्यसुभिरसुमद्भिर्वा नेत्यस्य प्रतीकारः एवं न दिवा नक्तमित्यस्य प्रतीकाराय सन्ध्यायामिति ज्ञेयम्। तदुक्तं पुराणान्तरे। "तस्मात्स्तम्भात्स्वयं देवो विष्णुराविरभूत्तदा। सन्ध्यायां क्रुद्ध्यमानस्तु त्रासयन् दैत्यसत्तमान्" इति। ब्रह्मसृष्ट्यादिपरिहाराय स्वयं नृसिंहरूपेण विदारणं कृतमिति च स्पष्टम् ॥ २९ ॥ संरम्भेति ॥ आहितेन संरम्भेण क्रोधेन दुष्प्रेक्ष्ये कराले भयङ्करे लोचने यस्य सः व्यात्तं विकाशितं यदाननं मुखं तस्यान्तं स्वजिह्वया विलिहन् असृजो रक्तस्य लवैर्बिन्दुभिः अक्ताः सिक्ताः अत एवारुणाः केसराः आननं च यस्य सः यथान्त्रैर्माली मालाधरो मालारूपेणान्त्रं

विश्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचम् ॥ द्वार्यूर आपात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ॥ २९॥
संरम्भदुष्प्रेक्ष्यकराललोचनो व्यात्ताननान्तं विलिहन् स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननो यथान्त्रमाली द्विपहत्यया हरिः ॥ ३० ॥
नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ॥ अहन् समन्तान्नखशस्त्रपार्ष्णिभिर्दोर्दण्डयूथोऽनुपथान् सहस्रशः ॥ ३१ ॥ सटावधूता जलदाः परापतन्ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा विचुक्रुशुः ॥ ३२ ॥ द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदातिपीडिता ॥ शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ॥ ३३ ॥

दधानः हरिः सिंहो द्विपस्य गजस्य हत्यया वधेनोपलक्षितो भाति तथा बभाविति शेषः ॥ ३० ॥ नखेति ॥ दोर्दण्डानां भुजदण्डानां यूथानि यस्य सः नखाङ्कुरैरुत्पाटितं हृत्सरोरुहं हृदयकमलं यस्य तं यत्राहमेव सुखमवसं तत्रायं मन्दभाग्यः कं कं कामक्रोधादिकं वासयति स्मेति द्रष्टुमित्युत्प्रेक्षा। सरोरुहरूपकेण व्यज्यत इत्यलङ्कारेणालङ्कारव्यक्तिः। दैत्येन्द्रं विसृज्य त्यक्त्वा उद्यतानि आयुधानि यैस्तान् तस्यानुचरान् भृत्यान् तं दैत्यमनुपन्था येषां तान् अन्यांश्च तत्पक्षपातिनः सहस्रशो नखैः शस्त्रैः पाणिभिश्च समन्तात् अहन् हतवान् ॥ ३१ ॥ सटेति ॥ तस्य सटाभिरवधूताः प्रकम्पिताः जलदाः मेघाः परापतन् व्यशीर्यन्त तेन च मेघान्तरिता देवाः स्पष्टं पश्यन्तु इत्याज्ञां दत्तवानित्यर्थः। ग्रहाः खेचराः तस्य दृष्ट्या विमुष्टमपहृतं रोचिर्येषां ते तथाभूता अभूवन् तस्य श्वासेन हताः अम्भोधयः समुद्राश्चुक्षुभुः सञ्चेलुः। तस्य निर्ह्रादेन शब्देन भीता दिगिभाः विचुक्रुशुः ॥ ३२ ॥ द्यौरिति ॥ तस्य सटाभिरुत्क्षिप्तानि यानि विमानानि तैः सङ्कुला व्याप्ता द्यौः प्रोत्सर्पत प्रचलितेवाभूत् तद्रू अडभावश्चार्षौ।

क्ष्मा तस्य पदा पद्भ्यामतीव पीडिताऽभूत् तस्यासह्येन रंहसा वेगेन शैलाः समुत्पेतुः तस्य तेजसा खमाकाशः ककुभो दिशश्च न रेजिरे सर्वेषां तेजस्विनां तेजस्तिरोहितमभूत् ॥ ३३ ॥ तत इति ॥ ततः स्वभृत्यैश्वर्यमाश्चर्यमिव मत्वा कौतूहलेन सभायाम् उत्तमे नृपासने उपविष्टं सम्भृतं पूर्णं तेजो यस्य तम् अत एव न लक्षितो द्वैरथः प्रतियोद्धा येन तम् अत्यमर्षणम् अतिभयङ्करं प्रचण्डम् उग्रं वक्त्रं यस्य तं विभुं प्रभुं श्रीनृसिंहं कश्चनापि सेवको न बभाज सेवितुं समीपं न जगाम ॥ ३४ ॥ निशम्येति ॥ लोकत्रयस्य मस्तकज्वरं शिरोव्यथामिव दुःसहं तमादिदैत्यं हिरण्यकशिपुं हरिणा श्रीनृसिंहेन मृधे हतं निशम्य दृष्ट्वा प्रहर्षवेगेन उत्कलितानि विकसितानि आननानि यासां ताः सुराणां स्त्रियो मुहुः पुनः पुनः प्रसूनवर्षैर्नृहरिं ववृषुः ॥ ३५ ॥ तदेति ॥ तदा दिदृक्षतां द्रष्टुमिच्छतां दर्शनार्थमागतानां शता आर्षः । नाकिनां देवानां विमानपङ्क्तिभिर्नभस्तलं सङ्कुलं व्याप्तमास बभूव । अथानन्तरमेव सुराणामानकाः पटहाः दुन्दुभयश्च जघ्निरे तैर्वादिताः गन्धर्वश्रेष्ठा जगुः स्त्रियः अप्सरसो ननृतुः ॥ ३६ ॥ तत्रेति सार्द्धत्रयम् ॥ ब्रह्मादय-

ततः सभायामुपविष्टमुत्तमे नृपासने संभृततेजसं विभुम् ॥ अलक्षितद्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३४ ॥ निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ॥ प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३५ ॥ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनाम् ॥ सुरानका दुन्दुभयोऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः॥३६॥तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः॥ ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ॥ ३७ ॥ यक्षाः किंपुरुषास्तात वैतालाः सिद्धकिन्नराः ॥ ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः ॥ मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ॥ ३८ ॥ ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ यन्त्रमन्त्रादिभिः स्तोत्रैरष्टकैः कवचैर्हरिम् ॥ ३९ ॥ ब्रह्मोवाच ॥ नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ॥ विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधते‌ऽव्ययात्मने॥४०॥श्रीरुद्र उ०॥कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः॥तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल॥४१॥

स्तत्रोपव्रज्य किंचित्समीपमागत्य नातिदूरचराः मूर्ध्नि बद्धाञ्जलिपुटाः सन्तः आसीनमुपविष्टं तीव्रं दुःसहं तेजो यस्य तं नरशार्दूलं नृहरिं पृथक् पृथक् यूथशः ईडिरे तुष्टुवुः आमभाव आर्षः । गन्धर्वाप्सरचारणा इत्यत्र सकारलोप आर्षः ॥ ३७ ॥ ३८ ॥ ३९ ॥ नतोऽस्मीति ॥ अनन्ताय देशकालवस्तुपरिच्छेदरहिताय दुरंता अनन्ताः शक्तयो यस्य तस्मै अत एव विचित्राणि आश्चर्यजनकानि वीर्याणि प्रभावा यस्य तस्मै पवित्राणि अविद्यादिदोषनिवर्तकानि कर्माणि यस्य तस्मै गुणैः सत्त्वादिभिः विश्वस्य सर्गादीन् स्वलीलया अनायासेनैव सन्दधते सम्यक्कुर्वते अव्ययात्मने अप्रच्युतस्वरूपाय तुभ्यं त्वां प्रसादयितुं नतोऽस्मि । सर्वत्र क्रियार्थेत्यादिना चतुर्थी ॥४० ॥ कोपेति ॥ हे भक्तवत्सल तव कोपस्य कालो युगान्तः द्विपरार्धावसानमेव अस्य हननार्थं कोपः कृतश्चेत्तदायं त्वसुरोऽल्पकः अतितुच्छो न तव कोपयोग्यः यदि तु भक्तरक्षान्यथानुपपत्त्या को-

पाविष्कारस्तदा सोऽपि ते त्वया हत एवातो कोपस्य किंचित्प्रयोजनं दृश्यते अतस्तस्य सुतमुपसृतं शरणागतं ते तव भक्तं प्रल्हादं पाहि ॥ ४१ ॥ प्रत्यानीता इति ॥ हे परम परमेश्वर सर्वान्तर्यामिन् नोऽस्मान् त्रायता रक्षता शता आर्षः। भवता स्वीया एव भागा दैत्यात् प्रत्याहृताः वस्तुतोन्तर्यामिणस्तवैव यज्ञेषु भोक्तृत्वात् अस्मदीयं हृदयकमलं च त्वद्गृहमेवैतावत्पर्यन्तं भयहेतुत्वेनास्मत्स्मृतिपथे नित्यं स्थितेन दैत्येनाक्रान्तं व्याप्तं तत्प्रत्यबोधि सद्यस्तद्भयापाकरणेन त्वया विकाशं नीतम् एतावत्कालपर्यन्तं दैत्यतमः आक्रान्तत्वात्सङ्कुचितं तव सम्प्रति तव नृसिंहसूर्यस्योदये विकसितमित्यर्थः । अहो हे नाथ अस्माकं तव सेवकानां तु तव सेवैवोचिता । कालग्रस्तम् इदं त्रैलोक्यैश्वर्यं कियत् अतितुच्छमेव अत एव हे नारसिंह नरस्य सिंहस्य चाकाराभ्यामाविर्भूत ते त्वां शुश्रूषतां सेवमानानां शता आर्षः । परमपुरुषार्थरूपा मुक्तिरपि बहुपुरुषार्थतया न मता न संमता हि यद्येवं तर्हि अपरैर्धर्मादिभिः पुरुषार्थैस्तेषां किं प्रयोजनम् । मन्दाक्रान्ता छन्दः ॥ ४२ ॥ त्वमिति ॥ हे शरण्य शरणार्ह हे पाल पालक त्वं नोऽस्माकम्

**इन्द्र उवाच ॥ प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ॥ कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां न हि बहु मता नारसिंहापरैः किम्॥४२॥ऋषय ऊचुः॥त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज॥ तद्विप्रलुप्तमधुनाऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४३ ॥ पितर ऊचुः ॥ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽपि तिलाम्बुसभ्यः ॥ तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ४४ ॥ सिद्धा ऊचुः ॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन॥ नानादर्पं तन्नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ४५ ॥**

ऋषीणाम् आत्मनस्तव तेजोरूपं यत्परमं सर्वसाधनोत्कृष्टं ध्यानलक्षणं तपः आत्थ उपदिष्टवान् येन तपसा आत्मनि लीनमिदं विश्वं ससर्ज सृष्टवानासि तदमुना दैत्येन विप्रलुप्तं प्रलोपितं सत् अद्य रक्षार्थं गृहीतेनानने वपुषा पुनरपि तपः कुरुतेत्यन्वमंस्थास्तद्धनेनानुज्ञापितवानासि तस्मै ते नम इत्युत्तरश्लोकादपकर्षः ॥ ४३ ॥ श्राद्धानीति ॥ यः असभ्यः दैत्यः नोऽस्माकं तनूजैः पुत्रादिभिः अस्मदुद्देशेन दत्तानि श्राद्धानि श्राद्धसंबन्धीनि अन्नानि प्रसभं बलात् स्वयमधिबुभुजे अधिकृत्य स्वीकृतवान् तथा तीर्थस्नानसमयेऽस्मतनूजैर्दत्तं तिलाम्बु तिलोदकमपिबत् नखैर्विदीर्णा वपा यस्योदरस्य तस्मात् यस्य दैत्यस्योदरात् यः श्राद्धानि तिलमम्बु च आर्च्छत् आहृत्यास्मभ्यं दत्तवान् तस्मै अखिलधर्मगोप्त्रे नृहरये नमः ॥४४॥ य इति ॥ योऽसाधुर्दुरात्मा दैत्यो नोऽस्माकं योगेन सिद्धां गतिं अणिमादिरूपां योगबलेन तपोबलेन वा अहारषीत् अपहृतवान् अकाराधिक्यमार्षम् तं नानादर्पं धनाभिजनादिजनितानेकगर्वयुक्तं यो नखैर्निर्ददार विदारितवांस्तस्मै तुभ्यं हे नृसिंह वयं प्रणताः स्मः शालिनीच्छन्दोभङ्गः ॥ ४५ ॥

विद्यामिति ॥ पृथक् नानाविधमनोधारणयानुराद्धां सिद्धामस्माकं विद्यामन्तर्धानादिलक्षणां बलं देहशक्तिः वीर्यं पराभवसामर्थ्यं ताभ्यां दृप्तः गर्वितः अज्ञः यः न्यषेधत् प्रतिबद्धामकरोत् स येन सङ्ख्ये युद्धे पशुवत् हतस्तं त्वां मायया गृहीतनृसिंहस्वरूपं वयं नित्यं प्रणताः स्मः ॥ ४६ ॥ येनेति ॥ येन पापेन दुराचारेण नोऽस्माकं रत्नानि फणासु स्थितानि स्त्रीरत्नानि उत्तमाः स्त्रियश्च हृतानि तस्य वक्षःपाटनेन विदारणेन आसां स्त्रीणां दत्त आनन्दो येन तस्य सम्बोधनं हे एवं भूत ते तुभ्यं नमोऽस्तु अस्मद्दत्तानन्देति पाठान्तरे अस्मभ्यं दत्त आनन्दो येनेत्यर्थः ॥ ४७ ॥ मनव इति ॥ हे देव वयं तव निदेशकारिणः कैङ्कर्यकारिणो मनवः एतावन्तं कालं येन दितिजेन परिभूता परिहापिताः सेतवो वर्णाश्रममर्यादा येषां तादृशा बभूविम अधुना स खलो दितिजस्त्वया उपसंहृतो हतः अतो हे प्रभो ते तव किं कैङ्कर्यं करवाम तत्किङ्करानस्मान् शाधि आज्ञापय । मञ्जुभाषिणी छन्दः ॥ ४८ ॥ प्रजेशा इति ॥ हे परेषां ब्रह्मादीनामीश वयं ते त्वया विसृष्टाः उत्पादिताः प्रजेशा प्रजोत्पादकाः येन दैत्येन निषिद्धाः सन्तः

विद्याधरा ऊचुः ॥ विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ॥ स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥४६॥ नागा ऊचुः ॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ॥ तद्वक्षःपाटनेनासां दत्तानन्दः नमोस्तु ते ॥ ४७ ॥ मनव ऊचुः ॥ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः ॥ भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ॥ ४८ ॥ प्रजापतय ऊचुः॥ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ॥ स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्वमूर्तेऽवतारः ॥ ४९ ॥ गन्धर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ॥ स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते॥५०॥ चारणा ऊचुः ॥ हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः ॥ यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥ ५१ ॥

प्रजा न वै नैव सृजामः स एष त्वया भिन्नं वक्षो यस्य तथाभूतो नु निश्चितं मृत एव शेते अतः हे सत्वमूर्ते तवावतारः जगति मङ्गलं मङ्गलरूपः । भुजङ्गप्रयातं छन्दः ॥ ४९ ॥ वयमिति ॥ हे विभो वयं ते त्वदीयाः नटा नर्तकाः नाटने नृत्ये गायकाश्च वीर्यं शौर्यं बलं शक्तिः ताभ्यामोजः प्रभावो यस्य तथाभूतेन येन वीर्यबलौजसेति द्वन्द्वैक्यं वा करणे तृतीया । आत्मसात्कृताः स्वाधीनीकृताः स एष दैत्यो भवता इमां दशां मरणावस्थां नीतः तदुचितमेवेत्याहुः । उत्पथस्थः त्वद्भजनविरोधिमार्गस्थः किं कुशलाय कल्पते किं क्षेमी भवति न भवत्येवेत्यर्थः ॥ ५० ॥ हरे इति ॥ हे हरे भवापवर्गं संसारनिवर्तकं तवाङ्घ्रिपङ्कजं चरणकमलं वयमाश्रिताः । तत्र हेतुमाहुः । यत् यस्मात् साधूनां हृदि त्वच्छय्यायां भयजनकत्वेन शेते तिष्ठतीति तथा स एष महाबलपराक्रमत्वेनातिप्रसिद्धोऽप्यसुरस्त्वया समापितः अन्तं नीतः प्रमाणिका छन्दः ॥५१॥

वय मिति ॥ हे पञ्चविंश चतुर्विंशतितत्त्वनियामक मनोज्ञैः कर्मभिर्येऽनुचरास्तेषु मुख्याः यद्वा । अनुचरास्त्वद्भक्ता एव मुख्या तेषां ते वयम् इह एतस्मिन् काले दितिसुतेन भारवाहकत्वं प्रापिताः हे नरहरे अचिन्त्यमहिमन् तेन दैत्येन कृतं जनानां परितापं दुःखं जानता ते त्वया स तु सर्वदुःखदः पञ्चतां मृत्युमुपनीतः प्रापितः । मालिनी छन्दः ॥ ५२ ॥ वयमिति ॥ वयं किंपुरुषाः कुत्सिताः पुरुषाः त्वं तु महापुरुषः अचिन्त्यगुणपूर्णः पुरुषोत्तम ईश्वरः सर्वनियन्ता च अयं च कुपुरुषः अतो यदा साधुभिर्धिक्कृतः शप्तस्तदैव नष्टो नष्टप्रायः अतस्तद्वधे किं माहात्म्यं वर्णनीयमिति भावः ॥ ५३ ॥ सभास्विति ॥ हे भगवन् सभासु सत्रेषु यज्ञेषु च अमलं सकलपापनिवर्तकं तव यशो गीत्वा वयं महतीं सपर्यां पूजां धनादिसम्पत्तिं लभामहे यः दैत्यः तां सपर्यां व्यनैषीत् निवारितवान् स एष भृशमत्यन्तं दुर्जनस्ते त्वया हतः एतद्दिष्ट्या भद्रमेव जातमित्यन्वयः । आमयो रोगस्तद्विनाशे यथा भद्रमेव भवति तथेत्यर्थः ॥५४॥ वयमिति ॥ हे ईश वयं किन्नरगणा इति प्रसिद्धास्तवानुगाः अनुचरा एव ते वयमेतावन्तं कालममुना

यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ॥ स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५२ ॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः ॥ अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ ५३॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ॥ यस्तां व्यनैषीद् भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽमयः ॥ ५४ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः ॥ भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ ५५ ॥ विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ॥ सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥५६॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे प्रह्लादानुचरिते हिरण्यकशिपुदैत्यवधे नृसिंहस्तवो नामाष्टमोऽध्यायः ॥ ८ ॥ नारद उवाच ॥ एवं सुरादयः सर्वे ब्रह्मरुद्रपुरःसराः ॥ नोपैतुमशकन् मन्युसंरम्भं सुदुरासदम् ॥ १ ॥

दितिजेन विष्टिमनुकारिताः द्रव्यादिदानं विनैव कार्यं कारिताः अतो हे हरे वृजिनः पापात्मा स दैत्यो भवता अवसादितो नाशितः अतः परमपि हे नरसिंह हे नाथ नोऽस्माकमनुचराणां विभवाय सुखसमृद्धये त्वं भव । मञ्जुभाषिणी छन्दः ॥ ५५ ॥ अद्येति ॥ हे शरणद आश्रयप्रद सर्वेषां लोकानां शर्म सुखावहमेतदद्भुतमवितर्क्यं हरिनररूपं नरसिंहरूपं तु तवाद्यैव नोऽस्माभिर्दृष्टमित्यन्वयः । हे ईश सोऽयं दैत्यस्ते तव विधिकरः किङ्कर एव विप्रैः सनकादिभिः शप्तः सन् दैत्यो जातस्तस्येदं निधनं नाशम् अनुग्रहाय शापविमुक्त्या स्वलोकप्राप्तये वयं विद्मः । प्रहर्षिणी छन्दः ॥५६॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो विवृतिं सप्तमस्याष्टमे व्यधात् ॥ ८ ॥ प्रह्लादो नवमे भीतो ब्रह्मणा प्रेरितो हरिम् ॥ कोपं प्रशमयन्नस्तौत् श्लोकास्तत्रेषुमार्गणाः ॥ चत्वार्युवाचेति साङ्घ्रिरष्टाशीतिरनुष्टुभाम् ॥ ९ ॥ एवमिति ॥ एवं ब्रह्मरुद्रपुरः सराः सर्वे

सुरादयः दूरतः स्तुवन्तोऽपि मन्युना संरम्भः आवेशो यस्य तं दुरासदं दुष्प्रापं हरिम् उपैतुं समीपं गन्तुं नाशकन् न समर्था बभूवुः ॥ १ ॥ साक्षादिति ॥ साक्षात्समीपवर्तिन्यपि श्रीर्लक्ष्मीर्देवैः ब्रह्मादिभिः प्रेषिता प्रभोः क्रोधप्रशान्त्यर्थं समीपं गच्छेति प्रार्थिता सती महदद्भुतं भयङ्करं नृसिंहरूपं दृष्ट्वा यन्न दृष्टं न श्रुतं पूर्वं कदापि तददृष्टश्रुतपूर्वं तस्य भावस्तत्त्वं तस्माद्धेतोः शङ्किता सती सा नोपेयाय समीपं न जगाम नित्यस्य नृसिंहस्य नित्यया लक्ष्म्या दृष्टत्वेऽपि तदानीमदृष्टाश्रुतत्वे प्रतीतिर्लीलाशक्त्यैव कारिता ॥ २ ॥ प्रल्हादमिति ॥ ततश्च ब्रह्मा अन्तिके स्वसमीपे स्थितं प्रह्लादं तच्छान्त्यर्थं प्रेषयामास । हे तात उपैहि समीपं गच्छ गत्वा च स्वपित्रे कुपितं प्रभुं प्रशमय प्रसन्नं कुर्विति ॥ ३॥ तथेति ॥ हे राजन् युधिष्ठिर तथेति ब्रह्मवाक्यमभ्युपगम्य महाभागवतोऽर्भकः प्रल्हादः शनकैरुपेत्य समीपं गत्वा विधृताञ्जलिः मूर्ध्नि बद्धाञ्जलिः सन् कायेन भुवि दण्डवन्ननाम ॥ ४ ॥ स्वेति ॥ स्वपादमूले पतितमर्भकं प्रह्लादं विलोक्य देवः श्रीनृसिंहः कृपया परितः प्लुतः व्याप्तः संस्तमुत्थाप्य तस्य शीर्ष्णि काल एवाहिः सर्पस्तस्माद्वित्रस्ता

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ॥ अदृष्टा श्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ॥ २ ॥ प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके ॥ तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥ तथेति शनकै राजन् महाभागवतोऽर्भकः ॥ उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ॥ ४ ॥ स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ॥ उत्थाप्य तच्छीर्ष्ण्यदधात् कराम्बुजं कालाहिवित्रस्तधियां कृताभयम् ॥ ॥ ५ ॥ स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ॥ यत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥ अस्तौषीद् हरिमेकाग्रमनसा सुसमाहितः ॥ प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥ प्रह्लाद उवाच ॥ ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ॥ नाराधितुं पुरुगुणैरधुनापि पप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥

भीता धीर्येषां तद्भयाच्छरणागतानां तेषां कृतमभयमभयदानं येन तादृशमित्यर्थः । कराम्बुजमदधात् निहितवान् शीर्षन्नार्षः ॥ ५ ॥ स इति ॥ स प्रह्लादस्तस्य भगवतः करस्पर्शेन धुतं निरस्तमखिलमशुभं दुरदृष्टं वासनारूपं यस्य सः अतः सपदि तत्क्षणमेव अभिव्यक्तमपरोक्षीभूतं परात्मदर्शनं ब्रह्मज्ञानं यस्य सः अत एव निर्वृतः परमानन्दपूर्णः अत एव हृष्यत्तनुः उदञ्चितरोमयुक्ततनुः क्लिन्नं प्रेमार्द्रं हृद् हृदयं यस्य सः अश्रूणि आनन्दजलानि लोचनयोर्यस्य स तादृशः संस्तस्य भगवतः पादपद्मं स्वहृदि दधौ धृतवान् ॥ ६ ॥ अस्तौषीदिति ॥ एकाग्रेण मनसा तस्मिन् भगवति न्यस्तं हृदयमीक्षणं च येन सः अतः सुसमाहितः प्रेम्णा गद्गदया स्खलिताक्षरया वाचा तं हरिमस्तौषीत् इडभाव आर्षः ॥ ७ ॥ ब्रह्मेति ॥ सत्वेषु सत्वकार्येषु धर्मज्ञानतपःस्वेवैकताना अनन्यवर्तिनी मतिर्येषां ते ब्रह्मादयः सुरगणाः अथ तथा मुनयः सनकादयः सिद्धाः ज्ञानिनोऽपि बहुकालं तमाराधयन्त इदानीं पर्यन्तमपि वचसां भगवद्गुणवर्णनप्रधानानां प्रवाहैर्व्यवधानरहितसमूहैः तथा वक्ष्यमाणैः पुरुभिर्धनाभिजनादिभिर्गुणैरपि यद्वा पुरुगुणैरिति

वचःप्रवाहविशेषणम् । वचः पक्षे गुणालङ्कारादियुक्तैः प्रवाहपक्षे स्वच्छत्वशैत्यादिगुणयुक्तैः यमाराधितुमाराधयितुं स्तुत्यादिरूपाराधनद्वारा तस्य स्वस्मिन् सन्तोषमुत्पादयितुं णिलोप आर्षः ।न पिप्रुः न पूर्णाः समर्था न जाताः स हरिः उग्रा घोरा अधर्मा ज्ञानादिस्वभावा आसुरी तामसी जातिर्यस्य तस्य मे मम किं तोष्टुमर्हति ॥ ८ ॥ न च त्वं धनादिदानैस्तुष्यसीत्याह–मन्य इति ॥ धनं वित्तमभिजनः सत्कुले जन्म रूपं सौन्दर्यं तपः स्वधर्मकृच्छ्रादिरूपं वा श्रुतं पाण्डित्यमोज इन्द्रियशक्तिः तेजः कायकान्तिः प्रभावः प्रतापः बलं शरीरशक्तिः पौरुषमुद्यमः बुद्धिः प्रज्ञायोगः यमनियमाद्यष्टाङ्गः कर्मयोगश्च एते गुणा लोके शास्त्रे च महत्वहेतुत्वेन प्रसिद्धा अपि परस्य पुंसः भगवतः आराधनाय सन्तोषोत्पादनाय न भवन्तीत्यहं मन्ये हि यस्मात् भगवान् गजयूथपाय धनादिगुणैरहितायापि भक्त्यैव केवलया तुतोष तुष्टोऽभूत् विप्रादिति ॥ द्विषट् द्वादश गुणाः सनत्सुजातोक्ताः तैर्युतात् ज्ञानं च सत्यं च दमः श्रुतं च ह्यमात्सर्यं ह्रीस्तितिक्षानसूया यज्ञश्च दानं च धृतिः शमश्च महाव्रता द्वादश ब्राह्मणस्येति । यद्वा धनाभिजनादयः पूर्वश्लोकोक्ता द्वादशगुणास्तैर्युतायादपि अरविन्दनाभस्य भगवतः पादारविन्दात् विमुखात् तादृशं विप्रमपेक्ष्य तस्मिन्नरविन्दनाभे अर्पिता मनआदयो येन तं तमदृशं श्वपचमपि वरिष्ठं मन्ये मनसोऽर्पणं तद्व्यतिरिक्तस्याचिन्तनं वचनस्यार्पणं तद्वार्त्ताकथनातिरिक्ता कथनमीहितं कर्म तदर्पणं तत्प्रीतये आचरणं न स्वार्थम् अर्थो वित्तं तस्या-

**मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ ९ ॥**

**नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः॥१०॥**

**तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् ॥ नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ ११ ॥**

र्पणं तदर्थे विनियोगः प्राणस्य जीवनस्यार्पणं नाम यावज्जीवं तत्सेवादि इति यतः स एवंभूतः श्वपचः स्वकुलमपि पुनाति अतः श्रेष्ठः गुणैः कृत्वा भूरिमानो गर्वः अन्यकृतसंमानो वा यस्य स विप्रस्त्वात्मानमपि न पुनाति कुतः कुलं तथा च यतो भक्तिहीनस्यैते गुणा गर्वाद्यर्थमेव भवन्ति न तूद्धारार्थमतः स हीन इति भावः ॥ ९ ॥ नैवेति ॥ निजलाभेनानन्दस्वरूपेणैव पूर्णः करुणः दयालुः अयं प्रभुः भगवान् अविदुषः अज्ञात् भगवदपेक्षया सर्वोऽपि जनः अज्ञ एव तस्मात् यन्मानं पूजां वृणीते स्वीकरोति तदात्मनः स्वस्यार्थाय नैव वृणीते । यद्वा । प्रभुः जनात् मानमात्मनोऽर्थे न वृणीते इत्येकमेव वाक्यम् । निजलाभपूर्णः अत आत्मनोऽर्थे मानं न वृणीते करुणत्वाद्वृणीते चेति स्वामिपादाः । तव माननेनापि मानायितुरेवोत्कर्ष इत्याह । यद्यत् यं यं मानं जनो भगवते विदधीत करोति तच्चात्मने स्वार्थमेव भवति यथा मुखे कृतैव तिलकालङ्कारादिश्रीः शोभा प्रतिमुखस्य दर्पणादौ प्रतिबिम्बितस्य प्रति फलति नतु साक्षात् प्रतिबिम्बस्यैव कर्तुं शक्यते ॥१०॥ तस्मादिति ॥ यस्माद्भगवान् केवलया भक्त्यैव तुष्यति न जातिगुणादिना तस्मादहं नीचः सर्वगुणहीनोऽपि विगतविक्लवः अधिकाराभावशङ्काशून्यः सन् सर्वात्मना सर्वप्रयत्नेन यथा मनीषं स्वबुद्ध्यनुसारेणेश्वरस्य भगवतो महि

महिमानं गृणामि अनुवर्णयामि येनानुवर्णितेन महिम्ना अजया अविद्यया गुणविसर्गं देहमनुप्रविष्टः तत्र कृताहंममेत्यध्यासः पुमान् पुरुषः पूयेत शुद्ध्येत् अविद्यानिवृत्त्या विमुच्येतेत्यर्थः ॥ ११ ॥ सर्वे इति ॥ हे ईश उद्विजन्तः त्वत्कोपात् बिभ्यतः शता आर्षः । अमी सर्वे ब्रह्मादयः सत्वधाम्नः सत्वाविष्टातुस्तव विधिकरः किङ्कराः भक्ताः त्वत्सेवका एव नतु वयमसुरा इव तव द्वेषभावेन भक्ताः किन्तु श्रद्धयैव भगवतस्तव रुचिरैर्मनोज्ञैरवतारैर्यद्विक्रीडनं तदस्य विश्वस्य क्षेमाय लब्धपरिपालनाय भूतये अलब्ध-लाभायापि आत्मसुखाय स्वलीलानुभवसुखदानाय चेति नतु भयोत्पादनाय ॥ १२ ॥ तदिति ॥ तत्तस्मात् एषां भयपरिहाराय मन्युं क्रोधं यच्छ उपसंहर । यदर्थेऽयं मन्युः सोऽसुरस्त्वयाद्य हत एव । यथा वृश्चिकसर्पादेः परपीडाकर्तुः हत्यावधेन परकृतेन साधोरपि भयनिवृत्त्या मोदो भवति तथास्यासुरस्य वधेनापि इत्यर्थः । अतः सर्वेऽपि लोकाः निर्वृतिमिताः सुखं प्राप्ताः सन्तः प्रतियन्ति क्रोधोपसंहारं प्रतीक्षन्ते तथा हे नृसिंह विभयाय इतोऽग्रे भयनिवृत्तये तवेदं रूपं जनाः स्मरन्ति स्मरिष्यन्ति तथा चैतद्रूपस्मरणेनैव

**सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजन्तः ॥ क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिराव-तारैः ॥ १२ ॥ तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य मोदेत साधुरपि वृश्चिकसर्पहत्या ॥ लोकाश्च निर्वृतिमिताः प्रतियन्ति सर्वे रूपं नृसिंह विभ-याय जनाः स्मरन्ति ॥ १३ ॥ नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ॥ अन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान्निर्ह्राद-भीतदिगिभादरिभिन्नखाग्रात् ॥ १४ ॥ त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनात् ग्रसतां प्रणीतः ॥ बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ १५ ॥ यस्मात् प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः ॥ दुःखौषधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १६ ॥**

भयनिवृत्तिध्रौव्यान्न मन्युधारणे न कृत्यमस्ति भयङ्करत्वादिति भावः॥१३॥नाहमिति ॥ हे अजित आस्यं च जिह्वा चार्कसदृशे नेत्रे च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्च एतानि अतिभयानकानि यस्मिंस्तस्मात् अन्त्रमय्यः स्रजो यस्मिंस्तत् अन्त्रस्रक् तस्मात् क्षतजाक्ताः केसरा यस्मिन् शङ्कुवदुन्नतौ स्तब्धौ कर्णौ यस्मिंस्तच्च तस्मात् निर्ह्रादेन उत्कटशब्देन भीता दिगिभा यस्मात्तस्मात् अरीन् भिन्दतीत्यरिभिन्दितानि नखाग्राणि यस्मिन् तस्माद् भयङ्करादपि रूपादहं न बिभेमि प्रार्थनं त्वन्येषां भयनिवृत्त्यर्थमेव ॥ १४ ॥ मम तु भयं महदन्यदस्तीत्याह—त्रस्त इति ॥ हे कृपणवत्सल हे उशत्तम श्रेष्ठ ग्रसतां हिंस्राणामसुराणां त्वन्निन्दकानां मध्ये शता आर्षः । प्रणीतः त्वया निक्षिप्तः स्वकर्मभिर्बद्धश्चाहं दुःसहं यदुग्रमुत्कटं संसारचक्रे यत् कदनं दुःखं तस्मादहं त्रस्तोऽस्मीति अतस्त्वं प्रीतः सन् अपवर्गं संसारदुःखनिवर्त्तकं शरणम् आश्रयभूतं चरणकमलं प्रति मां कदा नु ह्वयसे आह्वास्यसि ॥ १५ ॥ यस्मादिति ॥ हे भूमन् यस्मात्प्रियैरप्रियैश्च सह यथासङ्ख्यं कर्मवशात् वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निना सकलयो-

निषु देवादियोनिष्वपि दह्यमानोऽतीव दुःखितोऽस्मि अत्र दुःखस्यौषधं प्रतिकारात्मकं लौकिकं द्रव्योपार्जनादिरूपं वैदिकं च प्रायश्चित्तयज्ञानुष्ठानादिकं च तदपि सर्वं दुःखात्मकमेव । एवमपि अतद्धिया देहाद्यात्माधिमानेन भ्रमामि मुह्यामि च तस्मात्सर्वकारणदुःखसंसारनिवर्तकं तव दास्यरूपं योगमुपायं वद वरदानविषया ब्रूहि ॥ १६ ॥ सोऽहमिति ॥ हे नृसिंह स त्वयानुगृहीतस्त्वद्दास्ये प्रवृत्तः अत एव ते तव पदयुगलमेवालयः निवासस्थानं येषां भक्तानां त एव हंसाः सारासारविवेकिनस्तैः सह सङ्गो यस्य तादृशोऽहं गुणै रजआदिभिः विशेषेण प्रमुक्तः सन् प्रियस्य सुहृदः परदेवतायाः परमेश्वरस्य तव विरिञ्चेन गीताः तत्संप्रदायप्रवृत्ताः गीता लीलाकथा अनुगृणन् वर्णयन् दुर्गाणि उपायान्तरसहस्रैरप्यनिवर्त्तनीयानि सर्वदुःखान्यञ्जसा अनायासेनैव तितर्मि अतिशयेन तरिष्यामि न गणयिष्यामि तातर्मीति वक्तव्येऽतितर्मीत्यार्षम् ॥ १७ ॥ बालस्येति ॥ हे नृसिंह हे विभो इह बालस्य पितरौ मातापितरौ शरणं रक्षकौ न भवतः ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात् क्वचित् अजीगर्त्तादिषु ताभ्यामेव तद्वधार्थं तद्विक्रयदर्शनात् चार्त्तस्य न रोगिणः अगदमौषधं शरणं कृतेऽप्यौषधे मृत्युदर्शनात् औषधादेव क्वचिद्रोगवृद्धिदर्शनाच्च न चोदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सहि-

**सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिञ्चगीताः ॥ अञ्जस्तितर्म्यनुगृणन् गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १७ ॥ बालस्य नेह शरणं पितरौ नृसिंह नार्त्तस्य चागदमुदन्वति मज्जतो नौः ॥ तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥ १८ ॥ यस्मिन् यतो यर्हि येन च यस्य यस्माद्यस्मै यथा यदुत यस्त्वपरः परो वा ॥ भावः करोति विकरोति पृथक्स्वभावः संचोदितस्तदखिलं भवतः स्वरूपम् ॥ १९ ॥**

तस्यापि मज्जनदर्शनात् अतस्ततस्य दुःखितस्य जनस्य तत्प्रतिविधिः तस्य दुःखस्य प्रतीकारः निवर्त्तक इह लोके यस्तावदिष्टः संमतः स त्वदुपेक्षितानां तनुभृतां प्राणिनां किमञ्जसा साक्षात्तन्निवर्त्तको भवति न भवत्येवेति काका योज्यम् यद्वा । तप्तस्य तत्प्रतिविधिः इह लोके योऽञ्जसा इष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव न त्वात्यन्तिकः यस्तावदिह प्रतिविधिः इष्टः स किमञ्जसा अपि तु नैवाञ्जसा इति अतस्त्वमेव शरणं नान्यः ॥ १८ ॥ यत्तु क्वचित्केनचित्कस्यचिद्रक्षा दृश्यते तत्रापि त्वमेव रक्षक इत्याशयेन सर्वात्मकत्वमाह—यस्मिन्निति ॥ पृथक् पृथक् स त्वरजआदिः स्वभावः प्रकृतिर्यस्य सः यस्त्वपरः अर्वाचीनः अपकृष्टो वा पित्रादिः परः प्राचीनः उत्कृष्टो वा ब्रह्मादिरूपो भावः कर्त्ता यस्मिन्नधिकरणे यतो निमित्तात् यर्हि यस्मिन् काले येन च करणेन येन हेतुकर्त्ता वा सञ्चोदितः प्रेरितः यस्य सबन्धि यस्मादपादानात् यस्मै संप्रदानाय यत् ईप्सिततमं कर्म इत्येवं सप्तविभक्त्यर्थाः प्रदर्शिताः यथा येन प्रकारेणेति क्रियाविशेषणभूतामामव्ययानामर्थाश्च दर्शिताः उतेत्यप्यर्थे एवं यः कर्त्ता तत्कारकै-

र्यद्यत्करोति उत्पादयति विकरोति रूपान्तरं नयति तत्सर्वं कारकादि भगवतः स्वरूपमेव न पृथक् ॥ १९ ॥ मायेति ॥ हे अज त्वदंशस्य पुंसोऽनुमतेन ईक्षणरूपेणानुग्रहेण प्रेरितेन कालेन चोदिताः क्षोभिताः गुणाः सत्वादयो यस्याः सा माया प्रकृतिः कर्ममयम् अनन्तकर्मवासनावासितं कुर्वद्रूपं बली यः दुर्जयं छन्दोमयं वेदोक्तकर्मप्रधानम् अजया अविद्यया तद्भोगार्थं अर्पिताः षोडश एका दशेन्द्रियपञ्चमहाभूतात्मका अरा यस्मिंस्तत् संसारचक्रात्मकं यत् मनः मनःप्रधानं लिङ्गशरीरं सृजति तत्त्वदन्यः त्वत्तः पृथक् स्थितो विमुखस्त्वामभजन् कः पुमानतितरेत् ॥ २० ॥ स इति ॥ हि यस्मात्स सर्वनियन्तृत्वेन स्वतन्त्रतया प्रसिद्धः स्वधाम्ना चिच्छक्त्या नित्यं विजिता दूरतो निरस्ता आत्मनो बुद्धेर्गुणा धर्माः सुखदुःखरागलोभादयो येन सः कालो मायादिनियन्ता अत एव वशीकृता विसृज्यानां कार्याणां विसर्गाणां कारणानां च शक्तयो येन स एवं भूतस्त्वं तस्मात् हे ईश्वर सर्वनियन्तः हे विभो सर्वसमर्थ अजया अविद्यया षोडशारे संसारचक्रे विसृष्टं पातितमत एवेक्षुदण्डवन्निष्पीड्यमानं त्वां प्रपन्नं शरणागतं मामुपकर्ष समीपं

माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणानुमतेन पुंसः ॥ छन्दोमयं यदजयाऽर्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥ ॥ २० ॥ सत्वं निहत्य विजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्य विसर्गशक्तिः ॥ चक्रे विसृष्टमजयेश्वरषोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥ २१ ॥ दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यान् जनोऽयम् ॥ येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २२ ॥ तस्मादमूस्तनुभृतामहमाशिषोज्ञ आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ॥ नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २३ ॥ कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः ॥ निर्विद्यते न तु जनो यदपीति विद्वान् कामानलं मधुलवैः शमयन् दुरापैः ॥ २४ ॥

नय ॥ २१ ॥ राज्यादिभोगांस्तु नेच्छामीत्याह—दृष्टा इति ॥ हे विभो दिवि स्वर्गे यान् अयं संसारी जन इच्छति ते अखिलधिष्ण्यपानां सर्वलोकपालानां आयुः श्रियः भोग्यभोगोपकरणादिसमृद्धयः विभवस्त्रैलोक्याधिपत्यरूपमैश्वर्यं ते आयुरादयो मया दृष्टाः अनपुंसकशेष आर्षः । ये आयुरादयः अस्मत्पितुः कुपितेन कोपेन यो हासस्तत्र विजृम्भिताया विकृताया भ्रुवो विस्फूर्जितेन चेष्टामात्रेण विलुलिताः विध्वस्ताः सोऽस्मत्पितापि ते त्वया निरस्तः मारितः ॥ २२ ॥ तस्मादिति ॥ तस्मात्तुच्छत्वेन निश्चितत्वात् तनुभृतां जीवानां अमूराशिषः भोगान् आयुः श्रियं विभवमैन्द्रियमिन्द्रियभोग्यम् आविरिञ्च्याद् ब्रह्मणोऽपि भोग्यमभिव्याप्य किमपि नेच्छामि तथा कालात्मना उरुविक्रमेण ते त्वया विलुलितान् विध्वस्तानणिमादीन् अपि ज्ञः विवेकी अहं नेच्छामि अतः मां निजभृत्यानां स्वसेवकानां पार्श्वं समीपं नय प्रापय ॥ २३ ॥ कुत्रेति ॥ श्रुतिं श्रवणेन्द्रियं सुखयन्तीति श्रुतिसुखाः आपातरम्याः मृगतृष्णिर्मृगतृष्णा मरीचितोयं तद्रूपाः आर्षशब्दः प्रतीतिमात्रसुखाः आशिषः शब्दादयो विषयाः कुत्र तथा अशेषाणां रुजां

रोगाणां विरोहः उद्भवस्थानं चेदं कलेवरं क्व यदपि यद्यपि इति एवं विषयाणां नश्वरत्वादिकं पूर्वोक्तं विद्वान् जानाति तथापि काम एव अनलस्तं दुरापैर्दुर्लभैरपि मधुलवैः घृतबिन्दुतुल्यैः वैषयिकसुखलेशैः शमयन् ननु नैव निर्विद्यते ततश्च घृतबिन्दुभिरग्निरिव कामः प्रत्युत उद्दीप्यत एव ॥ २४ ॥ क्वाहमिति ॥ रजसः प्रभवो जन्म यस्मिंस्तस्मिन् यद्वा । रजसैव प्रभवो यस्य स इति अहमित्यस्य विशेषणं तथा तमोऽधिकं यस्मिन् तस्मिन् सुरेतराणामसुराणां कुले जातः क्वाहं हे ईश क्व च तवानुकम्पा अतः अयं प्रसादः न ब्रह्मणो ननु भवस्य न वै रमायाः यद्यस्मात् ययानुकम्पयेति वा पद्मवत्सकलसंतापहरः करः मे मम शिरसि त्वयार्पितः न तेषाम् ॥ २५ ॥ नेति ॥ एते ब्रह्मादयः परे उत्तमाः अयमसुरोऽवरो नीच इत्येषा परावरविषया मतिर्जन्तोः प्राकृतस्य जनस्य यथास्ति तथा बुद्धिर्ननु निश्चितं जगतः आत्मनः सुहृदो हितकारिणश्च भवतो न स्यात् नास्त्येव तथापि सुरतरोरिव संसेवया तव प्रसादो भवति तत्रापि सेवानुरूपमेव उदयः फलतारतम्यं भवति ननु तत्र परावरत्वं प्रसादकारणम् ॥ २६ ॥ एवमिति ॥

क्वाहं रजःप्रभव ईश तमोधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा ॥ न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ २५ ॥ नैषा परावरमतिर्भवतो ननु स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथाऽपि ॥ संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वम् ॥ २६ ॥ एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रतपन् प्रसङ्गात् ॥ कृत्वात्मसात् सुरर्षिणा भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २७ ॥ मत्प्राणरक्षणमनन्त पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ॥ खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २८ ॥

हे भगवन् प्रकृष्टः भवः संसार एवाहिकूपः कालाजगरयुक्तः कूपः तस्मिन् निपतितं यतः कामाभिकामं कामा विषयांस्तानभितः कामयमानं जनमनुसृत्य तत्प्रसङ्गात्तत्र प्रपतन् योऽहं सुरर्षिणा नारदेन आत्मसात्कृत्वा स्वकीयत्वेनाङ्गीकृत्य एवं यथा भवत्प्रसादो जातस्तथा पूर्वं मातृगर्भस्थ एवानुगृहीतोऽस्मि साधनजातमुपदिष्टोऽस्मि सोऽहं तत्फलस्यानुभूतत्वात् तव भृत्यस्य सेवां कथं नु विसृजे विसृजामि तद्भावः । अयमेव च परमोऽनुग्रहः न पुनरतितुच्छं प्राणरक्षादि ॥ २७ ॥ मत्प्राणेति ॥ हे अनन्त यदेतन्मम प्राणरक्षणं मत्पितुर्वधश्चैतदुभयं त्वया कृतं तत्स्वभृत्यसनकाद्यृषिवाक्यमृतं विधातुं सत्यं कर्तुमित्यहं मन्ये । यद्यस्मात् असद्विधित्सुः असत् अयुक्तं त्वद्भक्तस्य स्वपुत्रस्य मम हिंसनं कर्तुमिच्छुः मत्पिता खड्गं प्रगृह्य अवोचत् मदपरो मद्व्यतिरिक्त ईश्वरोऽस्ति चेत्तर्हि त्वामिदानीमवतु तव कं शिरो हरामीति यद्यदा अवोचत्तदा मत्प्राणरक्षणमिति वान्वयः । एतच्च सत्यं विधातुं निजभृत्यभाषितमित्यत्रैव बहुधा व्याख्यातमनुसन्धेयम् ॥ २८ ॥

एक इति ॥ एतज्जगत् त्वमेवैकः यत् यतः अमुष्य विश्वस्यादावन्ते च सृष्टेः पूर्वं प्रलयानन्तरं च पृथगवस्यसि विरामं करोषि कारणत्वेनावधित्वेन च वर्तस इत्यर्थः । अतो मध्यतः मध्येपि त्वमेव निजमायया प्रकृत्या गुणव्यतिकरं गुणपरिणामात्मकमिदं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वमेव तैर्देवतिर्यगादिरूपेण परिणतैर्गुणैर्नानेव उत्पादक इव रक्षक इव हन्तेव च अवसितः प्रतीतः वस्तुतः तमः एव हन्तृ सत्वमेव पालकं रज एव स्रष्टृ तेष्वौदासीन्येन प्रवेशादेव त्वं हन्तेत्यादिव्यपदेशः ॥ २९ ॥ त्वं वा इति ॥ हे ईश सदसत् कार्यकारणात्मकमिदं जगत् त्वमेव नतु त्वत्तः पृथक् भवांस्तु ततोऽन्यः आद्यन्तयोः पृथगवस्थानात् इति स्वरूपतो धर्मतश्चाप्रच्युतः प्रपञ्चातीत एवेत्यर्थः । अतः अयमात्मीयः अयं पर इतीयं या भेदबुद्धिः सा अपार्था मायारूपैव सर्वस्यैव जगतो भवद्रूपत्वात् यद्यस्मात् यस्य जन्म ईक्षणं प्रकाशश्च यस्मिन् निधनं च स्थितिश्च तद्वै तदेव अष्टिर्वीजं कारणं तरुः कार्यं तयोर्यथावसु कालमात्रत्वं तथेति अयमर्थः । कालशब्देन नीलत्वसाधारणगुणयोगात्पृथ्वी वसुशब्देन वस्तुमात्रं भूतसूक्ष्मं तत्र तरोर्यथा पृथ्वीमयबीजमात्रत्वं बीजस्य च यथा भूतसूक्ष्ममात्रत्वं तथा सर्वमपि कार्यकारणात्मकं जगत् परमकारणभवदात्मकमेवेति ॥ ३० ॥ आद्यन्तमध्यावस्थानेनोक्तं जगत्कारणत्वं

**एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च ॥ सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ २९ ॥ त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था॥ यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टितर्वोः ॥ ३० ॥ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेत्मना निजसुखानुभवो निरीहः ॥ योगेन मीलितदृगात्मनि पीतनिद्रस्तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥ ३१ ॥ तस्यैव ते वपुरिदं निजकालशक्त्या संचोदितप्रकृतिधर्मण आत्मगूढम् ॥ अम्भस्यनन्तशयनाद्विरमत्समाधेर्नाभेरभूत् स्वकणिकावटवन्महाब्जम् ॥ ३२ ॥**

प्रपञ्चयति पञ्चभिः—न्यस्येति ॥ निजसुखस्य स्वरूपानन्दस्यानुभवः साक्षात्कारो यस्य स निरीहः क्रियाशून्यः योगेन स्वरूपानुसन्धानलक्षणेन मीलिते दृशौ येन सः निद्रित इव तिष्ठन् वस्तुतस्तु आत्मना स्वरूपप्रकाशेन निपीता निरस्ता निद्रा येन स तथा अतस्तुर्ये जाग्रदाद्यवस्थात्रयातीते स्वरूपे स्थितः नतु सुप्तः त्वम् आत्मना स्वेनैवात्मनि स्वस्मिन्ने-वेदं जगन्न्यस्य निक्षिप्य विलयाम्बुमध्ये प्रलयोदकमध्ये शेषे शयनमिव करोषि नतु स्वपिष्येव अतः सुप्तजीववत् आत्मना तमो न युङ्क्ष्व न योजयसि पश्यसि नच जाग्रत्स्वप्नयोरिव गुणान् विषयान् युङ्क्षे । शेषेत्मना इत्यत्र मन्त्रेष्वाङ्यादेरित्यात्मन आकारलोपः ॥ ३१ ॥ तस्येति ॥ यस्त्वमम्भसि शेषे तस्यैव ते तव इदं विश्वं वपुः स्वरूपं नान्यस्य अतो मध्यतश्चापि त्वमेवेत्यर्थः । कुत एवं यतः प्रलये आत्मनि त्वय्येव गूढं लीनं सत् पुनः निजकालशक्त्या सञ्चोदिताः कार्यार्थं सम्प्रेरिताः प्रकृतेर्धर्माः सत्त्वादयो गुणा येन तस्य अत एवानन्तशयनात् शेषपर्यङ्कात् विरमन् समाधिर्निद्रा नाख्यं यस्य तस्य तव नाभेः सकाशादम्भसि एकार्णवोदके महाब्जं लोकात्मकं पद्मम भूत्

यथा स्वकर्णिकातः सूक्ष्माद्वटबीजात् महावटो भवति तद्वदिति । यद्वा । एवमन्वयः तस्यैव सृष्ट्यारम्भे निजकालशक्त्या सञ्चोदितप्रकृतिधर्मेणस्तव आत्मनि स्वस्मिन्गूढमेव इदं ब्रह्माण्डरूपं वपुः प्रकृतेः सकाशान्महाब्जम् अभूत् स्वकर्णिकातः महावट इवेति ॥ ३२ ॥ तदिति ॥ तस्मिन्नब्जे संभवो यस्य सः अत एव कविः सूक्ष्मदर्श्यपि ब्रह्मा अतः पद्मादन्यदपश्यमानः अपश्यन् शानजार्थः । त्वां बीजमुपादानकारणभूतमात्मनि स्वस्मिन् ततं व्याप्तं सन्तमपि स्वबहिरेव वर्त्तमानं विचिन्त्य विचार्य अब्दशतमप्सु निमज्जमानः अन्विष्यन्नपि शानजार्थः । नाविन्दत् युक्तं चैतत् उ ह अहो अङ्कुरे जाते सति बीजं तदनुगतं कारणं पृथक् पुमान् कथमुपलभेत पश्येत् ॥ ३३ ॥ स इति ॥ स तु आत्मयोनिर्ब्रह्मातिविस्मितः अन्वेषणान्निवृत्य अब्जमेवास्थितः सन् कालेन तीव्रेण तपसा ध्यानेन परिशुद्धभावश्च सन् हे ईश भूतेन्द्रियाशयमये आत्मनि स्वदेह एव उपादानसद्रूपेण विततमति सूक्ष्मं त्वां ददर्श भुवि तत्कारणभूतं सूक्ष्मं गन्धं विततं यथा विवेकी पश्यति तथेत्यर्थः ॥ ३४ ॥ एवमिति ॥ यथा सूक्ष्मं रूपं दृष्टवान् एवं

तत्संभवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिन्त्य ॥ नाविन्ददब्दशतमप्सु निमज्जमानो जातेङ्कुरे कथमु होपलभेत बीजम् ॥ ३३ ॥ स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ॥ त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ ३४ ॥ एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयं सदुपलक्षितसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३५ ॥ तस्मै भवान्हयशिरस्तनुवं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ॥ हत्वाऽनयत् श्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३६ ॥ इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि हंसि जगत्प्रतीपान् ॥ धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ सत्वम् ॥ ३७ ॥ नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रम् ॥ कामातुरं हर्षशोकभयैषणार्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३८ ॥

सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं युक्तं मायामयं सता पातालादिप्रपञ्चेनोपलक्षितः सन्निवेशः पादादिरचना यस्य तं महापुरुषं विराट्पुरुषं च दृष्ट्वा विरिञ्चो ब्रह्मा मुदं हर्षमाप ॥ ३५ ॥ तस्मा इति ॥ सत्त्वं सत्वगुणरूपां तव प्रियतमां तनुमामनन्ति तां हयशिरस्तनुवं श्रीहयग्रीवमूर्तिं बिभ्रत् ब्रह्मार्थः । बिभ्रत्सन् वेदद्रुहौ अतिबलौ रजस्तमश्च रजस्तमोरूपौ मधुकैटभाख्यौ दैत्यौ हत्वा भवांस्तस्मै ब्रह्मणे ताभ्यां हृतान् श्रुतिगणान् अनयत् समर्पितवान् ॥ ३६ ॥ इत्थमिति ॥ हे महापुरुष इत्थं नृतिर्यगृषिदेवझषावतारैः कृष्णादिवराहादिपरशुरामादिवामनादिमत्स्यकूर्मादिभिः लोकान्विभावयसि जगतः प्रतीपान् प्रतिकूलान् असुरादीन् हंसि घातयसि युगानुवृत्तं धर्मं च पासि यत् यस्मात्त्वं कलौ छन्नोऽभवः आविर्भूय तन्न करोषि अथ तस्मात्त्रिष्वेव युगेष्वाविर्भावात्स एवं भूतस्त्वं त्रियुग इति प्रसिद्धः ॥ ३७ ॥ नेति ॥ हे विकुण्ठनाथ दुरितैर्दुष्टम् असाधु

वहिर्मुखं तीव्रम् अविनीतं कामादिष्वातुरमासक्तं हर्षशोकादिभिरार्त्तं व्याप्तं दुःखितमपि एतन्मनस्तव कथासु न संप्रीयते प्रीतियुक्तं नैव भवति अतस्तस्मिन् दुष्टे मनसि सति दीनस्तदधीनोऽहं तव तत्वं कथं विमृशामि विचारयामि ॥ ३८ ॥ जिह्वेति ॥ हे अच्युत अवितृप्ता जिह्वा मा माम् एकतः मधुरादिरसं प्रति विकर्षत्याकर्षति शिश्नोऽन्यतः कामिनीं प्रति आकर्षति इत्यस्य सर्वत्रान्वयः । त्वगन्यतः स्रक्चन्दनादिप्रति उदरं क्षुधा तप्तमाहारं प्रति श्रवणं श्रोत्रमिन्द्रियं कुतश्चित् गीतादिशब्दं प्रति घ्राणोऽन्यतः सुगन्धं प्रति चपला दृक् चक्षुः रूपं प्रति कर्मशक्तिः कर्मणी धनोपार्जनादौ शक्तिर्यस्य हस्तादिः सः उपलक्षणतया कर्मेन्द्रियाणि स्वस्वव्यापारं प्रति यथा गेहपतिं स्वामिनं बह्व्यः सपत्न्यः स्वगृहं प्रत्याकर्षन्त्यो लुनन्ति त्रोटयन्ति तद्वदित्यर्थः ॥ ३९ ॥ एवमिति ॥ हे पारचर संसारवैतरण्याः पारे चरतीति यमद्वारस्था पापिनां यातनार्था नदी वैतरणी तद्दुःखबाहुल्याद्भवः संसार एव वैतरणी तस्यां स्वकर्मभिर्दुरदृष्टैः पतितमतः कर्मवशादन्योऽन्यतो यानि जन्मादीनि तेभ्यो भीतभीतमतिभीतं स्वेषां परेषां च विग्रहे देहे यथायथं वैरं मैत्रं च यस्य तमेवंभूतं मूढं जनं पश्यन् हन्तेति अहो कष्टमित्येवमनुकम्प्याद्य पीपृहि वैतरणीमुत्तार्य पालय अभ्यासदैर्घ्यमार्षम् ॥ ४० ॥ को न्विति ॥

जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥३९॥ एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम् ॥ पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर पीपृहि मूढमद्य ॥४०॥कोन्वत्र तेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भवसंभवलोपहेतोः॥मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवतां नः॥४१॥ नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहाऽमृतमग्नचित्तः॥शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान्॥४२॥प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः ॥ नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदन्यशरणं भ्रमतोऽनुपश्ये ॥ ४३ ॥

हे अखिलगुरो हे भगवन् हे आर्त्तबन्धो अत्र सर्वजनोत्तारणे अस्य विश्वस्य भवसंभवलोपानामुत्पत्तिस्थितिसंहाराणां हेतोः कर्त्तुः ते तव को नु प्रयासः न कोऽपि इति मूढेषु महतामनुग्रहः उचित इति शेषः । ते तव ये प्रियजना भक्तास्तान् अनुसेवतामनुसेवमानानां शता आर्षः । नोऽस्माकं तेन संसारोद्धारणेन किं न किमपीत्यर्थः । त्वद्भक्तसेवाप्रभावाद्वयं तु संसारं तरिष्याम एवातस्तदन्यतारण एव तव यशः ॥ ४१ ॥ नेति ॥ हे पर त्वद्वीर्यस्य प्रभावस्य गायनमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं दुरत्यया दुस्तरा या भववैतरणी तस्याः सकाशादहं नैवोद्विजे नैव बिभेमि परमदुस्तरेति वा पाठः । किं तु ततस्तद्वीर्यगायनमहामृताद्विमुखं चेतो येषां तान् प्रत्युतेन्द्रियार्थं यन्मायासुखं विषयसुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः विमूढानहं शोचामि ॥ ४२ ॥ तान्मुनय उपदेक्ष्यन्तीति चेत्तत्राह—प्रायेणेति ॥ हे देव मुनयस्तु प्रायेण स्वविमुक्तिकामाः सन्तो विजने एकान्तदेशे स्थिता मौनं चरन्ति ध्यानविचारादिपरास्तूष्णीमेव तिष्ठन्ति अतो न परार्थनिष्ठाः न परोपकारकाः एव प्रायग्रहणान्नारदादीनां परार्थनि-

ष्ठत्वं सूचितम् अतोऽहमेतान् कृपणान् दीनान् विहाय एको न विमुमुक्षे विमुक्तिं नैवेच्छामि त्वत्तोऽन्यमस्य मूढजनस्य नानायोनिषु भ्रमतः शरणं संसारदुःखादुद्धारे अवलम्बं नानुपश्ये नैव पश्यामि तद्भावः । अतस्तन्मुक्तये प्रार्थये ॥ ४३ ॥ यदिति ॥ मैथुनादिना स्त्रीसंबन्धादिना गृहमेधिनां गृहस्थानां यत्सुखं तत्तुच्छं यथा करयोः कण्डूयनेन दुःखमनु दुःखमेव भवति सुखं तु घर्षणकालमात्रे मोहकल्पितमेव तथेत्यर्थः । एवं बहुदुःखभाजोऽपि कृपणाः विषयिण इह गृहमेधिसुखे न तृप्यन्ति अलमिति न मन्यन्ते त्वत्प्रसादादेव कश्चिद्धीर एव कण्डूतिवत् मनसिजं कामं विषहेत न तु सर्वे ॥ ४४ ॥ मौनेति ॥ रहः विविक्तवासः शेषाः स्पष्टाः हे पुरुष मौनादयो दश ये आपवर्ग्याः अपवर्गो मोक्षस्तत्साधनत्वेन प्रसिद्धास्ते त्वत्र संसारे अजितेन्द्रियाणां तत्तदिन्द्रियविषयभोगार्थं मौनादीन् विक्रीणानानां प्रायेण परं केवलं वार्ताः जीवनोपाया एव भवन्ति भगवदनुगृहीतानां मोक्षहेतुत्वात्प्रायग्रहणम् उत अपि दाम्भिकानां तु कदाचिद्वार्ता भवन्ति कदाचिद्वार्ता अपि न भवन्ति दम्भस्य अनियतफलत्वात् ॥ ४५ ॥ रूपे इति ॥

**यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम्॥तृप्यन्ति नेह कृपणा बहुदुःखभाजः कुण्डूतिवन्मनसिजं विषहेत धीरः॥ ॥ ४४ ॥ मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ॥ प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् ॥ ४५ ॥ रूपे इमे सदसती तव वेदसृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य ॥ युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४६ ॥ त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ॥ सर्वं त्वमेव सगुणो विगुणश्च भूमन् नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४७ ॥**

बीजाङ्कुराविव प्रवाहापन्ने वेदेन सृष्टे प्रकाशिते इमे सदसती कार्यकारणात्मके समष्टिव्यष्ट्यात्मके वा अरूपकस्य रूपादिरहितस्य तव रूपे उपलक्षणभूते एव कार्यकारणात्मकं विश्वं त्वत्तोऽन्यं न भवति एवंभूतं त्वां युक्ता वशीकृतचित्ताः योगेन भक्तियोगेन उभयत्र कार्ये कारणे च समष्टौ व्यष्टौ चेति वा समक्षं प्रत्यक्षमेव त्वत्कृपया विचक्षते पश्यन्ति त्वद्विमुखानां त्वेवं ज्ञानमन्यत उपायान्तरेण देवतान्तरेण च तज्ज्ञानं न स्यान्नैव भवति । यद्वा । एतदुभयमन्यतः प्रधानपरमाण्वादेर्न स्यात् अतस्त्वमेव कारणत्वात्सर्वानुस्यूतः । यथा दारुषु स्थितं वह्निं मथनेनैव प्राप्नुवन्ति तथा स्थावरजङ्गमेषु स्थितमपि भगवन्तं केवलया भक्त्यैव प्राप्नुवन्ति नान्यथेत्यर्थः ॥ ४६ ॥ त्वमिति ॥ हे भूमन् वाय्वादि सर्वं त्वमेवेत्यन्वयः । मात्राशब्दादिविषयवर्गः हृदयं मनः चित् चित्तम् अनुग्रहः अनुग्राहको देवतावर्गः सगुणः गुणकार्यः स्थूलः विगुणः गुणकार्याद्व्यतिरिक्तः सूक्ष्मः जीवान्तर्याम्यादिपदार्थः किं बहुना मनश्च वचश्च मनोवचस्तेन निरुक्तं प्रकाशितं किमपि वस्तु त्वत्तोऽन्यद्भिन्नं नास्ति सर्वं त्वमेव ॥ ४७ ॥

नेति ॥ उरु बहुधा गीयत इति हे उरुगाय आद्यन्तवन्तः आगमापायिनः देवैर्मर्त्यैश्च सहिताः ये एते गुणाः सत्त्वादयः गुणिनस्तदभिमानिनो देवाः महदादयो महाभूततन्मात्रेन्द्रियान्ताः मनःप्रभृतयः चित्तबुद्ध्यहङ्काराश्च त्वां नैव हि विदन्ति तस्मात् सुधियो विवेकिनः एवं विमृश्य भवदनुग्रहेणैव तत्त्वं ज्ञायते न बहुशास्त्राभ्यासश्रमेणेति निश्चित्य शब्दाच्छास्त्राभ्यासाद्विरमन्ति त्वामेव समाधिनोपासत इत्यर्थः ॥ ४८ ॥ तदिति ॥ हे अर्हत्तम पूज्यतम नमो नमस्कारश्च स्तुतिश्च कर्म पूजा सर्वकर्मसमर्पणं च ताः कर्मपरिचर्या च चरणयोः स्मृतिश्च कथायां श्रवणं चेत्येवं षडङ्गया ते तव सम्यक् सेवया विना परमहंसानां गतौ प्राप्ये त्वयि जनः किं भक्तिं प्रेमलक्षणां लभेत नैव लभेतेति तस्मात्त्वमेव सर्वजनमुद्धर ॥ ४९ ॥ एतावदिति ॥ निर्गुणोऽपि भक्तेन प्रह्लादेन भक्त्या एतावन्तो वर्णिता गुणाः करुणादयो यस्य सः तस्मिन् प्रीतः अत एव यतमन्युः उपसंहृतकोपः संस्तं प्रणतं प्रह्लादमभाषत ॥ ५० ॥ प्रह्लाद इति ॥ हे प्रल्हाद हे भद्र हे असुरोत्तम ते तुभ्यमहं प्रीतोऽस्मि प्रसन्नोऽस्मि अतस्तव भद्रमेव भविष्यति । नृणां

नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः ॥ आद्यन्तवन्त उरुगाय विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४८ ॥ तत्तेर्हत्तम नमः स्तुतिकर्म पूजाकर्म स्मृतिश्चरणयोः श्रवणं कथायाम् ॥ संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत ॥ ४९ ॥ नारद उवाच ॥ एतावद् वर्णितगुणो भक्त्या भक्तेन निर्गुणः ॥ प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५० ॥ श्रीभगवानुवाच ॥ प्रह्लाद भद्र भद्रं ते प्रीतोहं तेऽसुरोत्तम ॥ वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५१ ॥ मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे ॥ दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५२ ॥ प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ॥ श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५३ ॥ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ॥ एकान्तित्वाद् भगवति नैच्छत् तानसुरोत्तमः ॥ ५४ ॥ इति श्रीभागवते सप्तमस्कन्धे प्रह्लादचरिते भगवत्स्तवो नाम नवमोऽध्यायः ॥ ९ ॥

भक्तानामहं कामपूरोऽस्मि अभीष्टपूरकः पुरुषार्थप्रवाहो वास्मि अतस्त्वं स्वाभिमतं वरं वृणीष्व ॥ ५१ ॥ मामिति ॥ हे आयुष्मन् मामप्रीणतः अप्रीणयतो जनस्य मे मम दर्शनं दुर्लभमेवातः सर्वजनोद्धारे आग्रहस्त्वया त्याज्यः मर्यादालोपापत्तेः संसारोच्छेदप्रसङ्गाच्चेति भावः । मां दृष्ट्वा तु जन्तुः पुनरात्मानं तप्तुमपूर्णकामत्वेन शोचितुं नार्हति ॥ ५२ ॥ प्रीणन्तीति ॥ अथ हि तस्मादेव सर्वासामाशिषां सर्वमनोरथानां पतिं दातारं मां धीराः श्रेयस्कामाः महाभागाः साधवः सर्वभावेन परमया भक्त्या प्रीणन्ति तोषयन्ति मां प्रति तुष्यन्ति वा ॥ ५३ ॥ एवमिति ॥ लोकाः प्राणिनः प्रलोभ्यन्ते यैस्तैर्वरैर्भगवतैवं प्रलोभ्यमानोऽपि असुरोत्तमः प्रह्लादो भगवति एकान्तित्वात् अनन्यप्रयोजनभगवद्भक्तियुक्तत्वात्तान् वरान् नैच्छत् ॥ ५४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो नवमे सप्तमस्य व्यधादिमाम् ॥ ९ ॥

दशमे प्रह्लादमनुगृह्य चान्तर्दधौ हरिः ॥ सोऽनुग्रहीच्छिवमपि श्लोकास्तत्रैकसप्ततिः ॥ उवाचेत्येकोदशार्द्धचतुःशैला अनुष्टुभः ॥ १० ॥ भक्तीति ॥ तत्सर्वं धर्मादिवरजातं भक्तियोगस्य अन्तरायतया विघ्नतया मन्यमानः अर्भकः बालकोऽपि प्रल्हादः स्मयमानः अहो सर्वज्ञोऽपि प्रलोभयतीत्याश्चर्यं कुर्वन् तं हृषीकेशमुवाच ॥१॥ मा मामिति ॥ उत्पत्त्या स्वभावेनैव कामेषु विषयेषु आसक्तं मां तैः कामरूपैर्वरैर्मा प्रलोभय लुब्धं मा कार्षीः । यतोऽहं न विषयकामी किन्तु तेषां कामानां सङ्गाद्भीतः ततो विरक्तः मुमुक्षुः संस्त्वामुपाश्रितः शरणमागतोऽस्मि ॥ २ ॥ भृत्येति ॥ हे प्रभो प्रभुरित्यपि पाठः । भवान् हृदयस्य ग्रन्थिवद्दुर्विमोच्येषु अत एव जन्ममरणादिसंसारस्य बीजेषु कामेषु भक्तं मां यदचोदयत् प्रेरितवांस्तद्भृत्यलक्षणजिज्ञासुः अयमेवोत्तममध्यमभक्तलक्षणं कथयत्वित्यभिप्रायवान् सन्नेवेति ॥ ३ ॥ नेति ॥ अन्यथा एवं न चेत् तदा ते तवाखिलगुरोः सर्वहितोपदेष्टुः करुणात्मनः तत्रानर्थसाधने स्वभक्तप्रवर्तनं न घटेत ते त्वत्तो यः पुमान् आशिषो विषयान् आशास्ते त्वत्सेवां कृत्वा कामयते स तव भृत्यो न भवति

नारद उवाच ॥ भक्तियोगस्य तत् सर्वमन्तरायतयाऽर्भकः ॥ मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥१॥ प्रह्लाद उवाच ॥ मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः ॥ तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः॥२॥ भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ॥ भवान् संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥ नान्यथा तेऽखिलगुरो घटेत करुणात्मनः ॥ यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥ आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ॥ न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥ ५ ॥ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥ यदि रासीश मे कामान् वरांस्त्वं वरदर्षभ ॥ कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥७॥

अनन्यप्रयोजनत्वे सति सेवकत्वस्य भृत्यलक्षणस्याभावात् किं तु स्वप्रयोजनानुरोधेनान्यानुवृत्तिस्वरूपस्य वाणिग्लक्षणसाध्यसत्वात्स वणिगेवेत्यर्थः । तुभ्यं किंचित्पत्रपुष्पादि दत्त्वा इन्द्रादिपदं जिघृक्षतीति भावः ॥ ४ ॥ आशासान इति ॥ यः स्वामिनि आत्मनः आशिषः आशासानः कामयमानो भवति स शुद्धो भृत्यो न भवति एवं यो भृत्यतः स्वाम्यं स्वामिनः स्वस्य कार्यमिच्छंस्तस्मै आशिष राति ददाति सोऽपि शुद्धः स्वामी नैव भवति किं तु सोऽपि वणिगेव तल्लक्षणसत्त्वादिति भावः । अतो लोके प्रसिद्धः स्वस्वामिभावो विगीत एवेति भावः ॥ ५ ॥ अहमिति ॥ अहं त्वकामः अनन्यप्रयोजन एव त्वद्भक्तः त्वं च अनपाश्रयः सेवकात्प्रयोजनं नाश्रयते इति तथाविध एव स्वामी तथा च यथा लौकिकयो राजसेवकयोरन्यथा प्रयोजनमुद्दिश्यैवार्थः स्वामिभृत्यभावो भवति तथेहावयोः स्वामिभृत्यभावे द्वयोरपि प्रयोजनोद्देशो नास्तीत्यर्थः ॥ ६ ॥ यदीति ॥ हे ईश हे वरदानामृषभश्रेष्ठ यदि त्वं मे मह्यं कामान् इष्टान् वरान् रासि ददासि तर्हि भवतः सकाशादहं मम हृदि कामानां कामाङ्कुराणां कामवासनानामसंरोहम-

नुत्पत्तिरूपं वरं वृणे ॥ ७ ॥ इन्द्रियाणीति ॥ यस्य कामाङ्कुरस्य जन्मना हृदि संरोहमात्रेणैवेन्द्रियादीनि नश्यन्तीत्यन्वयः ॥८॥ विमुञ्चतीति ॥ मानवो मनुष्यो यदा मनसि स्थितान् कामान् विषयान् विमुञ्चति तर्ह्येव हे पुण्डरीकाक्ष स भगवत्त्वाय त्वत्कृपया त्वत्समानज्ञानैश्वर्यादिलाभाय कल्पते समर्थो भवति ॥ ९ ॥ ॐ नम इति ॥ स्पष्टम् ॥ १० ॥ नेति ॥ ये भवद्विधास्त्वत्सदृशा मयि एकान्तिनः अनन्यप्रयोजना भक्तास्ते यद्यपि इहास्मिन्लोके अमुत्र परलोके च या आशिषः विषयास्तान् जातु कदाचिदपि मे मत्तोऽपि नाशासते नैव वाञ्छति तथाप्येतन्मन्वन्तरपर्यन्तमत्र भूमावेव स्थित्वा दैत्येश्वराणामधिपो भूत्वा भोगान् भुंक्ष्व ॥ ११ ॥ कथा इति ॥ प्रियाः मदीयाः कथाः जुषमाणः शृण्वन् सर्वेषु भूतेषु सन्तमेकम् ईशम् अधियज्ञं यज्ञाधिष्ठातारं माम् आत्मनि स्वचित्ते आवेश्य योगेन मय्यर्पणेन कर्म हिन्वन् त्यजन् यजस्व यज्ञैराराधयस्व तेन कर्मणा तव बन्धो न स्यात् नापि कर्माकरणदोषः इदं च लोकसंग्रहार्थे कर्मणि प्रवर्त्तितस्यानुद्वेगमात्राय ॥ १२ ॥ भोगेनेति ॥ भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा

**इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ॥ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥ ८ ॥ विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ॥ तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते॥९॥ॐ नमो भगवते तुभ्यं पुरुषाय महात्मने ॥ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥ नृसिंह उवाच ॥ नैकान्तिनो ये मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः ॥ अथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥ कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम् ॥ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ॥ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥ १३ ॥ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ॥ त्वां च मां च स्मरन्काले कर्मबन्धात्प्रमुच्यते ॥ १४ ॥**

कुशलेन पुण्याचरणेन पापं हित्वा कलेवरं च कालजवेन हित्वा त्यक्त्वा सुरलोकगीतां विशुद्धां कीर्तिं च लोके विताय विस्तार्य सर्वथा मुक्तबन्धः सन् मामेष्यसि प्राप्स्यसि । अत्र भगवत्कृपया प्राप्तज्ञानस्य तस्य कुशलेन पापमिति विशेषमात्रम् । अन्यथा तस्य राज्ये प्रवृत्तेः नतु तस्य प्राचीनं पापमस्ति ज्ञानेन तन्नाशात् ।" तत्सुकृतदुष्कृते विधुनुते " इति श्रुतेः । न चेदं प्रारब्धपापाभिप्रायं तस्य भोगेनैव क्षयात् । यद्वा । कुशलेन " दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।" इत्याद्युक्तबुद्धिकौशलयुक्तेन भोगेन प्रारब्धं पुण्यं पापं च हित्वेति व्याख्येयम् अन्ये तु प्राग्जन्मनि भोगेन पुण्यं कुशलेन पापं प्राक्कलेवरं च हित्वा सम्प्रति मामेषि प्राप्तोऽसि । अत्र जन्मनि तु मुक्तबन्ध एवासीति व्याचख्युः ॥ १३ ॥ य इति ॥ यो नरस्त्वां च मां च इदं मम चरित्रं च स्मरन् मह्यं ममैतत्त्वया गीतं स्तोत्रं कीर्त्तयेत्सोऽपि प्रारब्धावसानकाले पापपुण्यात्मकात्कर्मबन्धाद्विमुच्यते कुतस्तव बन्धशङ्केति ॥ १४ ॥

वरमिति त्रिकम् ॥ हे महेश्वर वरदा ब्रह्मादयस्तेषामपीशा ते त्वत्त एतद्वरं वरये वृणे । हे कृपणवत्सल यद्यपि तदा मरणसमये ते तवापाङ्गेन कटाक्षेण सम्यक् कृपया दिष्टः अतः पूत एव तथापि श्रीमुखात्प्रसादवाचं श्रोतुं कार्पण्यात्प्रार्थय इति ऐश्वरमीश्वरस्य तवेदं तेजः अविद्वान् अजानन् विद्धः अमर्षेण क्रोधेन आशयोऽन्तःकरणं यस्य सः भ्रातृहा इति मृषा दृष्टिः त्वद्भक्ते मयि चाघवान् कृतद्रोहः मे पिता सर्वलोकगुरुं प्रभुं त्वां यत् अनिन्दत् तस्मात् दुरन्तात् दुस्तरादघात् पापात् पूयेत विशुद्धचेत् ॥ १५ ॥ १६ ॥ १७ ॥ त्रिः सप्तभिरिति ॥ हे अनघ हे साधो त्रिः सप्तभिः स्वपितृभिः सह ते पिता पूतः यत् यस्मात् कुलपावनो भवान् अस्य हिरण्यकशिपोर्गृहे जातः यद्यपि कश्यपो मरीचिर्ब्रह्मा चेति तत्पितृत्रय एव पितरस्तथापि प्राक्कल्पगतपित्राभिप्रायेण त्रिःसप्तभिः सहेत्युक्तमिति ज्ञेयम् ॥ १८ ॥ यत्रेति ॥ यत्र यत्र देशे प्रशान्ताः समदर्शिनः साधवः सम्यगुत्तमाचाराः मद्भक्तास्तिष्ठन्ति ते कीकटाः कीकटो देशस्तत्तुल्या अन्येऽप्यशुद्धदेशा अपिशब्दात्तन्निवासिनः प्राणिनश्च पूयन्ति शुद्धा भवन्ति तद्भाव आर्षः

प्रह्लाद उवाच ॥ वरं वरय एतत्ते वरदेशान्महेश्वर ॥ यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥ विद्धामर्षाशयः साक्षात् सर्वलोकगुरुं प्रभुम् ॥ भ्रातृहेति मृषा दृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १६ ॥ तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात् ॥ पूतस्तेऽपाङ्गसंदृष्टस्तदा कृपण-वत्सल ॥ १७ ॥ श्रीभगवानुवाच ॥ त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ ॥ यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥ यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ॥ साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः ॥ १९ ॥ सर्वात्मना न हिंसन्ति भूतग्रामेषु किंचन ॥ उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ २० ॥ भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ॥ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २१ ॥ कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ॥ मदङ्गस्पर्शनेनाङ्ग लोकान्यास्यति सुप्रजाः ॥ २२ ॥ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥ २३ ॥

॥ १९ ॥ सर्वेति ॥ हे दैत्येन्द्र मद्भावेन मद्भक्त्यैव विगता हिंसा मूलक्रोधकारणभूता स्पृहा येषां ते मद्भक्ताः उच्चावचेषु उत्कृष्टापकृष्टेषु भूतग्रामेषु प्राणिसमूहेषु मध्ये सर्वात्मना कामक्रोधादिपारवश्येनापि किंचन कृकलाससर्पादिकमपि न हिंसन्ति न पीडयन्ति ॥ २० ॥ भवन्तीति ॥ लोके ये केचित्पुरुषास्त्वामनुव्रतास्त्वल्लक्षणसंपन्नास्ते मद्भक्ता भवन्ति अतः भवांस्तु खलु निश्चयेन सर्वेषां मद्भक्तानां प्रतिरूपं तुल्यत्वं धर्जति इति प्रतिरूपधृक् उपमानास्पदं श्रेष्ठ एव " धृज गतौ " क्विप् ॥ २१ ॥ कुर्विति ॥ अङ्ग हे प्रह्लाद मदङ्गस्पर्शनेनैव सर्वतः पापात् पूतस्यापि ते पितुः शास्त्रपरिपालनाय लोकसंग्रहाय च त्वं प्रेतकार्याणि दाहश्राद्धतर्पणादीनि कुरु तथा सति सुष्ठु प्रजापुत्रो भवान् यस्य सः उत्तमान् लोकान् यास्यति ॥ २२ ॥ पित्र्यमिति ॥ इन्द्रभवनादिकं विहाय पित्र्यं पितृसंबन्धि दानवाधिपत्यस्थानमधितिष्ठ । हे तात अहमेव परः

फलरूपो यस्य तथाभूतः सन्मनो मय्यावेश्य यद्यप्येवंभूतस्य तव कृत्यं नास्ति तथापि लोकानुग्रहार्थं वेदवादिभिरुक्तमनतिक्रम्य कर्माणि कुरु ॥ २३ ॥ प्रह्लाद इति ॥ हे राजन् युधिष्ठिर प्रह्लादोऽपि पितुर्यत्साम्परायिकं प्रेतोद्देशेन यत्कर्त्तव्यं तच्चक्रे । तथा द्विजोत्तमै राज्येऽभिषिक्तः सन् यथा भगवानाह स्म तथा तत्परः सन् कर्माणि चक्रे ॥ २४ ॥ प्रसादेति ॥ देवादिभिर्वृतो ब्रह्मा पूर्वं भयंकरमुखं दृष्ट्वा भीत इदानीं प्रसादे सुष्ठु सौम्यं मुखं यस्य तं तथाभूतं नरहरिरूपं हरिं दृष्ट्वा पवित्राभिः वाग्भिः स्तुत्वा प्राह स्म ॥ २५ ॥ देवेति ॥ हे देवदेव हे अखिलाध्यक्ष हे भूतभावन हे पूर्वज ते त्वयायं पापात्मा लोकसंतापनोऽसुरो निहतस्तदेतद्दिष्ट्या भद्रमेव लोकस्य कृतम् ॥ २६ ॥ य इति ॥ योऽसौ मम सृष्टिभिर्मया सृष्टैर्देवमनुष्यादिभिः न वध्यः हन्तुमशक्यः मत्तो लब्धो वरो येन स तपोयोगाभ्यां यद्बलं तेन उन्नद्धः गर्वित अत एव समस्तान् निगमान् वेदविहितान् वर्णाश्रमधर्मान् अहन् हतवान् स त्वया निहत इत्यनुषङ्गः ॥२७॥ दिष्ट्येति ॥ साधुः महाभागवतः अर्भकः अस्य तनयः प्रह्लादो मृत्योः सकाशात्त्वया विमो-

**श्रीनारद उवाच ॥ प्रह्लादोऽपि तथा चक्रे पितुर्यत् साम्परायिकम् ॥ यथाऽऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ॥ २४ ॥ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ॥ स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्ष भूतभावन पूर्वज॥दिष्ट्या ते निहतः पापो लोकसंतापनोऽसुरः ॥ २६ ॥ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ॥ तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २७ ॥ दिष्ट्यास्य तनयः साधुर्महाभागवतोऽर्भकः ॥ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८॥ एतद्वपुस्ते भगवन् ध्यायतः प्रयतात्मनः ॥ सर्वतो गोप्तृ संत्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥ नृसिंह उवाच ॥ नैवं वरोऽसुराणां ते प्रदेयः पद्मसंभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥ नारद उवाच॥ इत्युक्त्वा भगवान् राजंस्तत्रैवान्तर्दधे हरिः ॥ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥ ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् ॥ भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥ ३२ ॥**

चित एतदपि दिष्ट्या भद्रमेव जातम् । अधुना त्वां समितः सम्यक् शरणं प्राप्त इत्येतदपि दिष्ट्या ॥ २८ ॥ एतदिति ॥ हे भगवन् प्रयतात्मनो वशीकृतमनसस्तवैतद्वपुः नृसिंहरूपं ध्यायतः पुंसः सर्वतः संत्रासाद्भयात्किं बहुना जिघांसतः हन्तुमिच्छतो मृत्योरपि सकाशादेतद्वपुः गोप्तृ रक्षकम् ॥ २९ ॥ नैवमिति ॥ हे पद्मसंभव क्रूरो निसर्गः स्वभावो येषां तेषामसुराणां शेषे षष्ठी तेभ्यः ते त्वया एवं वरोऽतिबृहत्तमो वरः न प्रदेयः यथा अहीनाममृतं क्षीरं न देयं विषवर्द्धकत्वात् तथेत्यर्थः । क्रूरेत्यादि आहिष्वप्यन्वेति ॥ ३० ॥ इतीति ॥ हे राजन् युधिष्ठिर भगवान् हरिर्ब्रह्माणं प्रतीत्युक्त्वा तेन परमेष्ठिना पूजितः संस्तत्रैवान्तर्दधे अतः सर्वभूतानामदृश्यो बभूव ॥ ३१॥ तत इति ॥ ततः प्रह्लादोऽपि भगवतः कलारूपान् परमेष्ठिनं ब्रह्माणं भवं महादेवं प्रजापतीन् देवादीन् इन्द्रादींश्च संपूज्य शिरसा ववन्दे ॥ ३२ ॥

तत इति ॥ ततश्च काव्यः शुक्रस्तदादिभिर्मुनिभिः सार्धं कमलासनो ब्रह्मा प्रह्लादं दैत्यानां दानवानां च पतिमकरोत् ॥ ३३ ॥ प्रतिनन्द्येति ॥ ततश्च हे राजन् प्रह्लादेन प्रतिपूजिता ब्रह्माद्या देवाः प्रह्लादं प्रतिनन्द्य दिष्ट्या भगवदनुग्रहभाजनमसि भोगान् भुंक्ष्वेति प्रशस्य स्वधामानि ययुः ॥ ३४ ॥ एवमिति ॥ पूर्वं तौ जयविजयसंज्ञकौ विष्णोः पार्षदौ सनकादिशापेन दितेः पुत्रत्वं प्रापितौ वैरभावेन हेतुना हृदि स्थितेन हरिणा नृसिंहरूपं बिभ्रता हतौ ॥ ३५ ॥ पुनरिति ॥ पुनश्च जन्मत्रयपर्यन्तेन सनकादिविप्रशापेन तौ कुम्भकर्णदशग्रीवौ राक्षसौ बभूवतुः तौ च रामस्य विक्रमैर्हतौ ॥ ३६ ॥ शयानाविति ॥ रामस्य सायकैर्बाणैः निर्भिन्नं हृदयं ययोस्तौ युधि युद्धे शयानौ सन्तौ यथा प्राक्तनजन्मनि तथा तस्मिन् श्रीरामे एव चित्तं ययोस्तौ देहं जहतुस्तत्यजतुः ॥ ३७ ॥ ताविति ॥ अथेति मनुष्येषु तावेव पुनः शिशुपालः करूषजो दन्तवक्त्रश्चेत्येतौ जातौ हरिणा च हतौ तस्मिन् हरौ वैरानुबन्धेन हेतुना ते तव पश्यतः सतः तस्मिन् समीयतुः सायुज्यं प्रापतुः इदानीं शापस्य निवृत्तेः ॥ ३८ ॥ एन इति ॥

**ततः काव्यादिभिः सार्धं मुनिभिः कमलासन ॥ दैत्यानां दानवानां च प्रह्लादमकरोत् पतिम् ॥ ३३ ॥ प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ॥ स्वधामानि ययू राजन् ब्रह्माद्याः प्रतिपूजिताः ॥३४॥ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ॥ हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥ पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः॥ कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥ शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ॥ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥ ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ॥ हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३८ ॥ एनः पूर्वकृतं यत्तद् राजानः कृष्णवैरिणः ॥ जहुस्तं ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥ यथा यथा भगवतो भक्त्या परमयाभिदा ॥ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥ ४० ॥ आख्यातं सर्वमेतत् ते यन्मां त्वं परिपृष्टवान् ॥ दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ॥ अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥**

कृष्णवैरिणो राजानो निन्दारूपं एनः पापं पूर्वकृतं तत् अन्ते प्रारब्धभोगानन्तरं कीटो यथा पेशस्कृतो भ्रमरविशेषस्य ध्यानात्तदाकारादिधर्मा भवति तद्वत् तदात्मनः तस्य श्रीकृष्णस्येव आत्मा स्वभावगुणाकारादि येषां ते तथाभूताः सन्तो जहुः तत्यजुः ॥३९॥ यथेति ॥ अभिदा आत्मभेददर्शनरहितया अत एव परमया भगवतो भक्त्या तस्य हरेश्चिन्तया भक्ताः यथा यथा हरेः सात्म्यं तत्सारूप्यं ययुः तथैव चैद्यादयो नृपा अपि वैरानुबन्धेन तच्चिन्तया तत्सारूप्यं ययुः ॥ ४० ॥ आख्यातमिति ॥ दमघोषसुतादीनां शिशुपालादीनां द्विषामपि हरेः सात्म्यं सायुज्यं कथमिति यत्त्वं मां परिपृष्टवान् तदेतत्सर्वं ते तुभ्यं मया आख्यातम् ॥ ४१ ॥ एषेति ॥ ब्रह्मणि साधुः ब्रह्मण्यः स चासौ देवश्च ब्रह्मण्यदेवस्तस्य महात्मनः कृष्णस्य एषा पुण्या श्रोत्रादीनां पुण्यावहा नृसिंहावतारकथा मया आख्याता यत्र यस्यां कथायाम् आदिदैत्ययोः हिरण्याक्षहिर-

ण्यकशिपोः वधो निरूपितः ॥ ४२ ॥ प्रह्लादस्येति ॥ यत्र च महाभागवतस्य प्रह्लादस्यानुचरितं पाठोपदेशादि वर्णितं तथा तस्य भक्तियोगानुष्ठानप्रकारो वर्णितः तथा भगवत्तत्त्वज्ञानं च तस्य वर्णितं तथा तस्य विरक्तिश्च वर्णिता तथास्य हरेर्याथात्म्यं स्वरूपं वर्णितम् ॥ ४३ ॥ सर्गेति ॥ सर्ग उत्पत्तिः स्थितिः पालनम् अप्ययः प्रलयः तेषामीशस्य कर्त्तुर्गुणा ऐश्वर्यादयः कर्माणि सृष्ट्यादीनि तेषां वर्णनं कृतं परावरेषां देवासुरादीनां यानि स्थानानि तेषां कालेन निमित्तेन महान् व्यत्ययो विपर्यासोऽपि वैराग्यार्थं निरूपितः ॥४४॥ धर्म इति ॥ येन धर्मेण भगवान् गम्यते प्राप्यते स तथाविधो भागवतानां धर्मोऽनन्यपरत्वे सति भगवत्परत्वरूपो वर्णितः तथाध्यात्मिकमात्मानमधिकृत्य वर्त्तमानम् आत्मानात्मविवेकादिकमशेषतोऽस्मिन्नाख्याने समाख्यातम् ॥ ४५ ॥ य इति ॥ अतो विष्णोर्वीर्येण पराक्रमादिनोपबृंहितं तत्प्रतिपादनेन विस्तीर्णमत एव पुण्यमेतदाख्यानं श्रद्धया श्रुत्वा यः कीर्तयेत्स कर्मपाशैः पुण्यपापात्मकैः विमुच्यते ॥ ४६ ॥ एतदिति ॥ य एतत् एतां दैत्येन्द्र एव यूथपो हस्तियूथनाथस्तस्य वध-

**प्रह्लादस्यानुचरितं महाभागवतस्य च ॥ भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४३ ॥ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ॥ परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४॥ धर्मो भागवतानां च भगवान्येन गम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥ य एतत् पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशाद्विमुच्यते ॥ ४६ ॥ एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत ॥ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वानुभावमकुतोभयमेति लोकम् ॥ ४७ ॥ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति॥ येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४८ ॥ स वा अयं ब्रह्म महद्भिमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ४९ ॥**

रूपाम् आदिपुरुषस्य विष्णोः मृगेन्द्रस्य नृसिंहरूपस्य लीलाम् ऋद्धस्य राजमातङ्गा इतिवदार्षः समासः । प्रयतः समाहितचित्तः सन् पठेत तङार्षः । तथा सतां भगवद्भक्तानां मध्ये प्रवरस्य श्रेष्ठस्य दैत्यात्मजस्य प्रह्लादस्य च पुण्यं पुण्यावहमनुभावं प्रभावं श्रुत्वा पठेत तङार्षः । सोऽकुतोभयं न कुतोऽपि भयं यत्र तथाभूतं लोकं वैकुण्ठमेति प्राप्नोति ॥ ४७ ॥ यूयमिति ॥ नृलोके यूयं प्रह्लादापेक्षयापि भूरिभागाः यस्मात् मनुष्यलिङ्गं नराकृतिगूढं परं ब्रह्म येषां युष्माकं गृहान् साक्षादावसतीति मत्वा लोकं पुनानाः समदर्शनादिना पवित्रीकुर्वन्तः मुनयोऽपि येषां युष्माकं गृहान् अभियन्ति सर्वत आगच्छन्ति नैतादृशं प्रह्लादस्य सौभाग्यम् इति भावः ॥ ४८ ॥ स वा इति ॥ महद्भिर्विवेकिभिर्विमृग्यमन्वेषणीयं यत् कैवल्यं निर्वाणसुखं निरुपाधिः परमानन्दः तदनुभूतिरनुभवरूपं ब्रह्म स एवायं खलु प्रसिद्धो नराकृतिः वो युष्माकं प्रियः प्रीतिविषयः सुहृन्मित्रं हितचिन्तकः मातुलेयः मातुलपुत्रः आत्मा देहवत्स्वाधीनः अर्हणीय ईश्वरत्वेनाराधनीयः विधिकृत् आज्ञानुवर्ती गुरुश्च हितोपदेष्टा ॥ ४९ ॥

पद्मासनो ब्रह्मा प्रह्लादं दैत्यानां दानवानां च पतिमकरोत्

नांते ॥ यस्य भगवतः श्रीकृष्णस्य रूपं तत्वं भवो महादेवः पद्मजो ब्रह्मा तदादिभिरपि धियापि वस्तुतया याथार्थ्येन साक्षान्नोपवर्णितं न विषयीतं स एष सात्वतां पतिः भक्तानां पालको मौनेन मौनपूर्वकध्यानविचारादिना भक्त्या श्रवणादिरूपया उपशमेन इन्द्रियादिविजयेन पूजितः आराधितोऽस्माकं प्रसीदतां तङार्षः॥५०॥ स एष इति ॥ हे राजन् पुरा पूर्वं देवस्य रुद्रस्य अनन्तमायिना मयेन विहतं यशः स एष भगवान् विष्णुः व्यतनोत् विस्तारितवान्॥५१॥ कस्मिन्निति ॥ जगदीशितुर्महादेवस्य कीर्तिं कस्मिन् कर्मणि मयोऽहन् हतवान् यथा चानेन श्रीकृष्णेन सा कीर्तिरुपचिता तदेतद् द्वयं त्वया कथ्यताम् ॥ ५२ ॥ निर्जिता इति ॥ अनेन श्रीकृष्णेनोपबृंहितैः संवर्धितैर्देवैर्युधि निर्जिता असुरा मायिनां परमाचार्यं महामायाविनं मयं शरणमाययुः ॥ ५३ ॥ स इति ॥ विभुः समर्थो मयः दुर्लक्ष्यौ अपायसंयोगौ गमनागमने यासां ताः दुर्वितर्क्याः परिच्छदाः उपकरणानि यासु ताः हैमी च रौप्या चायसी चेति द्वन्द्वः ताः तिस्रः पुरो निर्माय तेभ्यो ददाविति शेषः ५४ ॥ ताभिरिति ॥ नृप हे युधिष्ठिर ताभिर्विमान-

न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः॥ ५० ॥ स एष भगवान्राजन्व्यतनोद् विहतं यशः ॥ पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ ५१ ॥ राजोवाच ॥ कस्मिन्कर्मणि देवस्य मयोहन् जगदीशितुः ॥ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥५२॥ नारद उवाच ॥ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ॥ मायिनां परमाचार्यं मयं शरणमाययुः ॥५३॥ स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥ ताभिस्तेसुरसेनान्यो लोकांस्त्रीन् सेश्वरान् नृप ॥ स्मरन्तो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५५ ॥ ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो ॥ त्राहि नस्तावकान् देव विनष्टांस्त्रिपुरालयैः ॥ ५६ ॥ अथानुगृह्य भगवान् मा भैष्टेति सुरान्विभुः ॥ शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुञ्चत ॥ ५७ ॥ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ॥ यथा मयूखसंदोहा नादृश्यन्त पुरो यतः ॥ ५८ ॥

रूपाभिरपेक्षितदेशगमनक्षमाभिः पुरीभिरसुरसेनान्यः असुरसेनापतयः अलक्षिताः सन्तः पूर्ववैरं स्मरन्तश्च सेश्वरान् सपालान् त्रीन् लोकान् नाशयांचक्रुः नाशयितुमारब्धवन्तः ॥ ५५ ॥ तत इति ॥ ततस्ते सेश्वरा इन्द्रादिलोकपालैः सहिता लोका जना ईश्वरं रुद्रमुपासाद्य प्राप्य हे विभो हे देव त्रीणि पुराणि आलयाः स्थानानि येषां तैरसुरैर्विनष्टप्रायान् अत एव त्रस्तान् तावकान् त्वदीयान् नोऽस्मान् त्राहि पालयेत्यूचुः तङभाव आर्षः ॥ ५६ ॥ अथेति ॥ अथ तान् देवान् मा भैष्ट भयं मा कुरुतेत्यनुगृह्य भगवान् विभुः रुद्रः धनुषि शरं सन्धाय तस्मिन्नस्त्रं पाशुपतं संयोज्य पुरेष्वमुञ्चत अस्त्रमभिमन्त्रितं शरमिति वा ॥ ५७ ॥ तत इति ॥ यथा सूर्यमण्डलान्मयूखसन्दोहा रश्मिसमूहा उत्पतन्ति तथा ततो धनुषोऽग्निवर्णा इषव उत्पेतुः । यतः यैरिषुभिः प्रच्छन्नाः पुरो नादृश्यन्त ॥ ५८ ॥

तैरिति ॥ तैरिषुभिः स्पृष्टास्ताडितास्त्रीणि पुराणि ओकांसि स्थानानि येषां ते सर्वे असुरा व्यसवः विगतप्राणाः सन्तो निपेतुः । तान् व्यसूनसुराननीय महायोगी महामायावी मयः कूपरसे स्वयं विनिर्मितकूपगते रसे मृतसञ्जीवयितारि अक्षिपत् अपातयत् ॥ ५९ ॥ सिद्धेति ॥ तेन सिद्धामृतरसेन स्पृष्टा असुरा वज्रसारा वज्रवदतिदृढाङ्गा महौजसो महाबलाः सन्तः मेघदलना मेघभेदिनो वैद्युताः विद्युद्रूपावह्नय इव उत्तस्थुः मेघस्था विद्युतो यथा मेघकान्तितिरस्कारिण्यस्तथा ते वीरा अपि श्यामविमानकान्तितिरस्कारिण इति ॥ ६० ॥ विलोक्येति ॥ भग्नः सङ्कल्पो यस्य तमत एव विमनस्कं दुःखितमनस्कं वृषध्वजं रुद्रं विलोक्यायं श्रीकृष्ण एव भगवान् विष्णुस्तत्र सिद्धामृतरसविनाशे उपायमकल्पयत् ॥ ६१ ॥ वत्स इति ॥ तदा ब्रह्मा चतुर्मुखो वत्स आसीत् अयं श्रीकृष्णरूपो विष्णुः स्वयं गौरासीत् एवं सवत्सा गौर्भूत्वा मध्याह्नकाले त्रिपुरं प्रविश्य रसकूपगतममृतं पपौ ॥ ६२ ॥ त इति अर्द्धम् ॥ ते रक्षका असुराः पानं कुर्वतीं गां पश्यन्तोऽपि हि यस्मात् भगवन्मायया विमोहिताः अतो न न्यषेधन् ॥६३॥

तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ॥ ताननीय महायोगी मयः कूपरसेऽक्षिपत् ॥ ५९ ॥ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ॥ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ॥ ६० ॥ विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ॥ तदाऽयं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥६१॥ वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ॥ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६२॥ तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन्विमोहिताः ॥ ६३ ॥ तद्विज्ञाय महायोगी रसपालानिदं जगौ ॥ स्वयं विशोकः शोकार्तान् स्मरन्दैवगतिं च ताम् ॥ ६४ ॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ॥ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ ६५ ॥ अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधनिकं व्यधात् ॥ धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ॥ रथं सूतं ध्वजं वाहान्धनुर्वर्म शरादि यत् ॥ ६६ ॥ सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥ ६७ ॥

तदिति ॥ महायोगी मयः तद्विज्ञाय अमृतपानं ज्ञात्वा तामचिन्त्यकार्यकर्तृत्वरूपां दैवस्य भगवतो गतिं स्मरन् स्वयं विशोकः शोकार्तान् रसपालान् असुरान् इदं वक्ष्यमाणं जगौ उवाच ॥ ६४ ॥ देव इति ॥ देवो वा असुरो वा नरो मनुष्यो वा कश्चन यक्षरक्षोगन्धर्वादिः आत्मनः स्वस्य अन्यस्य वा द्वयोर्वा दैवेनेश्वरेण यद्दिष्टमुपकल्पितं तदपोहितुं परिहर्तुमन्यथाकर्तुमीश्वरः समर्थः इह लोके नास्ति ॥ ६५ ॥ अथेति सार्द्धम् ॥ अथासौ श्रीकृष्णोऽपि शम्भोः रुद्रस्य प्राधनिकं प्रधनं संग्रामस्तत्साधनं यद्रथसूतादिरूपं तत् धर्मादिभिः स्वाभिः शक्तिभिराविष्टं व्यधात् स्वशक्तीनामनैश्वरत्वाज्जिष्णुत्वाच्च तदाविष्टानां रथादीनामपि तादृशत्वसम्पादनाय तत्र स्वीयधर्मस्य शक्तियोगस्यावेशो रथे शक्तियोगाश्रितानां ज्ञानादीनां रथाश्रितेषु सूतादिषु ज्ञेयः ॥ ६६ ॥ सन्नद्ध इति अर्द्धम् ॥ स्पष्टम् ॥ ६७ ॥

शरमिति ॥ हे नृप अथेश्वरः रुद्रः आ... परं सन्धाय दुर्भेद्या ... दहाह त्रिपुर इति समासान्ताभावादिकमार्षम् ॥ ६८ ॥ दिवीति सार्द्धम् ॥ दिवि दुन्दुभयो नेदुः ... तानि सङ्कुलानि संकीर्णानि येषां ते देवर्ष्यादयो जयेति वदन्तः कुसुमोत्करैः कुसुमवर्षैः शम्भुमवाकिरन् छन्नं चक्रुः । अप्सरोगणा हृष्टाः सन्तो जगुर्ननृतुश्च ॥ ६९ ॥ एवमिति ॥ हे नृप त्रिपुरहा भगवान् रुद्रः एवं श्रीकृष्णसाहाय्येन तिस्रः पुरो दग्ध्वा ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ययौ ॥ ७० ॥ एवमिति ॥ स्वमायया आत्मनो नृलोकं नराकारं विडम्बमानस्य अनुकुर्वतः जगद्गुरोः अस्य हरेः एवंविधानि तत्प्रकाराण्यवतारान्तरेषु कृतानि लोकान्पुनानानि वीर्याणि ऋषिभिर्गीतानि बहूनि सन्तीति शेषः । अपरम् अन्यत् किं वदामि ॥ ७१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकायाम् ॥ गङ्गासहायो

**शरं धनुषि संधाय मुहूर्तेऽभिजितीश्वरः ॥ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ॥ ६८ ॥ दिवि दुन्दुभयो नेदुर्विमानशतसंकुलाः ॥ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ॥ अवाकिरञ्जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥६९॥ एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ॥ ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥७०॥ एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ॥ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥७१॥ इति श्री० महा० सप्तमस्कन्धे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः ॥१०॥ श्रीशुक उवाच ॥ श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ॥युधिष्ठिरो दैत्यपतेर्मुदा युतः पप्रच्छ भूयस्तनयं स्वयंभुवः ॥१॥ युधिष्ठिर उवाच॥ भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम् ॥ वर्णाश्रमाचारयुतं यत्पुमान् विन्दते परम् ॥ २ ॥ भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः ॥ सुतानां संमतो ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ॥ करुणा साधवः शान्तास्त्वद्विधा न तथाऽपरे ॥ ४ ॥**

दशमे सप्तमस्य व्यधादिमाम् ॥ १० ॥ एकादशे नृणां धर्मा वर्णानां च विशेषतः ॥ योषितामपि मुख्याश्च श्लोकास्तत्र रसाग्नयः[३६] ॥ उवाचेति त्र्यं[३] सार्द्धाः षट्त्रिंशच्चाप्यनुष्टुभः[३६] ॥ ११ ॥ श्रुत्वेति ॥ साधूनां ब्रह्मादीनां भगवद्भक्तानां सभासु सभाजितं सत्कृतं महत्तमानां भगवद्भक्तानामग्रण्यः मुख्यस्य "एरनेकाच" इति यणम् । उरुक्रमे भगवति आत्मा यस्य तस्य दैत्यपतेः प्रह्लादस्य ईहितं चरितं श्रुत्वा मुदा हर्षेण युधिष्ठिरः स्वयंभुवो ब्रह्मणस्तनयं श्रीनारदं भूयः पप्रच्छ ॥ १ ॥ भगवन्निति ॥ हे भगवन् सर्वज्ञ अहं वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्याद्याश्रमनिष्ठानां चाचारैर्युतं सनातनमनादिपरम्परागतं नृणां धर्मं श्रोतुमिच्छामि । यद्यस्माद्धर्मात् पुमान् परं भक्तिं ज्ञानं च विन्दते प्राप्नोति ॥ २ ॥ भवानिति ॥ हे ब्रह्मन् यत भवान् प्रजापतेः परमेष्ठिनो ब्रह्मणः साक्षादात्मजः पुत्रः तपोयोगसमाधिभिः सुतानां मध्ये तस्य श्रेष्ठतया संमतश्च अतो नूनं ततो गृहीतधर्मरहस्यः ॥ ३ ॥ नारायणेति ॥ करुणाः दयालवः साधवः शान्ताः नारायण एव पर उपास्यो येषां ते त्वद्विधा विप्राः यथा परमुत्कृष्टमत एव गुह्यं धर्मं भगवदनुग्रहेण

विदुस्तथापरे स्मृतिकाराः न विदुः । तथा च त्वयैव वक्तव्यमिति भावः ॥ ४ ॥ नत्वेति ॥ भगवते लोकानां धर्महेतवे धर्मप्रवर्तकाय अजाय नारायणाय तमनुकूलयितुं नत्वा तस्यैव नारायणस्य मुखाच्छ्रुतं सनातनं धर्मं वक्ष्ये ॥ ५ ॥ य इति ॥ यो भगवान्नारायण आत्मनोंऽशभूतेन नरेण सह धर्मतो दाक्षायण्यां दक्षदुहितरि मूर्ताववतीर्य धर्मज्ञानादिप्रवर्तनेन लोकानां स्वस्तये बदरिकाश्रमेऽद्यापि तपोऽध्यास्ते करोति ॥ ६ ॥ धर्ममूलमिति ॥ हे राजन् सर्ववेदमयः भगवान् हरिरेव धर्मे मूलं कारणं प्रमाणं च तथा तद्विदां वेदविदां स्मृतं स्मृतिश्च प्रमाणम् तच्च स्वमूलभूतश्रुत्यनुमापनद्वारैव न साक्षात् तेन प्रत्यक्षवेदविरुद्धस्मृतीनामप्रामाण्यम् । येन चात्मा प्रसीदति तुष्यति तदपि प्रमाणम् इदं चात्मतुष्ट्याख्यं प्रायो विकल्पविषयं यथा गर्भाष्टमे वाब्दे इति चकाराच्छिष्टाचारोऽपि प्रमाणम् । तथा च मनुः। "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥" इति ॥७॥ तत्रादौ नरमात्रसाधारणधर्मानाह—सत्यमिति पञ्चकम् ॥ सत्यं यथार्थभाषणं समदर्शनं वा दया परदुःखप्रहरणेच्छा तपः एकादश्युपवा-

नारद उवाच ॥ नत्वा भगवतेऽजाय लोकानां धर्महेतवे ॥ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥५॥ योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ॥ लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥६॥ धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ॥ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ७ ॥ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ॥ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥ संतोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ॥ नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ॥ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥१०॥ श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ॥ सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥ नृणामयं परो धर्मः सर्वेषां समुदाहृतः ॥ त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥ १२ ॥

सादि शौचं स्नानादिजन्यं शुद्धत्वं तितिक्षा शीतोष्णादिसहिष्णुत्वम् ईक्षा युक्तायुक्तविवेकः शमो मनःसंयमः दमो बाह्येन्द्रियजयः अहिंसा सर्वथा परपीडावर्जनं ब्रह्मचर्यं परस्त्रीवर्जनं निषिद्धदेशकालादौ स्वस्त्रीवर्जनं च त्यागो दानं स्वाध्यायो यथोचितमन्त्रजपादि आर्जवं मनसः कौटिल्यवर्जनं संतोषो दैवाल्लब्धेनालंबुद्धिः समदृशां महतां भगवद्भक्तानां सेवा शनैः ग्राम्येहाभ्यः प्रवृत्तिकर्मभ्यः उपरमो निवृत्तिः तस्या एकदैव झटिति सम्पादनमशक्यमतः शनैरित्युक्तं नृणां विपर्ययेहा निष्फलक्रियास्तासामीक्षा पर्यालोचनं मौनं वृथावाक्यनिवृत्तिः आत्मविमर्शनं देहादिव्यतिरिक्ततयाऽऽत्मनोऽनुसन्धानम् अन्नमोदनम् आद्यम् अदनीयं मोदकादि आदिपदेन वस्त्रादिग्रहणं तदादेर्भूतेभ्यो यथोचितं संविभागः विभज्य प्रदानं तेषु भूतेषु पश्वादिष्वपि आत्मेति देवतेति च बुद्धिः हे पाण्डव नृषु तु सुतरां तथाबुद्धिः महतां भक्तानां गतेः शरणभूतस्यास्य भगवतः गुणकर्मणां श्रवणं कीर्तनं च स्वरूपगुणविभूतीनां स्मरणं चिन्तनं सेवा पादसंवाहनादिरूपा इज्या पूजा अर्घपाद्यादिनिवेदनरूपा अवनतिः नमस्कृतिः दास्यं दासवत्स्वकृतकर्मनिवेदनम् भग-

वति समर्पणं सख्यं विश्वासादि आत्मसमर्पणं देहस्य तत्संबन्धिनश्च तदीयतयाऽनुसन्धानं हे राजन् अयं त्रिंशल्लक्षणवान् अवान्तरप्रकारभेदेन त्रिंशत्सङ्ख्याकः सर्वेषां नृणां साधारणतया परो धर्मान्तरेभ्यः उत्कृष्टो धर्मः ऋषिभिः सम्यक् उदाहृतः निरूपितः येन धर्मेण सर्वात्मा भगवांस्तुष्यति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ संस्कारा इति सार्द्धम् ॥ यत्र यस्मिन् संस्कारा मन्त्रवन्तो गर्भाधानादयः षोडश अविच्छिन्नाः यं चैवंभूतमविच्छिन्नसंस्कारवत्वेन अजो ब्रह्मा जगाद स द्विजः यत्र संस्कारविच्छेदः स द्विजबन्धुरित्यर्थः। शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद न चोपनयनवन्तमतो नासौ द्विजः स द्विजो वैदिकादय इति पाठे गर्भाधानादयः । इज्येति जन्मना विशुद्धेन कुलेन कर्मणा आचारेण च अवदातानां शुद्धानां द्विजन्मनां त्रैवर्णिकानामिज्यादीनि विहितानि दुष्कुलानां दुराचाराणां च न विहितानीत्यर्थः। तथा ब्रह्मचर्याद्याश्रमेषु चोदिता क्रियाश्च विहिताः ताश्च तैर्गृहीत तत्तदाश्रमैरनुष्ठेयाः शूद्रस्य तु वर्णधर्मा एव आश्रमभेदकृतविशेषाभावात् ॥ १३ ॥ विप्रस्येति ॥ विप्रस्याध्ययनादीनि षट्कर्माणि विहितानीत्यनुषङ्गः। तत्रेज्याध्ययनदानानीति त्रीण्यवश्यानुष्ठेयधर्मरूपाणि याजनाध्यापनप्रतिग्रहरूपाणि तु जीविकासाधनानि नावश्यकानि अन्यस्य क्षत्रियस्य

संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ॥ इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥ विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः ॥ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद् वा करादिभिः ॥ १४ ॥ वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ॥ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥ वार्ताविचित्रा शालीनयायावरशिलोञ्छनम्॥ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ॥ १६ ॥

अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनमध्यापनं चापद्यनुजानाति वक्ष्यते चानन्तरमेव ऋते राजन्यमिति जीविकां विना तु अनापद्यपि क्षत्रियादेर्न दोषः। अत एव अश्वपतिकैकयमन्वादिक्षत्रियाणामुपदेष्टृत्वादि स्वामिग्राह्यो भागः करः आदिपदेन दण्डशुल्कादिग्रहणम्। अविप्रात् विप्रव्यतिरिक्तात्करादिभिः प्रजागोप्तुः प्रजापालकस्य राज्ञो वृत्तिर्विहितेति शेषः। राज्येऽनधिकृतस्य क्षत्रियस्य खड्गधारणादिना वृत्तिर्ज्ञेया ॥ १४ ॥ वैश्य इति ॥ वैश्यस्तु नित्यं ब्रह्मकुलमनुगच्छत्यनुवर्तत इति तथाभूतः सन् वार्ता "कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते। वार्ता चतुर्विधा तत्र" इत्युक्तरूपा वृत्तिर्यस्य तथा भवेदित्यर्थः। शूद्रस्य द्विजशुश्रूषा धर्मः स्वामिनः द्विजस्य शुश्रूषा तु वृत्तिर्जीविका च भवेत् ॥ १५॥ विप्रस्य मुख्यवृत्तिः कथिता कल्पभेदेन युगभेदेन च वृत्त्यन्तराण्याह—वार्तेति ॥ वार्ता विचित्रा कृषिगोरक्षवाणिज्यादिरूपा शालीनमयाचितं यायावरं प्रत्यहं धान्यमात्रयाच्ञा शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम् उञ्छनमापणादिपतितकणोपादानम् इयं विप्रवृत्तिश्चतुर्द्धा शिलोञ्छनमिति द्वयमेकीकृत्य चतुर्धेत्युक्तम्। आसां चतसृणां वृत्तीनां मध्ये पूर्वपूर्वापेक्षया उत्तरोत्तरावृत्तिः श्रेयसी उत्तमेत्यर्थः ॥ १६ ॥

जघन्य इति ॥ जघन्यो नीचोऽनापदि स्ववृत्त्यलाभरूपा पदभावे उत्तमामध्यापनादिरूपां वृत्तिं न भजेत् न स्वीकुर्यात् । स्वस्ववृत्त्यैव निर्वाहं कुर्यात् । आपत्सु तु ऋते राजन्यं क्षत्रियं विना सर्वेषामपि सर्वा एव वृत्तयो भवन्ति । क्षत्रियस्य तु प्रतिग्रहं विहायान्या वृत्तयो भवन्ति । अन्यस्याप्रतिग्रह इत्युक्तत्वात् ॥ १७ ॥ ऋतेति ॥ मूले व्याख्यातम् ॥ १८ ॥ ऋतमिति सार्द्धम् ॥ स्पष्टम् ॥ १९ ॥ वर्जयेदिति ॥ विप्रो राजन्यश्च जुगुप्सितां तां श्ववृत्तिं सदा वर्जयेत् । अत्र हेतुरुत्तरोर्द्धं स्पष्टम् ॥२०॥ शम इति ॥ शमादिकं ब्रह्मलक्षणं ब्राह्मणत्वाभिव्यञ्जकमित्यर्थः । शान्तिः क्रोधाभावः ज्ञानं विवेकः अच्युतात्मत्वं भगवन्निष्ठत्वं शेषं साधारणधर्मेषु व्याख्यातम् ॥ २१ ॥ शौर्यमिति ॥ शौर्यादि-क्षत्रलक्षणं क्षत्रियत्वस्याभिव्यञ्जकमित्यर्थः । शौर्यं युद्धोत्साहः वीर्यं प्रभावः परैरनभिभाव्यत्वं धृतिर्धैर्यम् आपत्स्वप्यदुःखित्वं तेजः पराभिभवसामर्थ्यं त्यागः उदारता लोभाभावो वा आत्मजयः देहादिधर्मैः क्षुत्पिपासादिभिरनभिभाव्यत्वं क्षमा परापराधसहिष्णुता ब्रह्मण्यता ब्राह्मणकुलानुवृत्तिः प्रसादः अनुग्रहः रक्षा प्रजापालनम् ॥ २२ ॥

जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥ १७ ॥ ऋतामृताभ्यां जीवेन मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥ १८ ॥ ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ॥ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ १९ ॥ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ॥ ज्ञानं दयाच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २१ ॥ शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ॥ ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २२ ॥ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ॥ आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २३ ॥ शूद्रस्य संततिः शौचं सेवा स्वामिन्यमायया ॥ अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥ २४ ॥ स्त्रीणां च पतिदेवानां तच्छुश्रूषाऽनुकूलता ॥ तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २५ ॥

देवेति ॥ देवादिभक्त्यादिकं वैश्यलक्षणमित्यर्थः । देवाश्च गुरवश्च अच्युतश्च तत्र भक्तिः देवगुर्वार्यगोभक्तिरिति पाठान्तरम् । त्रिवर्गेण धर्मार्थकामरूपेण परितोषणं परितुष्टिः आस्तिक्यमस्ति शास्त्रोक्तं सर्वमिति विश्वासः नित्यमुद्यमः अर्थार्जने प्रयत्नः । तत्र नैपुण्यं चातुर्यम् ॥ २३ ॥ शूद्रस्येति ॥ शूद्रस्य संनत्यादिकं लक्षणमित्यनुषङ्गः । संनतिर्ब्राह्मणादिवर्णत्रये नम्रता शौचं शुद्धत्वं स्वस्वामिनि अमायया निष्कपटभावेन सेवा अमन्त्रयज्ञः नमस्कारान्तनाममन्त्रेण पञ्चयज्ञानुष्ठानम् । तथा चाह याज्ञवल्क्यः "नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ।" इति । अस्तेयमचौर्यं सत्यं स्पष्टं गवां विप्राणां च रक्षणम् ॥ २४ ॥ स्त्रीणामिति ॥ पतिरेव देवो यासां तासां पतिव्रतानां स्त्रीणां पतिशुश्रूषादिचतुष्टयं लक्षणं धर्मश्चेति तस्य पत्युः शुश्रूषा परिचर्या तदनुकूलता च हिताचरणं तस्य बन्धुषु पितृभ्रात्रादिष्वनुवृत्तिः नित्यं तस्य पत्युः यद्व्रतं नियमस्तस्य

धारणं निर्वाहः ॥ २५ ॥ संमार्जनेति द्वयम् ॥ साध्वी स्वयं च नित्यं मण्डिता अलंकृता परिमृष्टाः निर्मलीकृताः परिच्छदाः पात्रवस्त्रभूषादयो यस्या तादृशी सती गृहस्य संमार्जनोपलेपाभ्यां जलेन सेकः मण्डनमलङ्कारः वर्तनं नित्यं स्वगृह एवावस्थानं तैः उच्चावचैर्नानाविधैः पत्युरपेक्षितैः कामैः विषयैः प्रश्रयेण विनयेन दमेनेन्द्रियसंयमेन च सत्यैर्यथार्थैः प्रियैः प्रीतिजनकैर्वाक्यैश्च प्रेम्णा च काले काले तत्तदुचितावसरे पतिं भजेत् ॥ २६ ॥ २७ ॥ संतुष्टेति ॥ स्वयं तु यथालाभेन संतुष्टा तावन्मात्रेऽपि अलोलुपा अलुब्धा दक्षा अनलसा धर्मज्ञा प्रिया सत्या च वाक् यस्याः सा वाक्यैः सत्यैरिति पतिविषये अत्र प्रियाया सत्यवागिति तु तदन्यविषयेऽपीत्यपौनरुक्त्यं बोध्यम् अप्रमत्ता पतिशुश्रूषणादौ सावधाना शुचिः स्नानादिना शुद्धा स्निग्धा स्नेहयुक्ता अपतितं महापातकरहितं पतिं भजेत् । तु शब्देन पतितेन संबन्धो न कार्य इति सूचितम् । "आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः" इति याज्ञवल्क्योक्तेः ॥२८॥ येति ॥ श्रीर्लक्ष्मीर्यथा हरिपरा सती हरिं भजते तथा या स्त्री तत्परा स पतिरेव परः सर्वत उत्कृष्टो यस्याः सा तथाभूता सती पतिं भजेत् । सा यथा हरेर्लोके वैकुण्ठे हरिणा सह श्रीर्मोदते तथा हर्यात्मना चतुर्भुजादिरूपेण स्वपतिना सह तत्र मोदते ॥ २९ ॥ वृत्तिरिति ॥ संकरजा-

**संमार्जनोपलेपाभ्यां गृहमण्डलवर्तनैः ॥ स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २६ ॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥ वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत् पतिम् ॥२७॥ संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥२८॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥२९॥ वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत् ॥ अचौराणामपापानामन्त्यजान्तेऽवसायिनाम् ॥ ३० ॥ प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ॥ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ॥ ३१ ॥ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ॥ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥**

तयस्तु प्रतिलोमजाः अनुलोमजाश्चेति द्विविधाः । तत्रावरवर्णात् प्रकृष्टवर्णायां स्त्रियां जाताः प्रतिलोमजाः । प्रकृष्टवर्णादवरवर्णायां जातास्त्वनुलोमजाः । "रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥" इति स्मृत्युक्ता अन्त्यजा ज्ञेयाः । अन्तेवसायिनस्तु चाण्डालपुल्कसमातङ्गादयः । अचौराणाम् अपापानां च अन्त्यजानाम् । अन्त्येवसायिनां च सङ्करजातीनां तत्तत्कुलकृता कुलपरम्परा प्राप्तैव । नापितरजकादीनां क्षौरवस्त्रनिर्णेजनादिरूपा वृत्तिर्भवेत् । कुलपरम्परागतमपि चौर्य-हिंसादिकं न कार्यमिति सूचनाय अचौरादिविशेषणम् ॥ ३० ॥ श्रेष्ठादपि परधर्मात् नीचोऽपि स्वधर्म एव श्रेयानित्याशयेनाह—प्राय इति ॥ हे राजन् नृणां वर्णाश्रमादिमतां सर्वेषामपि स्वभावेनोक्तशमदमादिप्रयुक्तवर्णाश्रमाद्यनुसारेण विहितो यो धर्मोऽध्ययनाध्यापनादिरूपः स एव इह लोके प्रेत्य परलोके च युगे युगे तत्तदवसरे वेददृग्भिः वेदज्ञैः शर्मकृत्सुखहेतुः स्मृतः ॥ ३१ ॥ ननु सर्वस्यापि कर्मणो बन्धहेतुत्वात्कथं सुखहेतुत्वं तत्राह—वृत्त्येति ॥ स्वभावकृतया शमदमादिस्वभावाभिव्यक्तवर्णाश्रमादिप्रयुक्तयाध्याप-

नादिवृत्त्या वर्तमानः स्वनिर्वाहं कुर्वन् स्वकर्माणि अध्ययनादीनि करोति स्वभावजं राजसादिप्रयुक्तं कर्म दुरितं हित्वा शनैर्निर्गुणतामियात् ॥ ३२ ॥ ननु काम्यानि कर्माणि कुर्वतस्तत्फलभोगपरस्य कथं नैर्गुण्यं स्यादित्याशंक्य तत्राधिकारिभेदेन व्यवस्थां सदृष्टान्तमाह—उप्यमानमिति ॥ यथा मुहुर्मुहुरुप्यमानं क्षेत्रं स्वयमेव निर्वीर्यतामसारतामियात् । पुनः सूत्यै सस्यप्रसवनाय न कल्पते समर्थं न भवति अत एव तत्रोप्तं बीजं च नश्यति ॥ ३३ ॥ एवमिति ॥ हे राजन् एवं कामा विषया आशेरते वासनारूपेण यस्मिंस्तत् कामाशयं चित्तं कामानां विषयाणामतिसेवयाऽतिभोगेन विरज्येत ततो विरक्तं भवति अतः उत्कटविषयवासनायुक्तं चित्तं कामबिन्दुभिर्न नश्यति । महद्भिः कामैस्तु शाम्यत्येव । प्रज्वलितोऽग्निर्यथा घृतबिन्दुभिर्न शाम्यति किंतु महता घृतपूरेण शाम्यति अयं भावः । उत्कटविषयवासनाविष्टस्य सहसैव कामत्यागासम्भवाद्वेदोक्तनियमेन बहुशः कामान् भुञ्जानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेन ययातिसौभरिप्रमुखानामिव शनैर्विरागो भवति यथा सवीर्यं क्षेत्रं शनैर्निर्वीर्यं भवति । प्रह्लादकृतस्तुतौ कौमार एव निवृत्त्युपदेशो मन्दवासनान्प्रत्येवेति ॥ ३४ ॥ शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्य इत्याह—यस्येति ॥ यस्य पुंसो ब्राह्मणादेर्ब्राह्मणत्वादिवर्णाभिव्यञ्जकं यत्

उप्यमानं बहु क्षेत्रं स्वयं निर्वीर्यतामियात् ॥ न कल्पते पुनः सूत्या उप्तं बीजं च नश्यति ॥ ३३ ॥ एवं कामाशयं चित्तं कामानामतिसेवया ॥ विरज्येत यथा राजन्नाग्निवत्कामबिन्दुभिः ॥ ३४ ॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ॥ यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥ ३५ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नामैकादशोऽध्यायः ॥ ११ ॥

नारद उवाच ॥ ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम् ॥ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥ सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमात् ॥ उभे संध्ये च यतवाग् जपन्ब्रह्म सनातनम् ॥ २ ॥

शमादिरूपं लक्षणं प्रोक्तं तत् यत् यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तर्हि तद्वर्णान्तरं तेनैव लक्षणनिमित्तेन वर्णेनैव विनिर्दिशेत् व्यवहरेत् नतु कुलमात्रेणेति ब्राह्मणवदादराभिप्रायेण नतु सन्ध्यावन्दनवेदपाठादिप्राप्त्यर्थं दानादियोग्यतार्थं वा व्यवहारविरोधात् ॥ ३५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो विवृतिं सप्तमैकादशे व्यधात्॥ ११ ॥ द्वादशे वर्णिनां धर्मा वनस्थानां च कीर्तिताः ॥ साधारणाश्च केऽपीह श्लोकाः सार्द्धाः कुवह्नयः ॥ अनुष्टुभोऽपि तावन्त्य उवाचेत्येकमीरितम् ॥ १२ ॥ वर्णधर्मानुक्त्वाऽऽश्रमधर्मानाह—ब्रह्मचारीति ॥ ब्रह्मचर्यं द्विविधमौपकुर्वाणं नैष्ठिकं चेति । तत्र सावधिकमौपकुर्वाणं निरवधिकमा आयुर्नैष्ठिकम् । तत्रौपकुर्वाणधर्मानाह ब्रह्मचारी दान्तः जितेन्द्रियः नीचः आत्मनो नीचत्वं भावयन् गुरौ सुदृढं सौहृदं यस्य तादृशः सन् दासवद्गुरोर्हितमाचरन् गुरुकुले गुरुगृहे वसन् भवेत् ॥ १ ॥ सायमिति ॥ सायं प्रातश्च गुर्वग्न्यर्कसुरोत्तमान् उपासीत समाहित एकाग्रचित्तो ब्रह्म गायत्रीं जपन् सन्ध्यात्रयमुपासीत । तत्र उभे संध्ये तु यतवाग् भवेत् । सायं प्रातः सन्ध्याकालनि-

मित्तं मौनं कुर्यादित्यर्थः ॥ २ ॥ छन्दांसीति ॥ गुरुणा चेत् यदि आहूतस्तदा सुयन्त्रितः सावधानः सन् गुरोः सकाशाच्छन्दांसि वेदानधीयीत । अध्ययनस्य उपक्रमे अवसाने च प्रत्यहं शिरसा गुरोश्चरणौ नमेत् ॥ ३ ॥ मेखलेति ॥ दर्भाः पवित्रं पाणौ यस्य सः यथोदितं " पालाशो दण्डो ब्राह्मणस्य " इत्यादि नियममनतिक्रम्य मेखलादीनि उपवीतं च बिभृयात् । जटाधारणं तु केशप्रसाधनाभावमात्रम् ॥ ४ ॥ सायमिति ॥ सायं प्रातश्च भैक्षं चरेत् भिक्षाटनं कुर्यात् । तत् भिक्षया लब्धमन्नं गुरवे निवेदयेत् गुरोः पुरतो निदध्यात् । यत् यदि गुरुणा अनुज्ञातस्तदा तदन्नं भुञ्जीत । चेत् यदि कचिदेकादश्यादावुपवासकाले गुरोरनुज्ञाभावो वा तदा उपवसेत् उपवासं कुर्यात् ॥ ५ ॥ सुशील इति ॥ सुशीलः सुस्वभावो भवेदिति सर्वत्र शेषः । मितं भुङ्क्ते इति तथा मानं च उदरस्यार्द्धभागमन्नेन पूरयेत् तदर्धं जलेनेति ज्ञेयम् । दक्षः अनलसः श्रद्दधानः शास्त्रगुरूपदिष्टार्थेषु विश्वासवान् जितेन्द्रियश्च सन् स्त्रीषु स्त्रीभिर्निर्जिता ये पुरुषास्तेषु च यावदर्थं यावत्प्रयोजनमेव भिक्षाग्रहणपर्यन्तं व्यवहरेन्नाधिकमित्यर्थः ॥ ६ ॥ वर्जयेदिति ॥ अगृहस्थो गृहस्थव्यतिरिक्तो बृहद्व्रतः ब्रह्मचर्यवांस्तु सर्वोऽपि प्रमदानां गाथामपि वर्जयेदित्यर्थः। यतः इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि बलवन्ति अतः यतेः संयतचित्तस्यापि मनः हरन्ति । प्रमदा गाथाश्रवणादिना स्ववशीकुर्वन्तीत्यर्थः ॥ ७ ॥ केशेति ॥ युवा ब्रह्मचारी गुरुस्त्रीभिः अन्याभिश्च युवतिभिः स्त्रीभिः आत्मनः केशप्रसाधनादिकं न कारयेत् । गुरुपत्न्यो हि शिष्यं पुत्रवद्वात्सल्येन पश्यन्त्यो यदि केशप्रसाधनादिकं स्वेच्छयैव कुर्वन्ति तदपि न कारयेदित्यर्थः ॥ ८ ॥ नन्विति ॥ ननु निश्चितमेतत् नामेति विवेकिजनप्रसिद्धमपि प्रमदा अग्निसदृशी तथा पुमान् घृतकुम्भमयः तत्सदृशः । तथा च यथाग्निसमीपे घृतकुम्भः क्षरति तथा पुमानपि प्रमदासाहचर्यात्क्षरति अतः रहः एकान्ते सुतामपि जह्यात् त्यजेत् । अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकान्तावसरे वा यावदर्थं यावत्प्रयोजनं तावन्मात्रं करोति इति तादृशो भवेत् ॥ ९ ॥ ननु जितेन्द्रियस्य युवतयः किं कुर्युरित्याशङ्क्याह—कल्पयित्वेति ॥ यावदसौ जीवः आत्मना स्वरूपसाक्षात्कारेण इदं देहेन्द्रियादिकमाभासमात्रं कल्पयित्वा निश्चित्य

> छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः ॥ उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥ मेखलाजिनवासांसि जटादण्डकमण्डलून् ॥
> बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥४॥ सायं प्रातश्चरेद् भैक्षं गुरवे तन्निवेदयेत् ॥ भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत्क्वचित् ॥५॥
> सुशीलो मितभुग् दक्षः श्रद्दधानो जितेन्द्रियः ॥ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥ वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः ॥
> इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ७ ॥ केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा
> ॥ ८ ॥ नन्वग्निः प्रमदा नाम घृतकुम्भमयः पुमान् ॥ सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥ कल्पयित्वात्मना यावदाभासमिदमीश्वरः ॥ द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥

ईश्वरः स्वतन्त्रो न भवेत् तावद्द्वैतं इयं स्त्री भोग्या अहं पुमान् भोक्तेत्यादिभेदो न विरमेत् ततो हि द्वैतदर्शनादस्य पुरुषस्य विपर्ययो गुणाध्यासेन भोग्यताबुद्धिर्भवति अतो जह्यादेवेत्यर्थः ॥ १० ॥ एतदिति ॥ एतत्सुशील इत्याद्युक्तं सर्वं गृहस्थस्य यतेरपि च समाम्नातम् । ऋतुगामिनः " ऋतौ भार्यामुपेयात् " इत्यादि शास्त्रानुसारेण ऋतौ भार्यामुपगच्छतस्ततो जातपुत्रादिपालनव्यग्रस्येत्यर्थः । गृहस्थस्य गुरूणां वृत्तिः जीविका विकल्पेन ज्ञेया सामर्थ्यं चेत्कल्पयितव्या नो चेन्नेत्यर्थः ॥ ११ ॥ अञ्जनेति ॥ किं च ये धृतव्रताः गृहस्थास्तेऽपि अञ्जनादीनि स्रग्गन्धादींश्च त्यजेयुः । अञ्जनादीनामामिषान्तानां द्वन्द्वैक्यम् । अञ्जनं तैलादिना शरीरस्य अभ्यञ्जनं शिरसः । यद्वा । अञ्जनं कज्जलादिना नेत्रयोः अभ्यञ्जनं तैलोद्वर्तनादिना शरीरस्य उन्मर्द हस्तादिना शरीरस्य स्त्रीणां कुड्यादाववलेखो निरीक्षणं वा यद्वा स्त्रियं च अवलेखं चित्रकर्म चेति आमिषं मांसं मधु पुष्परसः क्षत्रियाद्यभिप्रायेण मद्यं वा ब्राह्मणस्य प्राप्त्यभावात् अत्राञ्जनाभ्यङ्गादि स्वरूपतो निषिध्यते केशप्रसाधनादि पूर्वं तु कथंचिदापदि प्राप्तमपि स्त्रीकर्तृकं निषिध्यत इति भेदः ॥ १२ ॥ उषित्वेति युग्मम् ॥ द्विजस्त्रैवर्णिकः एवमुक्तप्रकारेण गुरुकुले उषित्वा अङ्गैः शिक्षादिभिः उपनिषद्भिश्च सहितां वेदत्रयीं यथाबलं यावदर्थं

**एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ॥ गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥ अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु ॥ स्रग्गन्धलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥ उषित्वैवं गुरुकुले द्विजोधीत्यावबुध्य च ॥ त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ ॥ १३ ॥ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ॥ गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥ एवं विधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ॥ चरन् विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥ वानप्रस्थस्य वक्ष्यामि नियमान् मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा ॥ १७ ॥**

स्वाधिकारानुसारेण चाधीत्य अवबुध्य तदर्थं च विचार्य यदि ईश्वरः समर्थस्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा तदनुज्ञातः सन् गृहं प्रविशेत् गार्हस्थ्यं स्वीकुर्यात् वनं वा प्रविशेत् वानप्रस्थं वा स्वीकुर्यात् प्रव्रजेद्वा संन्यासाश्रमं वा स्वीकुर्यात् तत्र ब्रह्मचर्याश्रमे वा वसेत् नैष्ठिको वा भवेत् ॥ १३ ॥ १४ ॥ अग्नाविति ॥ सर्वोपादानतया पूर्वमेव विद्यमानत्वात् अग्न्यादिषु वस्तुतः अप्रविष्टमप्युपासनारीत्या तेषु पञ्चमहाभूतैः स्वधामभिः स्वाश्रयैर्जीवैश्च सह तन्नियन्तृतया प्रविष्टवदधोक्षजं भगवन्तं पश्येत् ॥ १५ ॥ एवंविध इति ॥ एवंविधः सर्वत्र भगवद्दर्शी ब्रह्मचार्याद्यन्यतमः चरन् स्वाश्रमधर्मानाचरन् विदितं विज्ञानं विज्ञेयं येन स तथाविधः सन् परं ब्रह्माधिगच्छति प्राप्नोति ॥ १६ ॥ वानप्रस्थस्येति ॥ मुनीनां संमतान् तैरुक्तान् वानप्रस्थस्य नियमान् धर्मान् वक्ष्यामि । यान् धर्मानिह लोके आतिष्ठन् मुनिरञ्जसा सुखेनैव ऋषिलोकं क्रममुक्तिस्थानं महर्लोकं गच्छेत् ॥ १७ ॥

नेति ॥ कृष्टपच्यं कृष्याद्युपायैर्निष्पन्नं शाल्यन्नादिकं नाश्नीयात् वनस्थ इति सर्वत्र शेषः । अकृष्टपच्यमपि फलमूलादिकमकालतः परिपाककालात्पूर्वमेव परिपक्वं नाश्नीयात् अग्निपक्वमामं च नाश्नीयात् । उत अपि तु स्वस्वकाले अर्कपक्वं सूर्यकिरणपक्वं फलादिकमेवाहरेत् ॥ १८ ॥ वन्यैरिति ॥ वन्यैर्नीवारादिभिः कालचोदितान् नित्यान् चरुपुरोडाशान् निर्वपेत् सम्पादयेत् । नवे नवे नूतने अन्नाद्ये लब्धे सति पुराणं पूर्वसञ्चितमन्नाद्यं परित्यजेत् ॥ १९ ॥ अग्नीति ॥ अग्न्यर्थमग्नीनां रक्षणार्थमेवोटजं पर्णशालात्मकं शरणं गृहं स्वीकुर्यात् । अथवा अद्रिकन्दरं पर्वतगुहामाश्रयेत । स्वयं तु हिमवाय्वादीन् सहत इति तथा भवेत् ॥ २० ॥ केशेति ॥ जटा अस्य सन्तीति जटिलः केशादीन् कमण्डल्वादींश्च दधत् धारयन् भवेत् । मलधारणं नाम मुसलवत्स्नानमात्रेण देहमर्दनपूर्वकतत्प्रक्षालनाभावमात्रम् । अग्निपरिच्छदाः स्रुक्स्रुवाद्युपकरणानि ॥ २१ ॥ चरेदिति ॥ कृच्छ्रतस्तपःक्लेशात् यथा बुद्धिर्न विपद्येत न विनश्येत तथा द्वादशाब्दान् संवत्सरान् अष्टौ वा चतुरो वा द्वौ वा एकं वा वानप्रस्थधर्मानाचरेत् ॥ २२ ॥

**न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ॥ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥ वन्यैश्चरुपुरोडाशान्निर्वपेत् कालचोदितान् ॥ लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥ अग्न्यर्थमेव शरणमुटजं वाऽद्रिकन्दराम् ॥ श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥ केशरोमनखश्मश्रुमलानि जटिलो दधत् ॥ कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ २१ ॥ चरेद् वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ॥ द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥ यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथवा ॥ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥ आत्मन्यग्नीन् समारोप्य संन्यस्याहंममात्मताम् ॥ कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथाऽर्हतः ॥ २४ ॥ खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥**

द्वादशाब्दाद्यनन्तरमपि यदि धर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत् ज्ञानाभ्यासे योग्यश्चेत्संन्यसेदित्युत्तराध्याये वक्ष्यति तदुभयरहितस्य कृत्यमाह—यदेति॥ यदा च स वानप्रस्थः एकाब्दाद्यनन्तरं व्याध्यादिभिर्जरया वा स्वकीयक्रियायामान्वीक्षिक्यामात्मविचाररूपायां विद्यायां तुरीयाश्रमधर्मे चाकल्पः असमर्थस्तदा अनशनादिकं कुर्यात् । आदिपदेनाग्न्यारोहणादिकं वक्ष्यमाणं विवक्षितम् ॥ २३ ॥ अनशनादिकं करिष्यतः पूर्वकृत्यमाह—आत्मनीति ॥ ज्वालापानैः अग्नीनात्मनि समारोप्य देहादावहंममात्मतां च संन्यस्य त्यक्त्वा यथार्हतः यथायोग्यं स्वस्वकारणे सङ्घातं देहेन्द्रियादिसमूहं सम्यक् न्यसेत् विलापयेत् ॥ २४ ॥ विलापनं दर्शयति—खे इति ॥ खे आकाशे खानि शरीरमच्छिद्राणि विनिर्दिशेत् इमानि खानि खे विलापयामीति प्रयुञ्जीत । ततः अभिनिवेशयेत् विलापयेदिति क्रियाद्वयेन सर्वेषामन्वयः । निश्वासान् प्राणापानादीन् वायौ उष्माणं तेजसि असृक् रुधिरं च श्लेष्माणं पूयं मूत्रादि च तान्यप्सु शेषमस्थिमांसादिकं कठिनांशं क्षितौ एवं यथोद्भवं यद्यत उत्पन्नं तत् तस्मिन् विनिर्दिशेत्ततोऽभिनिवेशयेत् ॥ २५ ॥

स्थूलशरीरस्य लयमुक्त्व लिङ्गशरीरस्याह—वाचमिति ॥ तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहङ्कारेषु लयो वाच्यः । अधिदैवेभ्यस्तु नेन्द्रियाणामुत्पत्तिरिति तत्र तेषां लयानुसन्धानकथनमसङ्गतं तथापि तेषां तत्र लयानुसन्धानमद्वितीयात्मप्रतिपत्तयेऽतो यथाकथंचिद्वये न भाव्ये देवानामिन्द्रियप्रवर्तकत्वेन प्राधान्यादिन्द्रियतद्विषययोर्देवतासु लयः कथ्यते । वक्तव्यम् उक्तिः भावे तव्यः स वक्तव्यां सोक्तिकां वाचं वागिन्द्रियमग्नौ विनिर्दिशेत् ततोऽभिनिवेशयेत् । करौ शिल्पमादानादिरूपं व्यापारं चेन्द्रे तदधिदैवते गत्या सह पादौ वयसि कालात्मके विष्णौ रत्या सहोपस्थेन्द्रियं प्रजापतौ विनिर्दिशेत् ततोऽभिनिवेशयेत् अग्रेऽप्येवम् ॥ २६ ॥ मृत्याविति ॥ विसर्गः पुरीषोत्सर्गः तत्सहितं पायुमिन्द्रियं मृत्यौ तदधिदैवते यथास्थानं तदनतिक्रमेण विनिर्दिशेद्विलयमनुसन्दधीत स वानप्रस्थः नादेन शब्देन विषयेण सह श्रोत्रमिन्द्रियं दिक्षु तदधिदेवतासु विनिर्दिशेत् । तथा स्पर्शं विषयं त्वचमिन्द्रियं च अध्यात्मनि वायौ तदधिदैवते विनिर्दिशेत् ॥ २७ ॥ रूपाणीति ॥ हे राजन् युधिष्ठिर चक्षुषेन्द्रियेण सह रूपाणि तद्विषयभूतानि ज्योतिषि सूर्ये तदधिदैवते अभिनिवेशयेत् विलयं भावयेत् रसगन्धयोस्तु इन्द्रियाद्याकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्य

> वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि ॥ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ॥ दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥ २७ ॥ रूपाणि चक्षुषा राजन् ज्योतींष्यभिनिवेशयेत् ॥ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥ २८ ॥ मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ कर्माण्यध्यात्मना रुद्रे यदहंममता क्रिया ॥ सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥

विषये लयमाह । अप्स्विति । प्रचेतसा वरुणेनाधिदैवेन सह जिह्वां रसनेन्द्रियमप्सु अप्शब्दोपलक्षितरसेषु अभिनिवेशयेत् । घ्राणशब्देनाश्विनोरपि ग्रहणम् । आश्विभ्यां सह घ्राणं घ्रेयैर्गन्धैरुपलक्षितायां क्षितौ अभिनिवेशयेत् इत्युत्तरार्द्धं स्वामिपादाः व्याचक्षते । परे तु प्रकरणस्वारस्यात् प्रकृष्टं चेतो यत्र स प्रचेताः मधुरादिरसस्तेन सह जिह्वाम् अप्सु जलाधिष्ठातरि वरुणे न्यसेत् । घ्रेयैः विविधगन्धैः सह घ्राणेन्द्रियं क्षितौ क्षीयतेऽत्रेति क्षितिस्तदधिष्ठातृदेवता तस्यामश्विनोरित्यर्थ इति व्याचक्षते ॥ २८ ॥ मन इति ॥ मनोरथैः व्यापारैः सह मन इन्द्रियमधिदैवते चन्द्रे न्यसेत् । बोध्यैर्विषयैः सह बुद्धिं परे श्रेष्ठे कवौ चतुर्मुखे न्यसेत् अध्यात्मना अहङ्कारेण सह तत्कर्माणि देहाद्याभिमानरूपाणि तदधिदैवते रुद्रे न्यसेत् । अध्यात्मतामिति पाठे कर्माण्यहङ्कारं चेत्यर्थः । यद्यस्मादहङ्कारात् देहादावहं बुद्धिस्तदनुबन्धिषु ममता तन्मूलाः क्रियाः प्रवृत्तयश्च भवन्ति । सत्वेन सत्वगुणकार्यस्वच्छत्वप्रकाशत्वादिरूपचित्तवृत्त्या सह चित्तं क्षेत्रज्ञसंज्ञके जीवे न्यसेत् । गुणैस्तत्कार्यैः प्रागवशिष्टैर्देवैः सह वैकारिकं सात्विकाहङ्कारं परे तत्कारणे महत्तत्त्वे न्यसेत् । यद्वा । सत्वादिभिर्गुणैर्हेतुभूतैर्वैकारिकं भोक्तृत्वादिविकारवन्तं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि न्यसेदिति ॥ २९ ॥

ननु विकारवतः कथमविकारे लयः स्यादित्याशंक्य विकारहेतूनां सर्वोपाधीनां लयद्वारेणेत्याह—अप्स्विति ॥ क्षितिमप्सु न्यसेत् । अपः ज्योतिषि न्यसेत् । अपो ज्योतिर्वायौ न्यसेत् अमुं वायुं नभसि आकाशे न्यसेत् । तच्चाकाशं कूटस्थे तामसाहङ्कारे न्यसेत् । तच्च कूटस्थं महति न्यसेत् । महत्तत्वमव्यक्ते प्रधाने न्यसेत् । प्रधानं च अक्षरे ब्रह्मणि न्यसेदिति ॥ ३० ॥ इतीति ॥ इत्येवं सर्वोपाधिविलयाद्धेतोः अवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वा अथ अद्वयः सन् वानप्रस्थः कृत्याद्विरमेदित्यन्वयः । तत्र दृष्टान्तमाह । दग्धेति । यथा निर्दग्धकाष्ठोऽग्निः दाहाद्विरमति तद्वदित्यर्थः ॥ ३१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ द्वादशे गङ्गासहायः सप्तमस्य व्यधादिमाम् ॥ १२ ॥ त्रयोदशे यतेर्धर्माः साधकस्येतरस्य च ॥ अवधूतेतिहासोऽत्र श्लोकाः सार्द्धाः षडर्थ्यर्थः[४६]॥चत्वार्युवाचेत्यङ्घ्रूनाः[४] सप्तवेदा अनुष्टुभः[४६]॥ ॥ १३ ॥ कल्प इति ॥ वनस्थधर्मे आन्वीक्षिक्यां च विद्यायां योऽसमर्थः स एवमद्वितीयमात्मानं ध्यायन् अनशनादिकं कुर्यादित्युक्तम् । यस्त्वान्वीक्षिक्यां विद्यायां कल्पः

अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ॥ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥ ३०॥ इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम् ॥ ज्ञात्वाऽद्वयोथ विरमेद् दग्धयोनिरिवानलः ॥ ३१ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ नारद उवाच ॥ कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ॥ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥ बिभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दण्डलिङ्गादेरन्यत् किंचिदनापदि ॥ २ ॥ एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ॥ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥ सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् ॥ पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥

समर्थः स एवं ध्यात्वा परिव्रज्य संन्यस्य विधिपूर्वकं सर्वं त्यक्त्वा देहमात्रेणावशेषितः सन् ग्रामैकरात्रविधिना एकैकस्मिन् ग्राम एकैकां रात्रिं नयेत् इति विधिना निरपेक्षः विषयाभिलाषशून्यः सन् महीं चरेत् ॥ १ ॥ बिभृयादिति ॥ किं च वासो न बिभृयात् यद्यसौ संन्यासी वासः बिभृयात्तदा कौपीनं मेढ्रमाच्छाद्यते येन परं केवलं तावन्मात्रमेव बिभृयात् । संन्यासे यत् त्यक्तं व्यावहारिकजनसङ्गादि तदपि न बिभृयात् । अनापदि लिङ्गदण्डादिकादन्यत् किंचिद्वस्तु न बिभृयात् । आपदि तु देहसंरक्षार्थं कम्बलौषधशय्यादेस्त्यक्तस्यापि ग्रहणे न दोष इत्यर्थः ॥ २॥ एक इति ॥ भिक्षुः भिक्षान्नोपजीवी आत्मारामः सर्वभूतसुहृत् शान्तः नारायणपरायणः अनपाश्रयः राजाद्याश्रयरहित एक एव चरेत् ॥ ३ ॥ पश्येदिति ॥ सदसतः परे इति कार्यकारणात्मकप्रपञ्चातीते अव्यये क्षयशून्ये आत्मन्यदो विश्वं पश्येत् तथा सदसन्मये प्रपञ्चे सर्वत्र परं ब्रह्म आत्मानं पश्येत् ॥ ४ ॥ सुप्तेति ॥ सुषुप्तौ हि तमसावृतमात्मतत्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते सन्धौ तु न तमो नापि विक्षेपः अतस्तदा आत्मदृक् आत्मानं

लक्षीकृत्य स्थितः सन्नात्मनो गतिं तत्त्वं पश्यन् अत एव बन्धं मोक्षं च मायामात्रमविद्यया देहाद्यध्यासेन कल्पितं न वस्तुत इति पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यनुषङ्गः । तदुक्तम् । " निद्रादौ जागरस्यान्ते यो भाव उपजायते । तं भावं भावयन्नित्यं मुच्यते नेतरो यतिः ॥ " इति ॥ ५ ॥ नेति ॥ यथा अज्ञो जनो निश्चितमपि मृत्युं दुःखानुभवदशायामभिवाञ्छति सुखानुभवावस्थायां त्वध्रुवमपि जीवितमभिनन्दति तथा अस्य देहस्य ध्रुवं निश्चितमपि मृत्युं नाभिनन्देत् तथा अध्रुवमपि जीवितं नाभिनन्देत् इति उभयमपि नाभिनन्देत् । परं केवलं भूतानां प्रभवोऽप्ययश्च यस्मात्तं कालमेव प्रतीक्षेत प्रतिपालयेत् ॥ ६ ॥ नेति ॥ असच्छास्त्रेषु अनात्मपरेषु नाटकादिषु न सज्जेत आसक्तो न भवेत् । जीविकां नोपजीवेत शास्त्रेण जीविकां न सम्पादयेत् तङ्गार्षः । पूर्वमध्यापनस्य तु गृहस्थस्यैव ब्राह्मणस्य जीविकात्वेनोक्तत्वात् वादवादान् वितण्डादिनिष्ठान् ज्ञानोपासनादिविरोधितर्कान् त्यजेत् कमपि पक्षं निर्बन्धेन नाश्रयेत् ॥ ७ ॥ नेति ॥ वृत्तिहेतोः शिष्यान्नानुबध्नीत प्रलोभनबलादिना नापादयेत् । तङ्गार्षः । बहून् ग्रन्थान्नैवाभ्यसेत् पूर्वोक्तपरमात्मपरत्वविरोधित्वात् । अत एव ग्रन्थानां व्याख्यां नोपयुञ्जीत अन्यान्न पाठयेत् । आरम्भान् निषिद्धान् मठादिव्यापारान् क्वचिदपि

नाभिनन्देद्ध्रुवं मृत्युमध्रुवं वाऽस्य जीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम्॥६॥नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥ वादवादांस्त्यजेत् तर्कान्पक्षं कंचन संश्रयेत् ॥७॥ न शीष्याननुबध्नीत ग्रन्थान् नैवाभ्यसेद्बहून् ॥ न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥८॥ न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ॥ शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥ अव्यक्तलिङ्गोऽव्यक्तार्थो मनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥

नारभेत् निग्रहादिना वैषम्यप्रसङ्गात् तङ्गाव आर्षः ॥ ८ ॥ परमहंसस्य विशेषमाह—न यतेरिति ॥ महात्मनः शान्तस्य समचित्तस्य यतेराश्रमः प्रायो धर्महेतुर्न भवति किं बहुना विहितं दण्डादिलिङ्गमपि लोकसंग्रहार्थं बिभृयात् धारयेत् । उत वा अथवा त्यजेत् अयं भावः । यतिर्द्विधा सिद्धः साधकश्च तत्र साधकस्याज्ञस्य क्वचिद्धर्महेतुरपि भवतीति तदभिप्रायेण प्रायग्रहणं तेन ज्ञानोत्पत्तिपर्यन्तं बहूदकादिलिङ्गमाश्रित्य सत्वशुद्ध्यर्थं यमनियमान् आचरन्नेव ज्ञानोत्पत्त्यै यतेत । उत्पन्नज्ञानस्य परमहंसस्य सिद्धस्य न नियमैः कृत्यमस्ति । यमास्तु स्वत एव स्युः अतस्तदा लिङ्गादिभिः प्रयोजनाभावाल्लोकसंग्रहार्थं धारयेद्वा त्यजेद्वेति ॥ ९ ॥ अव्यक्तेति ॥ अव्यक्तं न बहिर्व्यक्तं वर्णाश्रमचिह्नं यस्य व्यक्तोऽर्थः प्रयोजनमात्मानुसन्धानं यस्य सः । यद्वा । अव्यक्तार्थ इति च्छेदः । परैरविदितप्रयोजन इत्यर्थः । स मनीष्यपि उन्मत्तवद्बालवदज्ञवच्च कविर्वाग्म्यपि मूकवदात्मानं नृणां दृष्ट्या दर्शयेत् ते तं यथोन्मत्तादिरूपं मन्येरंस्तथा वर्तेत । स्वदृष्ट्येति पाठे बाह्यानुसन्धानाभावेनेत्यर्थः ॥ १० ॥ अत्रापीति ॥ अत्रापि स्वमाहात्म्याच्छादनेनावस्थानेऽपि प्रह्लादस्य आजगरस्य अजगरवृत्तस्य मुनेः प्रह्लादादिभ्य ऊचिवानिति ज्ञापकात् दत्तात्रेयस्य च संवादरूपं पुरातनमिममितिहासमुदाहरन्ति

दृष्टान्तत्वेन बुधा दर्शयन्तीत्यर्थः । अजगरवृत्तं नाम एकत्र स्थित्या प्रारब्धकर्मभोगः ॥ ११ ॥ तमिति युग्मम् ॥ लोकानां प्राणिनां तत्वस्य साधुत्वलक्षणस्य विवित्सया वेदितुमिच्छया इडभाव आर्षः । विन्दतेर्वा ज्ञानार्थताकल्पनं कतिपयैरमात्यादिभिर्वृतो लोकान् विचरन् भगवत्प्रियः प्रह्लादः तं मुनिं कावेर्यां कावेरीनदीतीरे सह्याख्यस्य पर्वतस्य सानुनि धरोपस्थे भूमौ शयानं रजस्वलै रजोभिर्धूसरैः तनूदेशैर्देहावयवैर्निगूढममलं तेजो यस्य तं ददर्श ॥ १२ ॥ १३ ॥ कर्मणेति ॥ दृष्ट्वा च यं कर्मादिभिः संसिद्धावस्थापन्नो वासौ न वेति जनाः न विदन्ति न जानन्ति ॥ १४ ॥ तमिति ॥ तं विधिवदभ्यर्च्य पूजयित्वा पादयोः शिरसा स्पृशन्नत्वा ततस्तत्वं विवित्सुर्विविदिषुः अनिट्त्वं पूर्ववत् । महाभागवतोऽसुरः प्रह्लाद इदं वक्ष्यमाणमप्राक्षीत् पृष्टवान् ॥ १५ ॥ बिभर्षीति सार्द्धम् ॥ सोद्यमस्य वित्तं भवति ततश्च भोगः सिध्यति स सोद्यमः भोगवान् यथा पीवानं स्थूलं कायं बिभर्ति तथा त्वमुद्यमादिरहितोऽपि पीवानं कायं बिभर्षि तद्वदेति शेषः । तदेव स्फुटयति । वित्तमिति । इह लोके उद्यमवताम् एव वित्तं भवति

तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥ ददर्श लोकान्विचरन् लोकतत्त्वविवित्सया ॥ वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥ कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ॥ न विदन्ति जना यं वै सोऽसाविति न वेत्ति च ॥ १४ ॥ तं नत्वाऽभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ॥ वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ॥ भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १६ ॥ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नुहार्थो यत एव भोगः ॥ अभोगिनोऽयं तव विप्र देहः पीवा यतस्तद्वद नः क्षमं चेत् ॥१७॥ कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ॥ लोकस्य कुर्वतः कर्म शेषे तद्वीक्षिताऽपि वा ॥ १८ ॥ नारद उवाच ॥ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥ स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥

वित्तवतामेव भोगो भवति भोगिनामेवायं पाञ्चभौतिकत्वाद्देहः पीवा भवति । अन्यथा भोगं विना पीवा न भवति ॥ १६ ॥ नेति ॥ हे ब्रह्मन् हे विप्र निरुद्यमस्य शयानस्य च ते तव अर्थो वित्तं नास्त्येव यत एव वित्ताद्भोगः स्यात् इति अतः अभोगिनः भोगरहितस्यापि तवायं पाञ्चभौतिकत्वेन प्रतीयमानो देहो यतः कारणात् पीवा तत्क्षमं नः श्रोतुं योग्यं चेत् तदा वदेति ॥ १७ ॥ कविरिति ॥ कविर्वाग्व्यवहारे निपुणः कल्पः समर्थः निपुणदृक् चतुरः चित्राः प्रियाः लोकरञ्जनाः कथा यस्य सः तथापि तत्तत्कर्म कुर्वतः सतः तद्वीक्षितापि वा तत्सर्वं पश्यन्नपि समः उदासीनः सन् शेषे शयनं करोषि तत्र किं कारणमिति शेषः । न द्वेक्षि नौषि वा इति पाठे न तत्कर्मद्वेक्षि नौषि वा न च स्तौषीत्यर्थः॥१८॥स इति॥ स महामुनिर्दैत्यपतिना प्रह्लादेनेत्थं परिपृष्टस्तस्य वागेवामृतं तेन यन्त्रितो वशीकृतश्च सन् स्मयमानस्तमभ्याह स्म उत्तरं दत्तवान्॥१९॥

वेदेति ॥ हे असुरश्रेष्ठ आर्याणां ज्ञानिनां सर्वज्ञत्वेन संमतः भवान् अध्यात्मचक्षुषा अन्तर्दृष्ट्या इदं लोकचरितं वेद जानात्येव तथा नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानि च वेद ॥ २० ॥ यस्येति ॥ केवलया अनन्यप्रयोजनया भक्त्या यस्य तव हृद्गतः सन्नारायणो देवः भगवान् सदा अज्ञानं धुनोति । अर्कः सूर्यो यथा ध्वान्तमन्धकारं धुनोति तद्वदित्यर्थः ॥ २१ ॥ अथेति ॥ यद्यपि भवान् सर्वं वेद अथापि हे राजन् यथाश्रुतं तव प्रश्नान्प्रति ब्रूमहे प्रश्नानामुत्तराणि वदामि । यथा श्रुतमित्यौद्धत्यपरिहारायोक्तम् । हि यस्मादात्मनः अन्तःकरणस्य शुद्धिमिच्छतां भगवद्भक्तत्वाद्भवान् संभाषणीयोऽसि ॥ २२ ॥ स्वस्य निरुद्यमत्वे तावद्धेतुमाह—तृष्णयेति ॥ योग्यैः कामैः अपूरया पूरयितुमशक्यया भववाहिन्या जन्मपरम्पराकारिण्या तृष्णया नद्या कर्माणि कार्यमाणः अहं पूर्वं नानायोनिषु योजितः ॥ २३ ॥ यदृच्छयेति ॥ कर्मभिर्भ्रमन्नहं सम्प्रति पुण्येन स्वर्गस्य द्वारं साधनं ज्ञानभक्तिभ्यामपवर्गस्य द्वारं पापेन तिरश्चां श्वशूकरादियोनेर्द्वारं पुण्यपापमिश्रेण कर्मणा पुनरस्य मनुष्यलो-

**ब्राह्मण उवाच ॥ वेदेदमसुरश्रेष्ठ भवानन्वार्यसंमतः ॥ ईहोपरमयोर्नॄणां पदान्यध्यात्मचक्षुषा ॥२०॥ यस्य नारायणो देवो भगवान् हृद्गतः सदा ॥ भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत् ॥२१॥ अथापि ब्रूमहे प्रश्नांस्तव राजन् यथा श्रुतम् ॥ संभावनीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥२२॥ तृष्णया भववाहिन्या योग्यैःकामैरपूरया ॥ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥२३॥ यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥२४॥ अत्रापि दम्पतीनां च सुखायान्यापनुत्तये ॥ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥२५॥ सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः ॥ मनः संस्पर्शजान् दृष्ट्वा भोगान्स्वप्स्यामि संविशन् ॥२६॥ इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ॥ विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥ जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ॥ मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक् स्वतः ॥ २८ ॥**

कस्य द्वारम् इमं लोकं मनुष्यदेहं यदृच्छया प्रापितः ॥ ४ ॥ अत्रेति ॥ अत्र मनुष्यजन्मन्यपि सुखप्राप्तये अन्यस्य दुःखस्यापनुत्तये निवृत्तये च कर्माणि कुर्वतां दम्पतीनां फलविपर्ययं दुःखप्राप्तिरूपं दृष्ट्वा सर्वेभ्यः कर्मभ्यो निवृत्तोस्मि ॥२५॥ ननु निवृत्त्या कथं सुखं तत्राह—सुखमिति॥ सुखं हि अस्य जीवात्मनः स्वरूपमेव सर्वेहोपरतिः सर्वक्रियानिवृत्तिः तनोतीति तनुः प्रकाशश्च सर्वक्रियानिवृत्तौ स्वयं प्रकाशत इत्यर्थः । यद्वा । सुखमात्मनो रूपमेव सर्वेहोपरतिश्च तनुः यथा तनुं विना सुखं न प्रकाशते तथा सर्वेहोपरतिं विना सुखं न प्रकाशते अतः भोगान् मनआदीन्द्रियसंस्पर्शाज्जातान्दृष्ट्वा एकत्र संविशन् तिष्ठन् प्रारब्धान् भोगान् भुंजान एव स्वप्स्यामि । स्वपि मिलडर्थे लृडार्षः ॥ ॥ २६ ॥ इतीति ॥ इत्येतदात्मनः स्वरूपं भूतं पुरुषार्थं सन्तं स्वस्मिन्नेव विद्यमानं पुमान् विस्मृत्य वै द्वैते असति दुःखहेतुभूते घोरां जन्ममरणादिभिर्भयंकरां विचित्रं देवतिर्यङ्नरादिनानारूपां संसृतिमाप्नोति ॥ २७ ॥ जलमिति ॥ अज्ञो जनो यथा तदुद्भवैर्जलोद्भवैस्तृणशैवालादिभिश्छन्नं जलं हित्वा त्यक्त्वा जलकाम्यया जलस्य इच्छया

मृगतृष्णां मरीचितोयमुपाधावेत् तथा स्वतः पुरुषार्थभूतादात्मनः सकाशादन्यत्र विषयेषु अर्थदृक् पुरुषार्थं पश्यन्नात्मानं हित्वा विषयानुपधावति ॥ २८ ॥ स्वस्य निरुद्यमत्वे हेतुमुक्त्वा विपर्ययं दृष्ट्वेत्युक्तं विवृणोति—देहेति ॥ दैवतन्त्रैः कर्माधीनैर्देहेन्द्रियादिभिरात्मनः स्वस्य सुखं दुःखस्यात्ययं निवृत्तिं चेहतः इच्छतः अनीशस्य कृताः कृताः पुनः पुनरारब्धाः क्रियाः मोघा व्यर्था भवन्तीत्यर्थः । न सुखजनिका नापि दुःखनिवर्तिका भवंति ॥ २९ ॥ आध्यात्मिकेति ॥ आध्यात्मिकाधिभौतिकाधिदैविकैः दुःखैः कर्हिचित्कदाचिदप्यविमुक्तस्य मर्त्यस्य मरणशीलस्य कृच्छ्रोपनतैर्दुःखेनोपार्जितैरर्थैर्वित्तैस्तन्निमित्तैः कामैश्च विषयैश्च किं कियत्सुखं क्रियेत ॥ ३० ॥ कृच्छ्रं विना लब्धेप्यर्थे दुःखमाह—पश्यामीति ॥ लुब्धानाम् अजितात्मनाम् धनापहारभयान्न लब्धा निद्रा यैस्तेषां सर्वतः पितृपुत्रादिभ्योऽप्ययमपहरिष्यतीति शंकावतां धनिनां क्लेशं पश्यामि ॥ ॥ ३१ ॥ राजत इति ॥ राजादिभ्यो नित्यमेव प्राणेच्छावतामर्थवतां धनेच्छूनां च भयम् । तत्र स्वस्मात् मत्त एव कथंचित्त्यागभोगविस्मरणादिना नाशः स्यादिति प्राणोत्र

देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ॥ दुःखात्ययं चानीशस्य क्रिया मोघाः कृताकृताः ॥ २९ ॥ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥ मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥ पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणां सर्वतोऽभिविशङ्किनाम् ॥ ३१ ॥ राजतश्चोरतः शत्रोः स्वजनात् पशुपक्षितः ॥ अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥ मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥३४॥ विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ॥ कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिम्॥३५॥ अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ॥ नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३६ ॥

संभोगादिप्रयोजकं शरीरबलं ज्ञेयं जीवनमात्रं तु विहितमेव जीवस्य तत्वजिज्ञासेत्यादौ इत्याहुः ॥ ३२ ॥ शोकेति ॥ नृणां यौ प्राणार्थौ मूलं येषां तादृशाः शोकादयः स्युः तयोः प्राणार्थयोर्बुधः स्पृहां जह्यात् शरीरबलाधिक्यार्थं च न यतेत स्वल्पाभ्यामपि धनबलाभ्यां पारमार्थिककार्यसिद्धेरिति भावः । तत्र विनाशे शोकः विद्यमाने मोहो भयं च अपहारके क्रोधः तत्राकिंचित्करत्वे क्लैब्यम् उपार्जने श्रमः तत्र सहकारिणि रागः आदिपदेन कलहमत्सरदैन्यादिपरिग्रहः ॥ ३३ ॥ मधुकारेति ॥ मधुकारो मधुमक्षिका महासर्पोऽजगरस्तौ नोस्माकमस्मिन् लोके गुरुषु उत्तमौ ययोः शिक्षया वृत्तपर्यालोचनया यथाक्रमं वयं वैराग्यं परितोषं च प्राप्ताः ॥३४॥ विराग इति ॥ सर्वकामेभ्यः सर्वविषयेभ्यो विरागो मे मया मधुव्रतात् मधुकराच्छिक्षितः कृच्छ्रेण मधुवत् आप्तमपि वित्तं तत्पतिं हत्वान्यो हरेदिति किं वित्तेनानर्थहेतुत्वादित्यर्थः । मधुवदिति । यथा मधुव्रतैः कृच्छ्रेण सञ्चितं मधु मधुव्रतान् हत्वान्यो हरति तद्वदित्यर्थः ॥ ३५ ॥ अनीह इति ॥ अनीहो निर्व्यापारोप्यहं यदृच्छयोपनतात् दैवाल्लब्धात् परितुष्टः आत्मा मनो

यस्य तथा भूतः अस्मि नोचेत् यदृच्छोपनतं न चेत् तदापि सत्ववान् धैर्यवान् सन् महाहिरजगर इव वह्वहानि शये शयानो भवामि असंज्ञायां सङ्ख्यासमास आर्षः ॥३६॥ पीनत्वे हेतुं वदन् परितोषं प्रपञ्चयति–क्वचिदिति ॥ क्वचित्कदाचित् अल्पं क्वचित् भूरि बहु क्वचित् साधु रसवत् क्वचित् असाधु रसवर्जितं वा स्वाद्वस्वादु वेतिपाठः। क्वचिद्भूरिगुणोपेतं सौरभ्यादिगुणयुक्तं उताथवा क्वचिद्गुणहीनं वाहं भुञ्जे ॥ ३७ ॥ श्रद्धयेति ॥ यदृच्छया क्वापि श्रद्धयोपाहृतमानीतं भुक्त्वा कदाचिन्मानवर्जितं भुञ्जे अथ कस्मिंश्चिद्देशे दिवा दिवसे कस्मिंश्चिद्देशे च नक्तं रात्रौ भुञ्जे ॥ ३८ ॥ क्षौममिति ॥ एवं दिष्टभुक् प्रारब्धकर्मफलभोगी तुष्टधीरहं वस्त्रमपि क्षौमदुकूलाद्यन्यतममन्यदपि वा यदृच्छया सम्प्राप्तं वसे परिदधे चीरं जीर्णवस्त्रखण्डम् ॥३९॥ क्वचिदिति ॥ क्वचिद्धरोपस्थे भूपृष्ठे क्वचित्तृणादिषु क्वचिच्च परेच्छया प्रासादमध्ये पर्यङ्के तत्रापि क्वचित् कशिपौ तूलिकायाम् वा शब्दात्तं विनापि शये स्वपिमि ॥ ४० ॥ क्वचिदिति ॥ हे विभो प्रह्लाद क्वचित्परेच्छयैव स्नातः अनुलिप्तं चन्दनादिनाङ्गं यस्य सः सुवासाः स्रग्वी अलं-

क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं स्वाद्वऽस्वादु वा ॥ क्वचिद् भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥३७॥ श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम् ॥ भुञ्जे भुक्त्वाथ कस्मिंश्चिद्दिवानक्तं यदृच्छया ॥३८॥ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा॥ वसेऽन्यदपि संप्राप्तं दिष्टभुक्तुष्टधीरहम् ॥३९॥ क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥ क्वचित्स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलंकृतः ॥ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥४१॥ नाहं निन्दे न च स्तौमि स्वभावविषमं जनम् ॥ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि॥४२॥ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥ मनो वैकारिके हुत्वा तन्मायायां जुहोत्यनु ॥ ४३ ॥ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ् मुनिः ॥ ततो निरीहो विरमेत्स्वानुभूत्यात्मनि स्थितः ॥ ४४ ॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ॥ व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्प्रियः ॥ ४५ ॥

कृतश्चाहं रथादिभिर्यानैश्चरे सञ्चरामि तङार्षः । क्वचिच्च दिग्वासा नग्न एव ग्रहवद्ग्रहग्रस्तोन्मत्तवच्चरे ॥ ४१ ॥ नेति ॥ स्वभावतः सत्वादिगुणतः एव विषममतस्तस्य सर्वस्य जनस्य गुणाधीनप्रवृत्तित्वादपमानकर्तारं जनमहं न निन्देत निन्दामि नच सम्मानकर्तारं स्तौमि उत अपितु एतेषां जनानां सर्वेषां महात्मनि ब्रह्मणि ऐकात्म्यरूपं श्रेयः आशासे ॥ ४२ ॥ विकल्पमिति ॥ विकल्पं जातिरूपादिभेदं चित्तौ भेदग्राहकमनोवृत्तौ जुहुयात् ऐक्यं भावयेत् तां वृत्तिमर्थस्य देहात्मादिपदार्थस्य विभ्रमो विपर्ययो यस्मिंस्तस्मिन् मनसि जुहुयात् मनो वैकारिके स्वकारणे सात्विकाहंकारे हुत्वा अनु अनन्तरं तमहंकारं महत्तत्वद्वारा मायायां जुहोति जुहुयात् ॥४३॥ आत्मेति ॥ मुनिर्मननशीलः तां मायामात्मानुभूतौ स्वयंप्रकाशे ब्रह्मणि जुहुयात् ततश्च सत्यमेव परमात्मानं पश्यतीति तथा भूतः स्वानुभूत्यात्मनि स्वप्रकाशात्मनि स्थितः निरीहः सर्वक्रियाशून्यश्च सन् कृत्यादिरमेत् ॥४४॥ स्वात्मेति ॥ मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं तन्मर्यादारहितम् नतु तत्वदृष्ट्या सुगुप्तमपि स्वस्यात्मन इदं वृत्तं मया ते तुभ्यं वर्णितं हि यस्माद्भवान्

भगवत्प्रिय इति भगवत्पर इति पाठान्तरम् ॥ ४५ ॥ धर्ममिति ॥ एवम् असुरेश्वरः प्रह्लादः मुनेः सकाशात् पारमहंस्यं परमहंससम्बन्धिनं धर्मं श्रुत्वा तं पूजयित्वा आमन्त्र्य पृष्ट्वा च प्रीतः संस्ततः स्थानात्स्वगृहं प्रययौ ॥ ४६ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गंगासहायोऽरचयत् सप्तमस्य त्रयोदशे ॥ १३ ॥ चतुर्दशे गृहस्थस्य परमो धर्म ईरितः॥कालादिभिर्विशेषोत्र श्लोकाः सार्द्धा द्विसिंधवः॥ तावत्योनुष्टुभोप्यत्रोवाचेति द्वितयं तथा ॥१४॥ गृहस्थ इति ॥ हे देवर्षे ऋत्यक इति प्रकृतिभावः । गृहे मूढा प्रसक्ता धीर्यस्य स मादृशो गृहस्थः एतां पूर्वोक्तां मोक्षलक्षणां पदवीं गतिं येन विधिना प्रकारेण अञ्जसा सुखेन याति तं ब्रूहि ॥ १ ॥ गृहेष्विति ॥ हे राजन् गृहेष्ववस्थितः गृहस्थः प्रतिदिनं गृहोचिताः स्नानतर्पणसन्ध्योपासनपञ्चमहायज्ञादिरूपाः साक्षात् फलसंकल्पमन्तरेण वासुदेवार्पणं यथा भवति तथा कुर्वन् महामुनीन् भगवद्भक्तान् उपासीत सेवेत॥२॥ शृण्वन्निति युग्मम् ॥ यथाकालमावश्यककर्मानुष्ठानावशेषितं कालमुपशान्तजनैर्भगवद्भक्तैरावृतस्तेषां संगाद्भगवतोवतारकथामृतमभीक्ष्णं श्रद्दधानः सन्

नारद उवाच ॥ धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम् ॥ ४६ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे प्रह्लादाय दत्तात्रेयेण पारमहंस्यधर्मवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चाञ्जसा ॥ याति देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १॥ नारद उवाच ॥ गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः॥ वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ २ ॥ शृण्वन् भगवतोऽभीक्ष्णमवतारकथाऽमृतम् ॥ श्रद्दधानो यथाकालमुपशान्तजनावृतः ॥ ३ ॥ सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥४॥ यावदर्थमुदासीनो देहे गेहे च पण्डितः॥ विरक्तो रक्तवत् तत्र नृलोके नरतां न्यसेत् ॥ ५ ॥ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ॥ यद् वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः ॥ ६ ॥ दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् ॥ तत सर्वमुपभुञ्जान एतत् कुर्यात्स्वतो बुधः ॥ ७ ॥

शृण्वन् कथाश्रवणकाले च वार्तान्तरमशृण्वन् इति मुच्यमानेषु स्वयमेव वियुज्यमानेषु आत्मजायात्मजादिषु देहकलत्रपुत्रादिषु संगमहं ममेत्यभिमानम् उत्थितः स्वप्नवत् शनकैर्विमुञ्चेत् यथा शयनादुत्थितः प्रबुद्धः पुरुषः स्वप्नदृष्टेषु पुत्रादिषु सङ्गं विमुञ्चति तद्वदित्यर्थः । तत्र तस्येवेति वतिः स्वप्नशब्देन स्वप्नदृष्टा लक्ष्यन्ते ॥३॥४॥ यावदिति ॥ यावतार्थः प्राणधारणं क्रियानिर्वाहश्च तावदेव भोग्यवस्तूनि उपासीनः स्वीकुर्वन् पण्डितः अन्तर्देहगेहादिषु विरक्तोपि बहिस्तत्र रक्तवत् आसक्तवत् नृलोके जनमध्ये नरतां मनुष्यत्वं न्यसेत् पुरुषकारमाविष्कुर्यात् ॥ ५ ॥ अन्तर्विरक्ततां बहिः सरक्ततां च स्पष्टयति—ज्ञातय इति ॥ ज्ञात्यादयो यद्वदन्ति यच्चेच्छन्ति तत्सर्वं स्वयं निर्ममः सन्ननुमोदेत क्वाप्याग्रहं न कुर्यात् अन्यथा कलहादिना विक्षेपः स्यात् ॥ ६ ॥ नन्वेव सर्वानुमोदनेन वित्तक्षये कुतो निर्वाह इत्याशंक्याह—दिव्यमिति ॥ दिव्यं वृष्ट्यादिभिर्जातं

धान्यादि भौमं भूम्यां लब्धं सुवर्णादि आन्तरिक्षमकस्मात्प्राप्तम् एवं स्वत एव यदच्युतेन भगवता स्वप्रारब्धानुसारेण निर्मितं वित्तं तत्सर्वमुपयुञ्जानः स्वीकुर्वन् बुधः एतत् प्राणधारणादिकं कुर्यात् ॥ ७ ॥ यावदिति ॥ यावत् यावता जठरमुदरं भ्रियेत पूर्येत तावदेव देहिनां स्वत्वं तावत्स्वीकारे न दोषः । यस्तु ततोधिकमभिमन्येत स्वकीयत्वेनाङ्गीकुर्यात् स स्तेनः चोर एव अतो जन्ममरणादिदुःखानुभवलक्षणं दण्डमर्हति ॥ ८ ॥ मृगेति ॥ मृगादीनपि आत्मनः पुत्रवत्पश्येत् यथा पुत्रान् पालयति सुखान्न निवारयति तथा मृगादीनपि गृहं क्षेत्रं वा प्रविश्य भुञ्जानान्न निवारयेत् यतः तैः पुत्रैः एषां मृगादीनामन्तरं तारतम्यं कियत् न किञ्चिदपि स्वैकाश्रितत्वेन तुल्यत्वादित्यर्थः । मर्को मर्कटः सरीसृप् सर्पादिः ॥ ९ ॥ त्रिवर्गमिति ॥ गृहस्थोप्यतिकृच्छ्रेण त्रिवर्गं धर्मार्थकामाख्यं न भजेत न सेवेत किं त्वल्पायासेन यथादेशं यथाकालं देशकालानुसारेण यावद्दैवेनोपपादितं तावदेव भजेत ॥ १० ॥ आश्वाघेति ॥ श्वानश्च अघाश्च पतिताः अन्तेवसायिनश्च चांडालादयस्तानभिव्याप्य यथायथार्हं कामान्संविभजेत् स्वभोग्यात् विभज्य दद्यात् यतः यस्यां नृणां स्वत्वग्रहः।ममैवेयमित्याग्रहस्तामेकामप्यात्मनो दारामपि संविभजेत् आत्मनः सेवामनपेक्ष्यापि अतिथ्यादिशुश्रूषणे नियुंजीतेत्यर्थः। नान्यथा मन्तव्यं यथार्हं संविभजेदित्युक्तत्वात् दारशब्दस्यैकत्वं स्त्रीत्वं चार्षम् ॥ ११ ॥ जह्यादिति ॥ यदर्थे यन्निमित्तं स्वप्राणान् जह्यात् पितरं गुरुं वा हन्यात् तस्यां स्त्रियां यः स्वत्वं स्वकीयत्वाभिमानं जह्यात् त्यजेत् । अन्यैरजितोपि भगवांस्तेन जितो वशीकृतो भवति तत्प्रसादात्तस्य न किंचिद्दुर्लभमित्यर्थः ॥ १२ ॥ भार्यायां स्वत्वाभिमानत्यागे तत्वविचारमाह—कृमीति ॥ कृमिविड्भस्मसु निष्ठा पर्यवसानमन्ते यस्य तदिदं तुच्छं कलेवरं क्व तदीया देहार्था रतिर्यस्यां सा भार्या क्व स्वानन्दे न नभोपि छादयतीति तथायमात्मा क्व तथा च देहद्वयादावभिमानत्यागे आत्मानन्दो लभ्यतेऽतस्तत्राभिमानं त्यजेत् ॥ १३ ॥ सिद्धैरिति ॥ सिद्धैर्दैवलब्धैरन्नादिभिः शेष उदरभरणप्रमिताधिके स्वत्वाभिमानं त्यजन् यः प्राज्ञो विवेकी आत्मनो वृत्तिं कल्पयेत् स महतां निवृत्तानां परमहंसानां पदवीमियात्प्राप्नुयात् ॥ १४ ॥

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ ८ ॥ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ॥
आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥९॥ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ॥ यथादेशं यथाकालं यावद्दैवोपपादितम् ॥ १० ॥
आश्वाघान्तेऽवसायिभ्यः कामान् संविभजेद् यथा ॥ अप्येकामात्मनो दारान् नृणां स्वत्वग्रहो यतः ॥११॥ जह्याद् यदर्थे स्वप्राणान् हन्याद् वा
पितरं गुरुम् ॥ तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः ॥ १२॥ कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ॥ क्व तदीयरतिर्भार्या
क्वायमात्मा नभश्छदिः ॥ १३ ॥ सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः ॥ शेषे स्वत्वं त्यजन् प्राज्ञः पदवीं महतामियात् ॥ १४ ॥

देवानिति ॥ देवान् ऋषीन् नॄन् मनुष्यान् भूतानि पितॄंश्च पञ्चमहायज्ञदेवताः आत्मानं च स्ववृत्त्या याजनाध्यापनादिरूपया पूर्वोक्तया आगतेनोपार्जितेन वित्तेन पृथगन्वहम्-हरहर्यजन् पुरुषं सर्वान्तर्यामिणमेव यजेत ॥ १५ ॥ यर्हीति ॥ यर्हि आत्मनः स्वस्य अधिकाराद्याः सर्वाः यज्ञसंपदः स्युस्तदा वैतानिकेन वितानो यज्ञग्रन्थः श्रौतकल्पसू-त्रादिरूपस्तदुक्तेन विधिनाऽग्निहोत्रादिना पुरुषं यजेत् ॥ १६ ॥ नहीति ॥ हे राजन् हि यस्मात् सर्वयज्ञभुक् सर्वयज्ञभागभोक्ता तत्फलदातायं भगवान् श्रीकृष्णो यथा विप्रमुखे हुतैर्घृतान्नादिभिरिज्यते पूज्यते संतुष्यति तथाऽग्निमुखे हुतैर्हविर्भिः नैवेज्यते नैव संतुष्यति ॥ १७ ॥ तस्मादिति ॥ तस्मात् ब्राह्मणेषु देवेषु च पंचमहायज्ञदेवतासु तथा ब्राह्मणाननु ब्राह्मणेषु यजनानन्तरमन्येषु मर्त्यादिषु पश्वादिषु च यथार्हतः यथाशक्ति तैस्तैः कामैर्विषयैरेनं यज्ञभोक्तारं क्षेत्रज्ञं सर्वान्तर्यामिणं यजस्व ब्राह्मणाननमितिपाठे तु ब्राह्मणा आननं यस्य तमेनं क्षेत्रज्ञम् ॥ १८ ॥ कुर्यादिति ॥ द्विजस्त्रैवर्णिको यदि वित्तवांस्तदा यथावित्तं स्ववित्तानुसारेण प्रौष्ठपदे शुक्लादिमानेन भाद्रपदे मासि कृष्णादि-

देवान् ऋषीन् नृभूतानि पितॄनात्मानमन्वहम् ॥ स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ॥ १५॥ यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसंपदः ॥ वैतानिकेन विधिना अग्निहोत्रादिना यजेत्॥१६॥न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ॥ इज्यते हविषा राजन् यथा विप्रमुखे हुतैः॥१७॥ तस्माद् ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः ॥ तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणाननु ॥१८॥ कुर्यादापरपक्षीयं मासि प्रौष्ठपदे द्विजः॥श्राद्धं पित्रो-र्यथावित्तं तद्बन्धूनां च वित्तवान् ॥१९॥ अयने विषुवे कुर्याद् व्यतीपाते दिनक्षये ॥चन्द्रादित्योपरागे च द्वादशीश्रवणेषु च ॥२०॥ तृतीयायां मासि शुक्ले नवम्यामथ कार्तिके ॥ चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥२१॥ माघे च सितसप्तम्यां मघाराकासमागमे ॥राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २२ ॥ द्वादश्यामनुराधा स्याच्छ्रवणस्तिस्र उत्तराः ॥ तिसृष्वेकादशी वाऽऽसु जन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥

मानेनाश्विने इत्यर्थः । पित्रोस्तद्बन्धूनां चापरपक्षीयं कृष्णपक्षीयं श्राद्धं महालयाख्यं कुर्यात् ॥ १९ ॥ अयने इति चतुष्कम्॥ अयनादिकालेषु पित्रादिश्राद्धं कुर्यादित्यन्वयः। एवमग्रेपि तत्र अयनं कर्कटसंक्रान्तिः मकरसंक्रान्तिश्च विषुवं मेषसंक्रान्तिस्तुलासंक्रान्तिश्च व्यतीपातदिने दिनक्षये तिथिक्षयदिने चन्द्रादित्योपरागे चन्द्रसूर्यग्रहणसमये द्वाद-श्यां श्रवणेषु श्रवणादिषु त्रिषु शुक्लपक्षे तृतीयायां वैशाखशुक्लपक्षे अक्षयतृतीयायामित्यर्थः । कार्तिके शुक्लपक्षे नवम्यामक्षयनवम्याम् हेमन्ते शिशिरे च मार्गशीर्षादिमासच-तुष्टयेपि याश्चतस्रोष्टकास्तासु अष्टकासु “ सप्तम्यादित्रयं चैव तथा चैव त्रयोदशी । चतस्रस्त्वष्टकाः प्रोक्ताः सर्वयज्ञाद्विशेषतः ” ॥ इतिवचनाज्ज्ञेयाः । माघे च सितसप्तम्यां शुक्लसप्तम्यां सम्पूर्णचन्द्रा पौर्णमासी राका मघाराकयोः समागमे एककलान्यूनचन्द्रा पौर्णमासी अनुमतिः यदा राकानुमतिभ्यां युतानि मासर्क्षाणि मासनामप्रवृत्तिनिमित्तानि चैत्रादिपूर्णमासीषु चित्रादीनि नक्षत्राणि तदापीत्यन्वयः । यदा च द्वादश्यामनुराधाश्रवणः उत्तराफाल्गुनी उत्तराषाढा उत्तराभाद्रपदा चेति तिस्र उत्तराः स्युः आसु तिसृषूत्तरासु

एकादशी वा यदा स्यात् जन्मर्क्षं स्वीयजन्मनक्षत्रं तस्य श्रोणस्य श्रवणस्य वा योगेन युक्तं यद्दिनं स्यात्तदापि कुर्यात् योगग्रहणं संबन्धबाहुल्यार्थम् अत्र भागवतोः एकादशी चात्र दशमीविद्धा उपवासानर्हा ग्राह्या उक्तं च उपवासार्हायां तु श्राद्धनिषेधः " ये कुर्वन्ति महीपाल श्राद्धं चैकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता च प्रेरकः " इति । धर्मशास्त्रे तु एकादश्यां श्राद्धं कृत्वा श्राद्धशेषं जिघ्रेत् इत्यादि ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ त इति ॥ एते पूर्वोक्ताः अयनादयः न केवलं श्राद्धस्यैवकालाः अपि तु नृणां श्रेयसः पुण्यमात्रस्य कालाः अनुष्ठानस्य योग्याः कालाः यतः श्रेयो विवर्द्धनाः एतेषु स्वल्पमप्यनुष्ठितं साधनं महाफलं जनयति तस्मात् एतेषु कालेषु सर्वात्मना सर्वप्रयत्नेन श्रेयः वक्ष्यमाणं स्नानादिकं कुर्यात्तदा तस्यायुषः अमोघममोघत्वं साफल्यं भवति ॥ २४ ॥ एष्विति ॥ एषु कालेषु यत्स्नानादिकृतं यच्चापि पित्राद्युद्देशेन दत्तं भावेकः । दानं कृतं तद्धि अनश्वरमक्षयफलसाधनं भवतीत्यर्थः ॥ २५ ॥ संस्कारेति ॥ हे नृप यः जायादिसंस्कारस्य कालः यदा च प्रेतसंस्था प्रेतदाहादिकर्म यश्च मृताहस्तदा

त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ॥ कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २४ ॥ एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्यो यद् दत्तं तद् ह्यनश्वरम् ॥ २५ ॥ संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ॥ प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २६ ॥ अथ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान् ॥ २७ ॥ स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ॥ यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ ॥ २८ ॥ यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ॥ यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ २९ ॥

अन्यस्मिन्नप्यभ्युदयार्थे कर्मणि यत्कृतं स्नानादिसाधनं तदनश्वरमिति पूर्वेणैवान्वयः । तत्र जायायाः संस्कारः पूंसवनादिः अपत्यसंस्कारो जातकर्मादिः आत्मनः स्वस्य संस्कारो यज्ञोपवीतादिः ॥ २६ ॥ अथेति अर्द्धं स्पष्टम् ॥ २७ ॥ सर्वे इति सार्द्धम् ॥ यत्र सत्पात्रं लभ्यते स देशः पुण्यतमः यत्र सर्वमेतच्चराचरं जगत् तिष्ठति तद्भगवतो बिम्बं मूर्तिर्यत्र लभ्यते स देशः पुण्यतमः । यद्वा । यत्र यस्मिन्नेतच्चराचरमस्ति तस्य भगवतो बिम्बरूपं सत्पात्रं यत्र लभ्यते स पुण्यतमो देशः यत्र च तपोविद्यादयान्वितं ब्राह्मणकुलं सोपि देशः पुण्यतमः स्वल्पसाधनानुष्ठानेन महापुण्यकरो देशः अत्र चक्रवर्ती सन् साधुश्चासौ पात्रं च तच्च कीदृशम् यत्र चराचरमेतज्जगत् तस्य भगवतो बिम्बं बिम्बतुल्यमित्यर्थः । प्रतिमा हि प्रतिबिम्बरूपा इति तस्याः सकाशादपि भक्तस्योत्कर्ष इत्याह ॥ २८ ॥ यत्रेति ॥ यत्र यत्र हरेरर्चा पूजा आराधनं भवति भक्तास्तिष्ठति अर्चा शालग्रामादिप्रतिमा वा यत्र च पुराणेषु प्रसिद्धा गङ्गादयो नद्यः संति स देशः श्रेयसां पुण्यानुष्ठानानां पदं स्थानम् ॥ २९ ॥

सरांसीति सार्द्धचतुष्कम् ॥ पुष्करादीनि सरांसि अर्हैः मुन्यादिभिराश्रितानि क्षेत्राणि कुरुक्षेत्रं गयाशिरः गयपतनस्थानगयासुरशिरः यागः गङ्गायमुनयोः सङ्गस्थानं पुलहाश्रमः सालग्रामक्षेत्रं नैमिषं फाल्गुनं सेतुः श्रीरामनिबद्धः सेतुः प्रभासः शङ्खोद्धारतीर्थविशेषः कुशस्थली द्वारवती वाराणसी काशी मधुपुरी मथुरा पम्पाख्यं सरः बिन्दुसरः कर्दमाश्रमः नारायणाश्रमः नन्दा नदी सीताया रामस्य चाश्रमश्चित्रकूटाद्रिरादिर्येषां ते द्वयोः पृथग्ग्रहणं वियोगकालाभिप्रायेण हे राजन् महेन्द्रादयश्च ये सर्वे कुलाचलाः श्रेष्ठपर्वतास्ते हरेरर्चा स्थिरप्रतिमा श्रीजगन्नाथादि तदाश्रिता उत्कलादयः बिम्बं भगवतो यत्रेति यत्र यत्र हरेरर्चेति हरेरर्चा श्रिताश्चेति त्रिरुक्तिर्देशानां पुण्यजनकत्वे भगवन्मूर्त्तेः प्राधान्यद्योतनार्था श्रेयस्कामः पुमान् अभीक्ष्णशः पुनः पुनरेतानेव देशान्नितरां सेवेत तत्र हेतुमाह—धर्मइति ॥ पुंसां यत्फलसाधनत्वेन यो धर्म उदितः स हि यस्मात् अत्र एषु देशेषु ईहितः अनुष्ठितः सहस्रगुणमाधिकस्य फलस्योदयो यस्मात् तादृशो भवति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ पात्रमिति ॥ हे उर्वीश पात्रवित्तमैः कविभिः

सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत॥ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः॥३०॥नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली॥वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥३१॥ नारायणाश्रमो नन्दा सीतारामाश्रमादयः ॥ सर्वे कुलाचला राजन्महेन्द्रमलयादयः ॥३२॥ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ॥ एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ॥३३॥ हरिरेवैक उर्वीश यन्मयं वै चराचरम् ॥ पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः॥३४॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ॥ राजन्यदग्रपूजायां मतःपात्रतयाच्युतः ॥३५॥ जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ॥ तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥३६॥ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ॥ शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ॥३७॥ तेष्वेषु भगवान्राजंस्तारतम्येन वर्तते॥तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते॥३८॥

विवेकिभिरेको हरिरेवात्र लोके पात्रं निरुक्तं पात्रतया सर्वपूज्यतया निर्णीतः वै यतः चराचरं सर्वं विश्वं यन्मयमेवेत्यर्थः ॥ ३४ ॥ तत्रहेतुः—देवेति ॥ हे राजन् देवेषु ऋषिषु अर्हत्सु तपोयोगादिसिद्धेषु ब्रह्मात्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीयराजसूये यत् यस्मात् पात्रतयाऽग्रपूजायामच्युतः श्रीकृष्ण एवमतः सर्वसंमतो जातः ॥ ३५ ॥ जीवेति ॥ जीवानां राशिभिराकीर्णः व्याप्तोयं महान् ब्रह्माण्डकोष एवाङ्घ्रिपो वृक्षस्तस्य मूलत्वादच्युतेज्यैव सर्वजीवानामात्मनश्च तर्पणं पूजा भवति ॥ ३६ ॥ एतदेव पुरुषनामनिरुक्त्या द्रढयति—पुराणीति ॥ अनेन भगवता मनुष्यादिशरीरात्मकानि पुराणि सृष्टानि तेषु पुरेषु हि यस्मात् जीवरूपेणान्तर्यामिरूपेण च स्वयमेव शेते तस्मादसौ पुरुष इति प्रसिद्धः ॥ ३७ ॥ तेष्विति ॥ हे राजन् तेषु एषु देवमनुष्यतिर्यगादिषु तारतम्येन अधिकन्यूनभावेन वर्तमानो भगवान् तिर्यगादिभ्यः पुरुषे आधिक्येन वर्तते तस्मात् पुरुषः पात्रं तत्रापि यत्र यत्र यथा यथा तप आधिक्ययोगे यावानात्मज्ञानवैराग्याद्यंशः यथा यथा तपआदियोगेन यत्र यत्र ईयते प्रतीयते तत्र तत्र तथा तथाऽसौ पात्र-

मिति मन्तव्यमित्यर्थः । तथाच श्रुतिः "पुरुषत्वे चाविस्तरामात्माइत्यादि"॥३८॥ दृष्ट्वेति ॥ हे नृप त्रेतादिषु कालेषु तेषां नृणां मिथोवज्ञानं तिरस्कारस्तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा परस्परसन्मानाभावेन भगवदाराधनाभावान्न कोपि पुरुषार्थः । सिद्ध्येदिति हरेः क्रियायै पूजार्थं कविभिरर्चा प्रतिमा कृता कल्पिता ॥ ३९ ॥ तत इति ॥ ततश्च केचित् संश्रद्धाय श्रद्धां कृत्वार्चायां महत्या सपर्यया पूजासामग्र्या हरिमुपासते तत्रापि पुरुषद्विषां पुरुषद्वेषिणां तैरुपास्ता आराधितापि इडभाव आर्षः। प्रतिमानार्थदा पुरुषार्थदा न भवति पुरुषेषु द्वेषं हित्वाऽर्चिता सती सापि मन्दाधिकारिणां पुरुषार्थदा भवत्येव ॥४०॥पुरुषेष्वपि जात्या तपआदिभिश्च श्रैष्ठ्यमाह–पुरुषेष्वपीति ॥ पुरुषेष्वपि यस्तपसा विद्यया विचारेण तुष्ट्या दैवलब्धसंतोषेण च हरेस्तनुं वेदं धत्ते तं ब्राह्मणं सुपात्रं विदुः ॥ ४१ ॥ नन्विति ॥ ननु निश्चयेन हे राजन् स्वपादरजसा त्रिलोकीं पुनन्तः पवित्रीकुर्वतो ब्राह्मणाः जगदात्मनः श्रीकृष्णस्यापि महद्दैवतं किमुतान्येषामस्मद्विधानां ते दैवतमिति वक्तव्यमित्यर्थः ॥ ४२ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥

दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप ॥ त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ३९ ॥ ततोऽर्चायां हरिं केचित् संश्रद्धाय सपर्यया ॥ उपासत उपास्तापि नार्थदा पुरुषद्विषाम् ॥४०॥ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ॥ तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥४१॥ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः ॥ पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४२ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे सदाचारनिर्णये चतुर्दशोऽध्यायः ॥ १४ ॥ नारद उवाच ॥ कर्मनिष्ठा द्विजाः केचित् तपोनिष्ठा नृपापरे ॥ स्वाध्यायेऽन्ये प्रवचने ये केचिज्ज्ञानयोगयोः ॥ १ ॥ ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ॥ दैवे च तदभावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ॥ भोजयेत् सुसमृद्धोपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥

गंगासहायोरचयत्सप्तमस्य चतुर्दशे ॥१४॥ पंचदशे सर्ववर्णाश्रमाणां धर्मसंग्रहः ॥ मोक्षकारणमप्यत्र श्लोका भूमिर्गजा मताः ॥ अनुष्टुभः पंचनगा उवाचेति द्वयं मतम् ॥१५॥ अथ सर्वेषां मोक्षधर्माणां सारसंग्रहार्थमध्यायारम्भः–कर्मेति ॥ हे नृप द्विजाः त्रैवर्णिकाः केचित् गृहस्थाः स्ववर्णाश्रमोचितकर्मनिष्ठाः केचित् वानप्रस्था अनशनादितपोनिष्ठाः अपरे ब्रह्मचारिणः स्वाध्यायाध्ययने प्रवचने अध्यापने च परिनिष्ठिताः केचन संन्यासिनो ज्ञानयोगयोः परिनिष्ठिताः ज्ञानं यथार्थात्मज्ञानं योगो भगवद्ध्यानम् ॥ समासान्तर्वर्तिनोप्यर्थवशादनुवर्त्तितेन निष्ठापदेन निष्ठावन्तो लक्ष्यन्ते सर्वेषु यथोत्तरं श्रेष्ठ्यं ज्ञेयम् ॥ १ ॥ ज्ञानेति ॥ दत्तस्यानन्त्यं पितॄणामात्मनश्च मोक्षरूपं वा फलमिच्छता पुरुषेण कव्यानि पितॄनुद्दिश्य श्राद्धादीनि तथा दैवे च कर्माणि देवानुद्दिश्य हव्यानि द्रव्याणि वा ज्ञाननिष्ठाय देयानि तस्य ज्ञाननिष्ठस्याभावे इतरेभ्यः कर्मनिष्ठादिभ्यो यथार्हतः यथायोग्यं ज्ञानादितारतम्यानुसारेण देयानि ॥ २ ॥ द्वाविति ॥ सुसमृद्धोपि दैवे विश्वेदेवस्थाने द्वौ ब्राह्मणौ भोजयेत् पितृकार्ये पितॄनुद्दिश्य त्रीन् ब्राह्मणान् भोजयेत्

उभयत्र द्वयोरपि कार्ययोरेकैकं वा ब्राह्मणं भोजयेत् श्राद्धे विस्तरं भोक्तृबाहुल्यं न कुर्यात् धनभाव आर्षः ॥ ३ ॥ तत्रहेतुः—देशेति ॥ स्वजनार्पणात् जामातानिमन्त्रितश्चे- तद्भ्रात्रादयः कथं वर्ज्या इत्येवं प्राप्ताद्विस्तरात् देशकालौ प्रागुक्तौ उचिता श्रद्धा तदुत्साहः उचितं द्रव्यमन्नवस्त्रादिपात्रं प्रागुक्तम् अर्हणं पूजनं तान्येतानि विस्तरात्सम्यक् यथायोग्यं न भवति ॥ ४ ॥ देशे इति ॥ पुण्यदेशे पुण्यकाले च संप्राप्ते मुन्यन्नमारण्यं नीवारादिहरिदैवतं हरये निवेदितं सत् श्रद्धया उत्साहेन विधिवत्सत्कारपूर्वकं पात्रे बुभुक्षिते न्यस्तं सकामं प्रतिकामधुक् मनोरथपूरकं निष्कामं प्रति तु अक्षयमक्षयमोक्षफलकं भवति ॥ ५ ॥ देवेति ॥ देवादिभ्यः आत्मने स्वजनाय स्वबन्धुवर्गाय च स्वान्नं विभजन् तद्देवादिकं सर्वं प्राणिजातं पुरुषात्मकं भगवत्स्वरूपं पश्येत् ॥ ६ ॥ नेति ॥ धर्मस्य तत्वं यथार्थस्वरूपं वेत्तीति तथा विद्वान् श्राद्धे पित्राद्युद्देशेन आमिषं मांसं न दद्यात् नच मांसं स्वयमप्यद्यात् अश्नीयात् मुन्यन्नैर्हिंसारहितैः यथा पित्रादीनां भगवतश्च परा उत्कृष्टा प्रीतिः स्यात् तथा पशुहिंसया न स्यात् ॥ ७ ॥ नेति ॥ यः सर्वभूतेषु

देशकालोचिता श्रद्धा द्रव्यपात्रार्हणानि च ॥ सम्यग् भवन्ति नैतानि विस्तरात् स्वजनार्पणात् ॥ ४ ॥ देशे काले च संप्राप्ते मुन्यन्नं हरिदैवतम् ॥ श्रद्धया विधिवत् पात्रे न्यस्तं कामधुगक्षयम् ॥ ५ ॥ देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ॥ अन्नं संविभजन् पश्येत् सर्वं तत्पुरुषात्मकम् ॥ ६ ॥ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैः स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ॥ न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य सः ॥ ८ ॥ एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥ द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ॥ एष माऽकरुणो हन्याद- तज्ज्ञो ह्यसुतृप् ध्रुवम् ॥१०॥ तस्माद् दैवोपपन्नेन मुन्यन्नेनापि धर्मवित् ॥ संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ॥११॥ विधर्मः परधर्मश्च आभास उपमा छलः ॥ अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेत् ॥ १२ ॥

मनोवाक्कायजन्यस्य दण्डस्य हिंसादिपीडायास्त्यागः संन्यासो धर्मश्च तमुत्कृष्टं धर्ममिच्छतां नृणामेतादृश उत्कृष्टः परो धर्मो नास्ति ॥ ८ ॥ अत एवोत्तमाधिकारिणो बाह्यानि कर्माणि त्यजन्तीत्याह—एक इति ॥ अनीहा निष्कामा एके केचित् ज्ञानिनो धर्मरहस्यं जानन्तः यज्ञवित्तमाः यज्ञयाथात्म्यविदः कर्ममयान् पशुपुरोडाशादिद्रव्यकान् यज्ञान् ज्ञानदीपिते आत्मस्फूर्तिमति आत्मनो मनसः संयमनं वशीकारस्तस्मिन् योगाग्नौ जुह्वति मनो नियम्यैतस्यान्तरायतया त्यजन्ती ॥ ९ ॥ द्रव्येति ॥ पशुपुरोडाशादिद्रव्ययज्ञैर्य- क्ष्यमाणं पुरुषं दृष्ट्वा भूतानि पश्वादीनि कर्तॄणि एषः यष्टा अकरुणः निर्दयः अतज्ज्ञः धर्मरहस्यानभिज्ञः असुतृप् स्वप्राणपोषकः एष मा मां ध्रुवं हन्यात् इति बिभ्यति ॥ १० ॥ तस्मादिति ॥ सर्वत्र सन्तुष्टः भूतान्यहिंसन्नित्यर्थः । शेषं स्पष्टम् ॥ ११ ॥ विधर्म इति ॥ यत इमाः पञ्चविधर्मादयः अधर्मवृक्षस्य शाखाभूतास्ततो धर्मज्ञः अधर्मवत्

साक्षान्निषिद्धवत् त्यजेत् उपमा उपधर्मः ॥१२॥ ता व्याचष्टे—धर्मबाध इति ॥ धर्मबुद्ध्यापि यस्मिन् क्रियमाणे स्वधर्मस्य बाधः स्यात् सः वामाचारादिर्विधर्म इत्यर्थः । अन्यस्य क्षत्रियादेश्चोदितो विहितो यो धर्मः युद्धादिः सोऽन्यस्य ब्राह्मणादेः परधर्म इत्यर्थः । उपमेत्यस्यानुवादः उपधर्मस्त्विति तस्य व्याख्यानम् पाखण्डः वेदविरुद्धागमोक्तो धर्मः दम्भो वा परवञ्चनार्थो वा धर्मः उपधर्म इत्यर्थः । शब्दस्य भित् भेदः अन्यथा व्याख्यानं यस्मिन् सः छलः स्यात् यथा दशावरान्भोजयेदित्युक्ते विवक्षितं बहुव्रीहिं त्यक्त्वा तत्पुरुषेण दशसंख्याकेभ्योऽवरान् नवाष्टादीन् इति शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा यथा गां दद्यादित्युक्ते मरिष्यन्त्या गोर्दानम् ॥१३॥ यस्त्विति ॥ यस्तु पुंभिः स्वेच्छया चतुर्भ्य आश्रमेभ्यः पृथगवधूताद्याश्रमः कल्पितः स आभासः तस्मात् ब्राह्मणत्वादिस्वभावेन विहितो यः पूर्वोक्तोऽध्ययनयागादिर्धर्मः स कस्य प्रशान्तये दुःखविनाशाय नेष्टः न समर्थः अपि तु स एव तत्र समर्थ इत्यर्थः । कल्पतेस्योपशान्तये इति तु पाठान्तरम् ॥१४॥ धर्मेति ॥ अधनो निर्द्धनः पुमान् स्वधर्मार्थं यात्रार्थं स्वदेहधारणार्थं वापि धनं नेहेत नेच्छेत् धनार्थं न चेष्टेतेति वार्थः । अनीहमानस्य देहयात्रार्थं धनार्थमपि चेष्टामकुर्वतः पुंसः महाहेः अजगरस्य अनीहा क्रियानिवृत्त्युपलक्षितदै-

**धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः ॥ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥ १३ ॥ यस्त्विच्छया कृतः पुंभिराभासो ह्याश्रमात् पृथक् ॥ स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥ १४ ॥ धर्मार्थमपि नेहेत यात्राऽर्थं वाऽधनो धनम् ॥ अनीहानीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥ संतुष्टस्य निरीहस्य स्वात्मारामस्य यत् सुखम् ॥ कुतस्तत् कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥ सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥१७॥ संतुष्टः केन वा राजन् न वर्तेतापि वारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते जनः ॥ १८ ॥ असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ॥ स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥**

वशब्दवाच्यं प्रारब्धमेव वृत्तिदा जीविकासंपादिकेत्यर्थः । यथा अनीहमानस्याप्यजगरस्यानीहैव यथा जीविकासंपादिका भवति तथेत्यर्थः ॥१५॥ संतुष्टस्येति ॥ दैवलब्धेन संतुष्टस्य अत एव निरीहस्य निरुद्यमस्य निष्कामस्य वा स्वात्मारामस्य यत्सुखं भवति तत्सुखं काम्यन्ते इति कामाः शब्दादयो विषयास्तल्लोभेन दश दिशः प्रति धावतो भ्राम्यतः पुंसः कुतः स्यात् ॥ १६ ॥ सदेति ॥ सदा सन्तुष्टमनसो जनस्य सर्वा दिशः सर्वे देशाः सुखमयाः सुखप्रचुरा एव ङीबभाव आर्षः । यथा उपानहौ पादयोर्यस्य तस्य शर्कराकण्टकादिभ्यः शिवम् व्यथाभावः तथा ॥ १७॥ संतुष्ट इति ॥ हे राजन् संतुष्टो जनः वारिमात्रेणापि केन हेतुना न वर्तेत अपितु वारिणापि वर्ततैव। यद्वा । दैवलब्धेन संतुष्टो जनः केन वा न वर्त्तेत अपितु वारिणापि वर्तेत औपस्थ्यजैह्व्यकार्पण्यात् उपस्थजिह्वाजन्यसुखार्थदैन्यान्निमित्तात् जनः गृहपालायते गृहपालः श्वाः तद्वदाचरतीत्यर्थः ॥ १८ ॥ असंतुष्टस्येति ॥ असंतुष्टस्य विप्रस्येन्द्रियाणां लौल्येन विषयासक्त्या तेज आदयः स्रवन्ति क्षीयन्ते ज्ञानं विवेकश्चावकीर्यतेऽपगच्छत्येवेत्यन्वयः ॥१९॥

कामस्येति ॥ अन्नजलविषयककामस्यान्तं क्षुत्तृड्भ्यां निवृत्ताभ्यां याति । यद्वा । स्रक्चन्दनवनितादिविषयस्य कामस्यान्तं क्षुत्तृड्भ्यामुत्पन्नाभ्यां याति ताभ्यां व्याप्तस्यान्नोदकव्यतिरिक्तविषयककामाभावात् क्रोधस्याप्यन्तमेतस्य क्रोधस्य यत्फलं परपीडादिरूपं तस्योदयान्निष्पत्तेः जनो याति लोभस्यान्तं तु दिशो जित्वापि भुवो भुक्त्वापि जनो नैव याति ॥ २० ॥ पण्डिता इति ॥ हे राजन् बहवः पण्डिताः शास्त्रज्ञाः बहुज्ञाः बहुविधलौकिकाभिज्ञाः अत एव परस्यापि संशयान् छिन्दन्तीति तथा अत एव सदसः सभायाः पतयोऽप्येके जनाः असन्तोषाद्धेतोरधो नरके पतन्ति असन्धिरविवक्षणात् ॥२१॥ कामादिजयोपायमाह—असंकल्पादिति ॥ असंकल्पात् भोग्यहेता बुद्धिवर्जनात् कामं विषयस्पृहां जयेत् । यद्वा । स्त्रीविषयकसंकल्पवर्जनात्कामं जयेत् क्रोधं तु कामविवर्जनात् जयेत् कामस्य क्रोधहेतुत्वात् कामाभावे क्रोधासंभवात् लोभं त्वर्थस्य तत्तत्पदार्थस्यानर्थेक्षया अनर्थहेतुत्वानुसंधानेन जयेत् भयं तु तत्वावमर्शनात् "नैनं छिन्दन्ति शस्त्राणि" इत्याद्यात्मतत्वविचारादद्वैतानुसन्धानाद्वा जयेत् ॥ २२ ॥ आन्वीक्षिक्येति ॥ आन्वीक्षिक्या आत्मानात्मविवेकेन शोकमोहौ जयेत् आत्मनोऽजातत्वेन विनाशाभावात् अनात्मनो देहादेर्जातत्वेन विनाशस्यावश्यकत्वादुभयत्रापि न

**कामस्यान्तं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ॥ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥ पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः ॥ सदसस्पतयोऽप्येके असंतोषात् पतन्त्यधः ॥ २१ ॥ असंकल्पाज्जयेत् कामं क्रोधं कामविवर्जनात् ॥ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ २२ ॥ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया ॥ योगान्तरायान् मौनेन हिंसां कायाद्यनीहया ॥ २३ ॥ कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ॥ आत्मजं योगवीर्येण निद्रां सत्वनिषेवया ॥ २४ ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥ एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत ॥ २५ ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥ २६ ॥**

शोकमोहावकाश इति भावः । दम्भं तु परप्रतारणात्मकं महतां सात्विकानामुपासया सेवया जयेत् योगस्यान्तरायान् विघ्नभूतान् वृथा लौकिकवार्तादिकांस्तु मौनेन तूष्णींभावेन जयेत् कायाद्यनीहया धर्मकामार्थदेहादिचेष्टाराहित्येन हिंसां जयेत् ॥ २३ ॥ कृपयेति ॥ भूतजं येभ्यो भूतेभ्यः स्वस्य दुःखमुत्पत्स्यते तेष्वेव कृपया हिताचरणेन जयेत् दैवं देवोपसर्गनिमित्तं दुःखं समाधिना प्रारब्धजमिदमनिवार्यमिति मनः समाधानेन जह्यात् त्यजेत् आत्मजं देहजं व्याध्यादिरूपं योगवीर्येण प्राणायामादिबलेन जयेत् निद्रां सत्वनिषेवया सात्विकाहारादिनियमेन जयेत् ॥२४॥ रज इति ॥ रजस्तमश्च सत्वेन जयेत् सत्वं च उपशमेन आसक्तिराहित्येन जयेत् एतत्कामादिकं गुरौ भक्त्या पुरुषोऽञ्जसा अनायासेनैव साधनसंपत्त्या जयेत् ॥ २५ ॥ यस्येति ॥ यस्य पुरुषस्य साक्षाद्भगवद्रूपे ज्ञानरूपदीपप्रदे गुरौ मर्त्यासद्धीः अस्मत्सदृशो मर्त्य एवासावित्यसती बुद्धिस्तस्य श्रुतं शास्त्राध्ययनादिकं सर्वं कुञ्जरशौचवत् यथा कुञ्जरस्य स्नानं पुनर्धूलिप्रक्षेपेण कृतमप्यकृतवद्व्यर्थं भवति तथा व्यर्थमिति ॥ २६ ॥

ननु गुरोरपि पुत्रादयस्तं नरमेव मन्यन्ते तत्राह—एष इति ॥ यथा एष श्रीकृष्णः प्रधानपुरुषयोरीश्वरो नियंता अत एव योगेश्वरैरप्यस्मदादिभिर्विमृग्यौ ध्येयावङ्घ्री पादौ यस्य स साक्षाद्भगवानेव तथापि तत्स्वरूपानभिज्ञोयं लोकः एनं नरं मन्यते तथैव गुरुरपि भगवानेवेति ॥ २७ ॥ षड्वर्गेति ॥ सर्वा अपि नियमचोदना इष्टापूर्तादिविषयः विधिभिरनुष्ठापिता धर्माः पञ्च ज्ञानेन्द्रियाणि मनश्चैकमिति षड्वर्गस्तस्य यः संयमो वशीकारस्तस्मिन्नेवैकस्मिन्नन्तो यासां तदेकपरा इत्यर्थः । ततस्तास्तदन्ताः तदेकपराः सत्योपि यदि योगान् भगवद्धारणाध्यानसमाधीन् नो आवहेयुः न साधयेयुस्तर्हि केवलं श्रमावहाः श्रमफला एव जाता इत्यर्थः ॥ २८ ॥ यथेति ॥ हीति प्रसिद्धौ यथा वार्तादयः कृष्यादयः अर्थास्तत्फलानि च योगस्यार्थं मोक्षं न बिभ्रति न साधयन्ति अतोऽनर्थाय संसारायैव भवेयुः जीवनहेतवोपि परमार्थसाधका न भवन्ति तथा असतो भगवद्विमुखस्य पूर्तमिष्टं च तदादयोपि लोकप्रसिद्धिहेतवोपि परमार्थसाधका न भवन्ति ॥ २९ ॥ य इति ॥ यश्चित्तस्य विजये यत्त उद्युक्तः स्यात्स निःसङ्गः स्यात्कुटुम्बादि परित्य-

एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ योगेश्वरैर्विमृग्याङ्घ्रिर्लोको वै मन्यते नरम् ॥ २७ ॥ षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः ॥ तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥ २८ ॥ यथा वार्त्तादयो ह्यर्था योगस्यार्थं न बिभ्रति ॥ अनर्थाय भवेयुस्ते पूर्तमिष्टं तथासतः ॥ २९ ॥ यश्चित्तविजये यत्तः स्यान्निःसङ्गोऽपरिग्रहः ॥ एको विविक्तशरणो भिक्षुर्भिक्षामिताशनः ॥ ३० ॥ देशे शुचौ समो राजन् संस्थाप्यासनमात्मनः ॥ स्थिरं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१॥ प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः ॥ यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यतो यतो निःसरति मनः कामहतं भ्रमत् ॥ ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः॥ ३३॥ एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः ॥ अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥

जेत् तथा अपरिग्रहः स्यात् तथा एक एव विविक्तशरणः एकान्तवासी स्यात् तथा भिक्षुः सन्नपि भिक्षया प्राप्तमपि मितमशनं यस्य तथा स्यात् ॥ ३० ॥ देश इति ॥ हे राजन् शुचौ शुद्धे समे अनिम्नोन्नते च देशे चैलाजिनकुशोत्तरमित्युक्तविधमात्मनः आसनं संस्थाप्य कल्पयित्वा ऋज्वङ्गः ऋजु अवक्रमङ्गं यस्य स ऋजुकायः सन् तस्मिन्नासने स्थिरं चाञ्चल्यरहितं समं सुखं च यथा स्यात्तथा ओमित्युच्चारयन्नासीत ॥ ३१ ॥ प्राणेति युग्मम् ॥ पूरकुम्भकरेचकैः प्राणापानौ वायू सम्यक् निरुन्ध्यात् प्राणेनापानाभिभवः पूरकः अपानेन प्राणाभिभवो रेचकः उभयोः समानभावः कुम्भक इति विवेकः । यावन्मनः कामान् शब्दादीन् विषयान् त्यजेत् तदनुसन्धानरहितं भवेत् तावत्स्वस्य नासाया अग्रे निरीक्षणं यस्य नासाग्रं निरीक्षमाणः बुधः कामैः विषयैश्चिन्तितैर्हतमाकृष्टमत एव भ्रमन्मनः यतो यतो निःसरति यं यं विषयं विषयीकरोति ततस्ततो विषयान्मन उपाहृत्य शनैर्हृदि रुन्ध्यात् ॥ ३२ ॥३३॥ एवमिति ॥ एवमनिशं निरन्तरमभ्यसतस्तस्य यतेश्चित्तमल्पीयसैव कालेन अनिन्धनवह्निवत् निर्वाणं बहि-

वृत्तिराहित्यं याति यथा निरिन्धनो वह्निर्ज्वालाधूमादिबहिर्वृत्तिरहितोऽङ्गाररूपेणावशेषितो भवति तथेत्यर्थः ॥ ३४ ॥ कामेति ॥ यत् चित्तं कामाः विषयाः तदादिभिरना-विद्धमक्षुभितं प्रशान्ता अखिला वृत्तयो यस्य तादृशं सत् पश्चात् ब्रह्मसुखेन स्पृष्टं तस्माच्चित्तं पुनः कर्हिचिदपि नैवोत्तिष्ठेत तं विहाय बहिर्वृत्तिर्नैव स्यादित्यर्थः ॥ ३५ ॥ य इति ॥ त्रयाणां धर्मादीनां वर्गः आसमंताद्रुप्यते यस्मिंस्तस्माद्गृहात् यो भिक्षुः पूर्वं प्रव्रज्य संन्यासं कृत्वा पुनर्यदि तानेव धर्मादीन् सेवेत स वै वान्ताशी छर्दितभोजी अपत्रपो निर्लज्जश्च ॥ ३६ ॥ दृष्टं चैतदित्याह—यैरिति ॥ यैः स्वदेहः अनात्मा आत्मा न भवति भौतिकत्वादत एव मर्त्यो मरणधर्मा मरणानन्तरं च केनचिद्भक्षितश्चेद्विड् भवति नोचेत्कृमिर्भवति दग्धश्चेद्भस्म भवतीत्येवं पूर्वं स्मृतश्चिन्तितः त एवासत्तमाः मूर्खाः पुनरेनमात्मसात् कृत्वा आत्मेति मत्वा श्लाघयन्ति स्तावयन्ति ॥ ३७ ॥ गृहस्थस्येति युग्मम् ॥ यो गृहस्थस्य स्ववर्णाश्रमोचितक्रियात्यागः यश्च बटोर्ब्रह्मचारिणः गुरुकुलवासादिव्रतत्यागः या च तपस्विनो वानप्रस्थस्य ग्रामसेवा पुनर्ग्रामनिवासः या च

**कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ॥ चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥ ३५ ॥ यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावप-नात् पुनः ॥ यदि सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः ॥ ३६ ॥ यैः स्वदेहः स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ॥ त एनमा-त्मसात् कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥ ३७ ॥ गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि ॥ तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौ-ल्यता ॥ ३८ ॥ आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥ आत्मानं चेद्विजानीयात् परं ज्ञानधुताशयः ॥ किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून् मन इन्द्रिये-शम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ ४१ ॥**

भिक्षोः संन्यासिनः इन्द्रियलौल्यता विषयेष्वासक्तिः लोलशब्दात्स्वार्थेष्यञ् ततस्तल् । तान् क्रियात्यागादीन् ये कुर्वन्ति ते एते स्वधर्मत्यागिनः खलु निश्चयेन आश्रमा-पसदाः आश्रमस्थेषु निकृष्टाः हि यतः आश्रमविडम्बकाः केवलमाश्रमस्थानेवान्यान् विडम्बयन्त्यनुकुर्वन्ति नतु तद्धर्मं पालयन्तीति देवस्य भगवतो मायया विमूढान् मोहि-तान् तान् अनुकम्पया उपेक्षेत ॥ ३८ ॥ ३९ ॥ नन्वात्मज्ञस्य भिक्षोरिन्द्रियलौल्येपि को दोषस्तत्राह—आत्मानमिति ॥ आत्मानं चेत् यदि परं ब्रह्म विजानीयात् तर्हि तेन ज्ञानेन धुता निरस्ता आशया वासना यस्य स यतिः कस्य वा हेतोः किं सुखमिच्छन् लम्पटः विषयासक्तः सन् देहं पुष्णाति न पुष्णात्येवेत्यर्थः । तथा चेन्द्रियलौल्यत्वे आत्मज्ञ-त्वमेव न संभवति ज्ञानिनस्तु इन्द्रियलौल्यं न संभवतीति भावः ॥ ४० ॥ अत इन्द्रियलौल्यपरिहाराय सदा तत्वज्ञाने यतनीयमितीममर्थमाह—आहुरिति ॥ ईशसृष्टमिति यथायोग्यं विभक्तिपरिणामेन शरीरादीनां सर्वेषां विशेषणम् । शरीरं रथमाहुः इन्द्रियाणि हयान् अश्वानाहुः इन्द्रियाणामीशं नियन्तृ मनः अभीषून् रश्मीनाहुः मात्राशब्दा-

दीन् वर्त्मानि गन्तव्यदेशानाहुः धिषणां बुद्धिं सूतं सारथिमाहुः सत्वं चित्तं बृहत् देहव्यापि बन्धुरं बंधनमाहुः चित्तं विना ह्यनिबद्धमिव शरीरं भवति ॥ ४१ ॥ अक्षमिति ॥ दशानां प्राणानां समाहारो दशप्राणम् ङीबभाव आर्षः।प्राणादयः पञ्च नागादयश्च पञ्चेति दशकं दशविधं प्राणम् अक्षं पठन्ति अधर्मधर्मौ पुण्यपापे चक्रे पठन्ति धर्माधर्मयोः शरीरप्रवृत्तिहेतुत्वात् अभिमानं देहाद्यभिमानिनं जीवं रथिनं पठन्ति प्रणवमोङ्कारं हितस्य रथिनो धनुः पठन्ति शुद्धं जीवं तु शरं पठन्ति तु शब्देन प्रवृत्तिनिमित्तभेदो न स्वरूपभेद इति सूचयति परं परमात्मानमेव लक्ष्यं पठन्ति यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यते शरस्य लक्ष्ये प्रवेशवज्जीवस्य ब्रह्मणि प्रवेश इत्यंशेन ब्रह्मणो लक्ष्यता वेध्यत्वादिना साम्यं रागादेः ॥ ४२ ॥ राग इति युग्मम् ॥ रजः अभिनिवेशः रागादयः जेतव्याः शत्रवः तत्र केचित् रागादयः रजस्तमसी प्रकृती कारणे येषां ते तथाभूताः क्वचित् आरूढसमाधेः सत्वं प्रकृतिः कारणं येषां ते तथाभूताः परोपकारादयोपि भरतस्य मृगपोतरक्षावच्छत्रवो भवन्तीति ॥ ४३ ॥ ४४ ॥ यावदिति ॥ नृकायरूपं रथमात्मवशः उपकल्प इन्द्रियादिपरिकरो यस्मिंस्तथा भूतं यावज्जनो धत्ते तावदेव गरिष्ठानां गुरूणां चरणयोरर्चना सेवा तया निशातं तीक्ष्णीकृतं ज्ञान-

अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ॥ धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥४२॥ रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ॥ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः॥४३॥रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः॥ रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४॥ यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् ॥ ज्ञानासिमच्युतबलो दध[illegible]शत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात्॥४५॥नो चेत् प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु हि क्षिपन्ति ॥ ते दस्यवः सहयसूतममुं तमोऽन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥ ४६ ॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ आवर्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥

मेवासिं खड्गं दधत् बिभ्रत् अच्युत एव बलं यस्य तादृशः भगवदेकनिष्ठः सन् अस्तशत्रुः रागादिदोषरहितः अत एव उपशान्तचित्तः अत एव स्वाराज्येन परमानन्दलाभेन एव तुष्टः सन्निदं शरीररथादिकं विजह्यात् परित्यजेत् उपेक्षेतेत्यर्थः ॥ ४५ ॥ अच्युताश्रयाभावे बाधकमाह—नोचेदिति ॥ नोचेत् यदि रथिनो बलं न स्यात् पक्षे हरिसंश्रयणजं बलं न स्याच्चेत्तदा प्रमत्तमेनं रथिनं बलाभावे लक्ष्यवेधार्थं रथारोहणं प्रमादः पक्षे भक्त्यभावे मुमुक्षाप्रमादः असन्तो विषयोन्मुखा ये इन्द्रियरूपा वाजिनः अश्वाः बुद्धिरूपः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयरूपेषु दस्युषु क्षिपन्ति ते विषयाख्या दस्यवो हयैः सूतेन च सहवर्तमानममुं प्रमत्तं रथिनमुर्वधिकं [?]तयं यस्मिंस्तस्मिन् अन्धे तमसि अन्धतामिस्रनरकतुल्ये संसाररूपे कूपे क्षिपन्ति ॥ ४६ ॥ ननु वेदविहिते प्रवृत्तिमार्गे चरतः कथमनर्थप्राप्तिस्तत्राह—प्रवृत्तमिति· प्रवृत्तेन कर्मणा तत्फलानुभवाय लोकान्तरं प्राप्य तदनुभूयावशिष्टेन कर्मणा गृहस्थः ततः पुनरिहावर्तते निवृत्तेन कर्मणा तु यतिः अमृतमश्नुते तत्फलं परमानन्दं प्राप्य ततः पुनरि[?] परमा-

शेषं स्पष्टम् ॥ ४७ ॥ हिंस्रमिति युग्मम् ॥ हिंस्रं श्येनादि कर्म पश्वादिहिंसा युक्तं वा अग्निहोत्रादि द्रव्यमयं व्रीह्यादि द्रव्यप्रचुरम् आदिशब्दविवरणमाह दर्शश्च पूर्णिमास्ता-चातुर्मास्यं पशुः पशुयागः सुतः सोमयागः इत्यात्मकं यत्कर्म यच्च हुतं वैश्वदेवं प्रहुतं बलिहरणं च तदेतत्सर्वं वैदिकं कर्म इष्टमित्याख्यं पूर्तं तु सुरालयो देवमन्दिरम् आरामः कूपश्च आजीव्यं प्रपादि च आदिपदेनान्नप्रदानादिलक्षणं यस्य तत् एतदिष्टापूर्तं द्विविधमपि यदि काम्यं कामनया कृतमत एव अशान्तिदं रागाद्यनिवर्तकं तत् प्रवृत्ताख्यं भवति अकाम्यं शान्तिकरं निवृत्ताख्यमित्यर्थाज्ज्ञेयम् ॥ ४८ ॥ ४९ ॥ प्रवृत्तेन कर्मणा आरोहावरोहाभ्यामावृत्तिप्रकारमाह–द्रव्येति युग्मम् ॥ आरोहणे सोपानानि दर्शयति सोमपर्यन्तं तत्र प्रथमं द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देहान्तरारम्भकः येन संपरिष्वक्तो गच्छति य एव श्रुतावपशब्देनोक्तः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति तं प्राप्नोति इति सर्वत्र शेषः । द्रव्यमूष्मविपाकश्चेति पाठे तु द्रव्यशब्देन तेजोमात्राशब्दोक्तानीन्द्रियाणि ऊष्मविपाकशब्देन हृदयाग्रप्रद्योतः तदा च सत्कर्मसाधकानी-न्द्रियाणि प्रथमं प्राप्नोति ततो निर्याणकाले हृदयाग्रप्रद्योतं प्राप्नोति ततो धूममिति क्रमः तथा च श्रुतिः " य इमास्तेजोमात्राः समभ्याददानो हृदयमेवान्वक्रामतीति " । तथा

**हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ॥ दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥ ४८ ॥ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ॥ पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥ द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ॥ अयनं दक्षिणं सोमो दर्श औषधिवीरुधः ॥ ५० ॥ अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ॥ एकैकश्येनानुपूर्वं भूत्वा भूत्वेह जायते ॥ ५१ ॥ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ॥ इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ॥ इन्द्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः ॥ ५२ ॥**

तस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामतीति धूमादिशब्दैस्तत्तदभिमानिन्यो देवता ग्राह्याः ततो धूमः धूमाभिमानिनी देवता तां प्राप्नोति ततो रात्रिः रात्र्यभिमानिनी देवता तां प्राप्नोति ततोपक्षयः अपरपक्षः कृष्णपक्षाभिमानिनी देवता तां प्राप्नोति ततो दक्षिणायनाभिमानिनीं देवतां प्राप्नोति ततश्च सोमो चन्द्रलोकस्तं प्राप्नोति एवं चन्द्रलोकं प्राप्तः भोगान् भुंक्ते अथ तत्र भुक्तभोगस्य ततोवरोहणप्रकारमाह दर्श इति ॥ दर्शशब्देन विपरीतलक्षणया विशिष्टभोगक्षयाच्छोकाग्निना देहलयेनादर्शनमुच्यते । यद्वा । चन्द्रक्ष-यवत्या अमावस्यया देहक्षयो लक्षितः एतदुक्तं भवति भूतसूक्ष्मयुक्तो धूमाद्यातिवाहिकदेवताभिः सोमलोकं प्रापितः तद्भोगावसाने विलीनदेहो वृष्टिद्वारेण ओषध्यादि प्राप्नोति ततोन्नं व्रीह्यादिबीजं प्राप्नोति ततो रेतः प्राप्नोति हे क्ष्मेश पृथ्वीपते इत्येवं भूतः पुनर्भवतीत्यस्मादिति पुनर्भवः पितृयानसंज्ञकः प्रवृत्तकर्ममार्ग उक्तः पुनर्भवत्वमेव स्पष्टयति एकैकश्येन प्रत्येकमानुपूर्व्या उक्तक्रमेण औषध्यादिः भूत्वा भूत्वा तत्तत्सान्निध्यं प्राप्य इह भूमौ जायते ॥ ५० ॥ ५१ ॥ निषेकेति अर्द्धम् ॥ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः एतन्मार्गं प्राप्नोति इति शेषः । स एवात्राधिकारीत्यर्थः । अन्यस्त्विष्टादिकारी अपि एवं जन्म न लभते निवृत्तं कर्माह इन्द्रियेष्विति ज्ञानेन दीप्यन्त इति

ज्ञानदीपास्तेषु ज्ञानेन्द्रियेषु क्रियायज्ञान् इन्द्रियव्यापारान् इष्टापूर्त्तादीन् जुह्वति तन्मात्रतया भावयन्तीत्यर्थः । ऊर्मौ दर्शनादिसंकल्परूपे मनसि इन्द्रियाणि जुह्वति इन्द्रियाणां मनोधीनप्रवृत्तिकत्वात्तन्मात्रतया भावयन्तीत्यर्थः । वैकारिकं विकारयुक्तं मनो वाचि जुह्वति विध्यादिलक्षणया वाचा हि मनः कर्तृत्वादिविकारं भजति नान्यथेति मनोवागात्मतया भावयन्ति ॥ ५२ ॥ वाचमिति ॥ वाचं वर्णानां समाम्नाये समुदाये जुह्वति तद्विशेषरूपत्वात्तन्मात्रतया भावयन्ति तं च वर्णसमुदायं स्वरे अकारादिस्वरत्रया-त्मके ओङ्कारे न्यसेत् जुहुयात् जुह्वति इति तन्मूलकतया तन्मात्रतया भावयन्ति ओङ्कारं बिन्दौ जुह्वति तं बिन्दुं नादे जुह्वति तं तु नादं प्राणे सूत्रात्मनि प्राणसहचारिणि जीवे वा जुह्वति अमुं जीवं महति ब्रह्मणि जुह्वति ॥ ५३ ॥ अथ मुमुक्षोर्गतिहेतुभूतमर्चिरादिमार्गमंशतो दर्शयति—अग्निरिति ॥ अग्न्यादिशब्दास्तत्तदभिमानिदेवतापरास्ताः प्राप्नोतीति पूर्ववत् अत्र क्रमो न विवक्षितः । श्रौतक्रमविरोधात् । दिवा अहः प्राह्णस्तस्यैवान्तः शुक्लः शुक्लपक्षः राका तस्यैवान्तः उत्तरमुत्तरायणं स्वराट् ब्रह्मा एवं ब्रह्मलोकं गतस्य भोगावसाने मोक्षप्रकारमाह—विश्वश्चेति विश्वाख्यः स्थूलोपाधिः स स्थूलं सूक्ष्मे विलाप्य सूक्ष्मोपाधिस्तैजसो भवति सूक्ष्मं कारणे विलाप्य कारणोपाधिः प्राज्ञो भवति

वाचं वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ॥ ओङ्कारं बिन्दौ नादे तं तं तु प्राणे महत्यमुम् ॥ ५३ ॥ अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् ॥ विश्वश्च तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् ॥ ५४॥ देवयानमिदं प्राहुर्भूत्वा भूत्वानुपूर्वशः ॥ आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते॥ ५५॥ य एते पितृदेवानामयने वेदनिर्मिते॥ शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति॥५६॥ आदावन्ते जनानां सद्बहिरन्तः परावरम्॥ ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम्॥५७॥ आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः॥ दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम्॥५८॥

कारणं च सर्वसाक्षित्वेन समन्वयात् साक्षिस्वरूपे विलाप्य तुर्यो भवति तेषां च व्यभिचारिणां साक्ष्याणां लये शुद्ध आत्मा भवति मुच्यत इत्यर्थः ॥ ५४ ॥ देवेति ॥ इदम-र्चिरादिदेवयानं वेदाः प्राहुः यत्र हि उपशान्तात्मा रागादिशून्यचित्तः आत्मयाजी परमात्मोपासकः तत आत्मस्थः आत्मनि तिष्ठन् न निवर्त्तते यथा इतरः अनुपूर्वशः भूत्वा भूत्वा निवर्त्तते तथायं न निवर्त्तते ॥ ५५ ॥ य इति ॥ एते पितृदेवानामयने वर्त्मनी वेदेन निर्मिते । ते धूममभिसंभवन्ति इत्यादिना, ते अर्चिरभिसंभवन्तीत्यादिना च निश्चयेन विविच्य ज्ञापिते । अतः शास्त्रेण चक्षुषा यः पुमान् वेद जानाति स जनस्थो देहस्थोपि न मुह्यति ॥५६॥ तत्र हेतुमाह—आदाविति ॥ जनानां देहानामादौ कारणत्वेन अन्ते अवधित्वेन च यत्सत् तथा बहिर्भोग्यमन्तर्भोक्तृपरमुत्कृष्टमवरमपकृष्टं ज्ञानं बुद्धिः ज्ञेयं बोध्यं वचो नाम वाच्यं रूपं तमोऽप्रकाशः ज्योतिः प्रकाशश्च तत्तु सर्वमयं ज्ञानी स्वयमेव न तस्माद्व्यतिरिक्तं वस्तु किंचिदस्ति येन मुह्येदित्यर्थः ॥ ५७ ॥ ननु तर्हि कथं पृथगर्थस्तस्यापि प्रतीयते तत्राह—आबाधित इति ॥ आबाधितस्तर्कविरोधेन सर्वतो बाधितोपि आभासः प्रतिबिम्बादिर्यथा वस्तुतया यथार्थत्वेन स्मृतः प्रतीतस्तद्वदेव सर्वमैन्द्रियकं विषयं भौतिकत्वादिना प्रतीतमर्थत्वेन यथार्थतया विकल्पितं नतु परया-

र्थतोऽस्ति । दुर्घटत्वात् ॥ ५८ ॥ दुर्घटत्वमाह—क्षितीति ॥ इह क्षित्यादीनां पञ्चभूतानां छाया ऐक्यबुद्ध्यालम्बनरूपं देहादिकं सङ्घातारम्भपरिणामानां मध्ये कतमाप्यन्य-तमापि न भवति न तावत्तेषां पञ्चानां भूतानां सङ्घातो वृक्षाणामिव वनम् । एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः । न ह्येकस्मिन्वृक्ष आकृष्टे सर्वं वनमाकृष्यते नच पञ्चभूतानां विकारः पञ्चभिर्भूतैः आरब्धोऽवयवी अपि शब्दान्न परिणामोपि यतः न पृथक् न चान्वितः।स किं स्वावयवेभ्यः परिणतेभ्यो वा पृथक्, तदन्वितो वा । न तावदत्यन्तं पृथक्, तथा अप्रतीतेः। न चान्वितः, स किं प्रत्यवयवं सर्वोऽप्यन्वेत्यंशेन वा, आद्ये अङ्गुलिमात्रेपि देहबुद्धिः स्यात्, द्वितीये तस्याप्यंशाङ्गीकारे सत्यनवस्था स्यादतो मृषैवेत्यर्थः। ॥ ५९ ॥ देहादीनां मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्यात्वमाह—धातव इति ॥ धारयन्तीति धातवो महाभूतानि तानि च तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युस्ते-षामप्यवयवित्वात् अवयविनश्च निरस्तत्वात्तर्ह्यवयवः सत्यः इति चेत्तत्राह उक्तरीत्या अवयविनि चासति अवयविप्रतीत्यन्यथाऽनुपपत्तिं विना तत्सद्भावे प्रमाणाभावादवयवो-प्यन्ततोऽसन्नेव ॥ ६० ॥ ननु अवयविनोभावे आगमापायिषु बाल्यादिषु सोयं देवदत्त इत्यादि प्रत्यभिज्ञानं न स्यात् तत्राह—यदिति ॥ परमार्थतः वस्तुनः विकल्पे भेदे

क्षित्यादीनामिहार्थानां छाया न कतमापि हि ॥ न संघातो विकारोऽपि न पृथङ् नान्वितो मृषा ॥ ५९ ॥ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ॥ न स्युर्ह्यसत्यऽवयविन्यसन्नवयवोऽन्ततः ॥६०॥ स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः ॥ जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं यथात्मनः ॥ वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ६२ ॥ कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् ॥ अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥ यद् ब्रह्मणि परे साक्षात् सर्व-कर्मसमर्पणम् ॥ मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥

असत्यपि पूर्वपूर्वारोपसादृश्यात् स एवेति भ्रमः स्यात् स चाविद्यानिवृत्तेर्यावत्तावत् पर्यन्तमेव । ननु सर्वस्य मिथ्यात्वे शास्त्रस्य विधिनिषेधकता कथमत आह । यथा स्वप्नमध्ये जाग्रत्स्वापव्यवस्था तथा विधिनिषेधव्यवस्था ॥ ६१ ॥ भावेति ॥ भावाद्वैतादिकं वर्तयन् आलोचयन् मुनिः मननशीलः साधकः स्वानुभूत्या आत्मतत्त्वानुभवेनेह अस्मिन् देह एव वर्तमानः आत्मनः स्वस्य त्रीन्स्वप्नान् जाग्रदादीन् धुनुते निवर्त्तयतीत्यर्थः । यद्वा । वस्तुभेदबुद्धिरेकः स्वप्नः ततस्तत्तदधिकारभेदेन कर्मभेदबुद्धिर्द्वितीयः स्वप्नः ततो मत्कर्मसाधितमेतत्फलं ममैव भोग्यमिति तृतीयः स्वप्नः इति त्रयः स्वप्ना ज्ञेयाः ॥ ६२ ॥ कार्येति ॥ विकल्पस्य कार्यकारणभेदस्य अवस्तुत्वात् हेतोः पटतन्तुवत् तन्तुरेव पट इतिवत् यत्सर्वत्र कार्यकारणयोर्वस्त्वैक्यस्य दर्शनमालोचनं तद्भावाद्वैतमुच्यते॥६३॥यदिति॥ हे पार्थ युधिष्ठिर मनोवाक्तनुभिः कृतानां सर्वेषां कर्मणां परे ब्रह्मणि भगवति यत्साक्षात्फलाभिसंधिमन्तरेणैव समर्पणं तत् क्रियाद्वैतमुच्यते उद्देश्यफलभेदो हि क्रियाभेदे हेतुः फलोद्देशं विनेश्वरार्पणे च तदभावात् क्रियाणामद्वैतं भवतीति भावः ॥६४॥

आत्मेति ॥ आत्मनः स्वस्य जायासुतादीनामन्येषां च स्वसंबन्धरहितानां सर्वदेहिनां स्वार्थस्य वित्तादेः कामस्य भोगस्य च यदैक्यमैक्यभावनेति यावेवार्थकामौ स्वस्य तावेव सर्वेषामेव सर्वेषां देहादीनां पञ्चमहाभूतात्मकत्वेनैक्यात् भोक्तुर्जीवस्य च परमात्मत्वेनाभेदालोचनेन अर्थकामयोर्यदैक्यदर्शनं तद्द्रव्याद्वैतमुच्यते ॥६५॥ उक्तान् आश्रमधर्मान् संक्षिप्याह—यदिति ॥ हे नृप यत् द्रव्यं यस्य पुरुषस्य येनोपायेन यत्र यस्मिन् देशे यस्मिन्काले च यतः सकाशादनिषिद्धं विहितं स्यात् स नरः अनापदि तेनैव विहितो-पायलब्धेन द्रव्येण कार्याणि विहितानि कर्माणि ईहेत कुर्यात् नान्यैरुपायान्तरोपार्जितैर्द्रव्यैः आपत्सु तु न दोषः ॥ ६६ ॥ एतैरिति ॥ हे राजन् एतैः पूर्वोक्तैरन्यैश्च वेदोक्तैः स्वकर्मभिर्भगवति समर्पितैस्तद्भक्तिभाक् तस्य भक्तः सन् गृहे वर्तमानोपि नरोऽस्य कृष्णस्य गतिं लोकं स्वरूपं वा यायात् प्राप्नुयात् ॥ ६७ ॥ एतत्पञ्चाध्यायात्मकं प्रकरणं सर्वसाधारणमुक्तं भक्तस्य तु भक्तिरेव सर्वपुरुषार्थहेतुरिति पाण्डवानेव लक्षीकृत्याह—यथेति ॥ हे नृपदेव यद्वा । नृपैर्देवैश्च सहायभूतैरपि दुस्त्यजात् आपद्गणात् प्रभोः सर्वथा समर्थात् आत्मनः परमात्मनः श्रीकृष्णादेव हेतोः यथा यूयमुत्तरत उत्कर्षेण तरत अडभाव आर्षः । यथाच यस्य पादपङ्करुहयोश्चरणकमलयोः सेवया

आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ॥ यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥ यत् यस्य वा निषिद्धं स्याद् येन यत्र यतो नृप ॥ स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥ एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ॥ गृहेऽप्यस्य गतिं यायाद् राजंस्तद्भक्तिभाङ् नरः ॥ ६७ ॥ यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः ॥ यत्पादपङ्केरुहसेवया भवानहारषीन्निर्जितदिग्गजः क्रतून् ॥६८॥ अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः ॥ नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसंमतः ॥ ६९ ॥ रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ॥ स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरुलम्पटः ॥७०॥ एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ॥ उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥

निर्जिता दिग्गजास्तत्पर्यन्ता जना येन तथाभूतः सन् भवान् क्रतून् राजसूयाश्वमेधादीन् अहार्षीत् कृतवान् अकाराधिक्यमार्षम् । यथा यथावत् तमेव भजतेति शेषः । यद्वा । यथात्वमापद्गणादुत्तीर्णः यथा च क्रतूनहार्षीः तथा श्रीकृष्णादेव तारकात्संसारादप्युत्तरिष्यथेत्यर्थः । यथा त्वम् आपद्गणादुत्तीर्णस्तथान्योपि तद्भक्तिमान्नरस्तत्-कृपया संसारादुत्तीर्य तं प्राप्नुयात् इति शेषः ॥ ६८ ॥ अहमिति ॥ अहं पुरा पूर्वमतीते महाकल्पे गन्धर्वाणां सुसंमतः श्रेष्ठो नाम्ना उपबर्हणः कश्चिद्गन्धर्वोऽभवम् ॥ ६९ ॥ रूपेति ॥ रूपं च पेशलं च सौकुमार्यं च माधुर्यं मञ्जुभाषित्वं च सौगन्ध्यं सुगन्धित्वं च तैः रूपादिभिः प्रियं दर्शनं यस्य सः अत एव स्त्रीणां प्रियतमोतिशयेन प्रीतिविषयः अत एव पुरुलम्पटः तास्वत्यासक्तश्च अत एव नित्यं सर्वदा प्रमत्तोऽभवम् ॥ ७० ॥ एकदेति ॥ एकदा देवानां सत्रे सत्रसंज्ञके यागे तु गन्धर्वाणामप्सरसां च गणाः हरिगा-थोपगायने भगवद्यशोगानार्थं विश्वसृग्भिर्दक्षमरीच्यादिभिरुपहूताः आकारिता जाताः ॥ ७१ ॥

अहमिति सार्धम् ॥ अहं च तत् आह्वानं विद्वान् स्त्रीभिः परिवृतः उन्मत्तः सन् हरिगाथां विनाऽन्यदेव यथेच्छं गायन्नेव तत्र गतः विश्वसृजस्तु तत् आज्ञां विनैव स्त्रैणगानरूपं मे मम हेलनमपराधं ज्ञात्वा ओजसा क्रोधवेगेन शेपुः कृतं हेलनमस्मदवज्ञानं येन सः नष्टा श्रीः शोभा यस्य तथाभूतः सन्नाशु त्वं शूद्रतां याहि ॥ ७२ ॥ तावदिति ॥ तावत् शापेनाहं दास्यां जज्ञे जातः तत्रापि शूद्रजन्मन्यपि ब्रह्मवादिनां विदुषां शुश्रूषणानुषङ्गेण सेवाप्रसङ्गेनाहं ब्रह्मपुत्रतां प्राप्तः ॥ ७३ ॥ धर्म इति ॥ येन धर्मेण गृहस्थोपि न्यासिनां पदवीं गतिमञ्जसा अनायासेनैव इयात् गच्छेत् स गृहमेधीयो गृहस्थसंबन्धी पापनाशनः धर्मस्ते तव मया वर्णितः ॥ ७४ ॥ त्वं तु कृतार्थ एवेति हर्षेण पूर्वोक्तान् त्रीन् श्लोकान् पठति—यूयमिति॥नृलोके जीवसमूहे यूयं भूरिभागाः अतिभाग्यवन्तः यस्मान्मनुष्यलिङ्गं नराकृतिसद्गूढं परं ब्रह्म येषां युष्माकं गृहान् साक्षादावसतीति हेतोः स्वदर्शनादिना लोकं पुनानाः लोकत्रयमपि पवित्रीकुर्वन्तो मुनयोपि येषां युष्माकं गृहान् अभियन्ति सर्वत आगच्छन्ति ॥७५॥ स वा इति ॥ महद्भिर्विमृग्यमन्वेषणीयं यत्

अहं च गायंस्तद्विद्वान् स्त्रीभिः परिवृतो गतः ॥ ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ॥ ७२ ॥ तावद् दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ॥ शुश्रूषयानुषङ्गेण प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥ धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ॥ गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥७४॥ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति ॥ येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥ स वा अयं ब्रह्म महद् विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद् वः खलु मातुलेय आत्मार्हणीयो विधिकृद् गुरुश्च ॥ ७६ ॥ न यस्य साक्षात् भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥ श्रीशुक उवाच ॥ इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ॥ पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥

कैवल्यनिर्वाणसुखं निरुपाधिः परमानंदस्तदनुभूतिः अनुभवरूपं ब्रह्म सोयं खलु प्रसिद्धो नराकृतिर्वो युष्माकं प्रियः प्रीतिविषयः सुहृत् मित्रं हितचिन्तकः मातुलेयः मातुलपुत्रः आत्मा देहवत् स्वाधीनः अर्हणीयः परमेश्वरत्वेनाराधनीयः विधिकृत् आज्ञानुवर्ती गुरुर्हितोपदेष्टा च श्रीकृष्ण एव ॥ ७६ ॥ नेति ॥ यस्य भगवतः श्रीकृष्णस्य रूपं तत्त्वं भवो महादेवः पद्मजो ब्रह्मा तदादिभिरपि धियापि वस्तुतया याथार्थ्येन साक्षान्नोपवर्णितं न विषयीकृतं स एष सात्वतां पतिः भक्तानां पालकः मौनेन मौनपूर्वकध्यानविचारादिना भक्त्या श्रवणादिरूपया उपशमेन इन्द्रियान्तःकरणादिविजयेन पूजितः आराधितोस्माकं प्रसीदताम् । तद्भावः ॥ ७७ ॥ इतीति ॥ इति [illegible] निशम्य श्रीकृष्णप्रेम्णा विह्वलः भरतर्षभो युधिष्ठिरः सुप्रीतः सन् नारदं श्रीकृष्णं च पूजयामास ॥ ७८ ॥

कृष्णेति ॥ पूजितश्च मुनिर्नारदः कृष्णं पार्थं पृथापुत्रं युधिष्ठिरं च उपामन्त्र्य पृष्ट्वा प्रययौ पार्थो युधिष्ठिरः श्रीकृष्णं परं ब्रह्म श्रुत्वा परम॰ थि तो जातः ॥

इतीति ॥ इत्येवं दाक्षायणीनां दक्षकन्यानां वंशास्ते तव मया पृथक् पृथक् प्रकीर्तिताः यत्र वंशे देवादयश्चराचरा लोकाः प्राणिनो ॰ ॥ दैत्यं परा॰

कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ॥ श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥ इति दाक्षायणीनां थग्वंशाः प्रकीर्तिताः ॥ देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे प्रह्लादानुचरिते यु॰ रना- रदसंवादे सदाचारनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तोऽयं सप्तमः स्कन्धः ॥

निर्दहदुग्रमेकं बालं स्वभक्तममृतैरिव सिञ्चदन्यत् ॥ आश्वासयत्सुरगणानपरं भयार्त्तान् नेत्रत्रयं नरहरेर्दिशतात्सुखं वः ॥ १ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् गङ्गासहायश्चरमे सप्तमस्य व्यधादिमाम् ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

---

अयं श्रीमद्भागवतस्य सप्तमः स्कन्धः बून्दीनगरनिवासिपण्डितगङ्गासहायविरचितान्वितार्थप्रकाशिकाख्यव्याख्यासहितः कल्याणनगर्यां श्रीकृष्णदासात्मजेन गङ्गाविष्णुना स्वीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणागारे मुद्रयित्वा प्रकाशितः। चैत्रकृष्णा ११ शकाब्दाः १८२३, संवत् १९५८ ॥



इति अन्वितार्थप्रकाशिकाख्यव्याख्यासहिते

## ॥ श्रीमद्भागवते सप्तमः स्कन्धः ॥

समाप्तः ।